॥ श्रीः ॥

# न्यायभाष्यस्य भूमिका ।

अथेदमुपक्रम्यते श्रीमन्महर्षिगोतमप्रणीतानां न्यायसूत्राणां श्रीमन्महर्षिवात्स्यायनविरचितं भाष्यं मुद्रयित्वा प्रकाशयितुम् । इदं हि कलिकातानगरे द्विवारं मुद्रितमपि मन्ये प्रथममेकमेव पुस्तकमालम्ब्य मुद्रितं तदनु तस्यैव मुद्रितस्य पुस्तकस्य साहाय्येन द्विरमुद्र्यत येन तत्र सम्यक् परिशुद्धिमाप यतः पावधयान्तानुपपत्तेश्च फलाभाव इति सूत्रं सर्वेष्वेव मुद्रितपुस्तकेषु नोपलभ्यते । यतस्तत्त्वजिज्ञासुना च मया कलिकातास्थएशियाटिक सोसाइटीसमाजसंगृहीतं वात्स्यायनभाष्यपुस्तकं समानाय्य दृष्टं तत् खण्डितं शुद्धं च तत्रैव लेखकप्रमादेन प्रदर्शितसूत्रसहितो ग्रन्थभागस्त्रुटितो यन्मूलकता मुद्रणस्य तदपरिशुद्धेश्च तर्क्यते यतश्च श्रीविश्वनाथपञ्चाननकृतगोतमसूत्रवृत्ताविदं सूत्रं पश्यतां भाष्ये चापश्यतां केषां चिद् गुरोपदेशस्यमहाशयानां महान् भ्रमः समपद्यतेति तदीयलेखादवगम्यते । तदेतदालोच्य नानादेशस्थबहुलपुस्तकसाहाय्यकावलम्बनेन सुपरिशुद्धपुस्तकप्रकाशनकामैः काशिकराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षैः श्रीमदार्थर्वेनिससाहिबमहाशयैरादौ पुण्यपत्तनस्थपुस्तकालयस्यमेकं पुस्तकमानायितं परं तु तत्र परिशोधितमिति लेखकानवधानजनितानुपयुक्तासंगतार्थपाठभेदबाहुल्यप्रदर्शनं विद्वद्दायासमात्रफलकं मन्यमानेन मया न सर्वत्रोपयोजितम् । तदनु प्रवृत्ते परिशुद्धपुस्तकान्वेषणे पुरा पुण्यनगरीपरिवृढसभास्तारमुख्यानां प्रसिद्धवैदुषीविभवानां श्रीमेरुशास्त्रिणां काशीनिवासिनां परिशुद्धं संपूर्णं जीर्णं चैकं* पुस्तकमासादितं यत्प्रतिलिपिर्मुद्रणार्थमुपायोज्यत । अपरं चात्रत्यपुस्तकालयप्रधानाध्यक्षपण्डितश्रीविन्ध्येश्वरीप्रसाददत्तं संपूर्णं नातिशुद्धं नातिप्राचीनं च† । अन्यच्च मदीयगुरुवरश्रीराजारामशास्त्रिचरणसब्रह्मचारिणां सर्वशास्त्रपारगाणां श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपूर्णाश्रमस्वामि-

* अत्र पुस्तके लिपिकालो नास्ति ।

† अत्रापि लिपिकालो नास्ति ।

चरणानां स्वहस्तलिखितं संपूर्णं परिशुद्धतमं च* । इतरच्च पाठशालाध्यक्षैः संपादितं प्राचीनतममसंपूर्णं च† । चरमं च मदीयशिष्यलब्धव्याकरणाचार्यपदयोरुनित्यानन्दपन्तशर्मणा स्वाभिजनकूर्माचलप्रदेशादानायितं संपूर्णं प्राचीनं शुद्धं च‡ । तदेवं पुस्तकषट्कं लिखितं मुद्रितं च पुस्तकद्वयमाश्रित्य मुद्रणे प्रवृत्तोऽहं न्यायभाष्यस्यातिनिगूढाशयतया तथोपयुक्तसंक्षिप्तटिप्पणीसंयोजनायादिष्टः प्रभुवरैः कलिकातानगरमुद्रितमौद्योतकरन्यायवार्तिकस्य प्रथमखण्डमात्रं बह्वक्षरलिखितावपरिपूर्णौ तृतीयचतुर्थाध्यायौ च श्रीवाचस्पतिमिश्रकृतन्यायवार्तिकतात्पर्यटीकायाः कलिकातास्थपुस्तकालयादानीतान् प्रथमतृतीयचतुर्थपञ्चमानत्यन्तमशुद्धानध्यायान्§ तत्रत्यपुस्तकालयस्थं च खण्डितं तात्पर्यटीकापुस्तक||मासाद्यापि पूर्णस्यैकस्यापि पुस्तकस्यालाभेन मन्थरप्रवृत्तिर्वार्तिकस्य द्वितीयपञ्चमावध्याया¶वानाय्य ददता नित्यानन्दपन्तशर्मणा पुस्तकान्तरप्रदानेन प्रथमतृतीयचतुर्थाध्यायान् पूरयद्भिर्विन्ध्येश्वरीप्रसादद्विवेदिभिश्च संपादितसंपूर्णवार्तिकपुस्तको महता प्रयासेनान्विष्य महिसुरनगरात्तात्पर्यटीकाया द्वितीयतृतीयचतुर्थाध्यायानां** प्रथमाध्यायस्य चान्यतस्त्यं संपूर्णं शुद्धतमं च पुस्तकमर्पयद्भिः प्रभुवरैः सानुग्रहं समेधितोत्साहः काशीनिवासिना विविधसंस्कृतपुस्तकसंपादनरसिकेन श्रीगोविन्ददासगुप्तमहोदयेनापरं तात्पर्यटीकायाः श्रीमदुदयनाचार्यविरचिततात्पर्यपरिशुद्धेश्च नवीनमशोधितं संपूर्णप्रायं पुस्तकं वितरता विरचितानुकूल्यः प्रस्तुतमहानिबन्धानां विस्तृततया वार्तिकस्य मुद्र्यमाणतया तात्पर्यटीकायाश्च मयैव प्रभुवरनिदेशेन मुद्रयिष्यमाणतया च तत्रत्यमुपयुक्ततमं भागं यथातत्तात्पर्यतश्चानूद्य संपादितेयं टिप्पणी ।

अथास्य मुद्रणे प्रवृत्ते तत्पर्यालोचनावगमसौकर्याय सूत्राणि स्थूलसमाक्षरैः स्थापितानि । सूत्रनिर्माणभाष्यनिर्मितिकालमध्ये कश्चन वार्तिकं निर्ममे यन्नाम सांप्रतं नोपलभ्यते यथा पाणिनीयव्याकरणे सूत्रभाष्ययोर-

---

* अत्रापि लिपिकालो नास्ति ।

† अस्य लिपिकालः सं० १५६२ ।

‡ अत्र लिपिकालो नास्ति ।

§ अस्य लिपिकालः सं० १६०३ ।

|| अस्य लिपिकालो नास्ति ।

¶ अस्य लिपिकालो नास्ति ।

** अस्य लिपिकालः सं० १५५८ ।

न्तरा कात्यायन इति तर्कयतां पाश्चात्यानां मतेन वार्तिकवचनानि सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः स्वपदानि च वर्ण्यन्ते भाष्य भाष्यविदो विदुरिति भाष्यलक्षणानुसारेण भाष्यकारीयाण्येव सूत्रोपर्यारोपितन्निरासरूपाणि स्वेनैव व्याख्यातार्थानि वचनानीमानीति मन्यमाना साम्प्रदायिकानां दृष्ट्या भाष्यकृत्संक्षिप्तवाक्यानि मध्याक्षरैः स्थापितानि । अन्यद् भाष्य सूक्ष्माक्षरैर्न्यवेश्यत । टिप्पण्यामपि वार्तिकतात्पर्यटीकयोरधिकलः शब्दसंदर्भः सूक्ष्मतराक्षरैस्तत्तात्पर्यभाषानुवादो मत्प्रतिभातविषयश्च सूक्ष्मतमाक्षरैर्निवेशितः । प्रदर्शिताश्च पाठभेदा उपरिनिर्दिष्टपुस्तकक्रमेण संयोजिता च वर्णक्रमेण विषयसूची । पृथक् सूत्रपाठश्च वाचस्पतिमिश्रकृतसूचोद्धारनामकं वङ्गाक्षरलिखितमेकं नातिप्राचीन पुस्तकमालोच्य संयोजितः ।

गौतमसूत्रनिर्माणकालो वात्स्यायनभाष्यनिर्माणकालश्च नाद्यापि दृढप्रमाणेनावधारित इति विचारपथवर्तिनममुं विज्ञापनान्तरे प्रकाशयितास्मः ।

तदेव महान्तमायासमनुभूय संपादितेऽस्मिन् कार्ये न्यायदर्शनदुरूहतायाः सुप्रसिद्धतया मन्मतेरपाटवेन सीसकाक्षरयोजकदोषेण च सुलभानि स्खलितानि क्षाम्यन्तो गुणैकदृशो दर्शनरसिका आस्वादयन्तु प्राचीनतमदर्शनप्रतिपादनशैलीसमालोचनसमुत्थं प्रमोद प्रसीदतु च सर्वान्तर्यामी भगवाननेन व्यापारेण श्रीकाशीविश्वेश्वर इति शम् ॥

चैत्रशुदि ० शुक्रे सं० १९५२ । — महामहोपाध्यायो गङ्गाधरशास्त्री ।



# गौतमसूत्राणामकारादिक्रमेण सूचीपत्रम् ।

## अ.


| अ | आ | सू | |
|---|---|---|---|
| २ | २ | ७६ | अणुश्यामतानित्यत्ववदेतत् स्यात् । |
| ४ | १ | ६७ | अणुश्यामतानित्यत्ववद्वा । |
| २ | १ | ४४ | अत्यन्तप्रायैकदेशसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः । |
| १ | १ | ५ | अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च । |
| २ | २ | २७ | अध्यापनादप्रतिषेधः । |
| २ | २ | ४ | अनर्थापत्तावर्थापत्त्यभिमानात् । |
| ४ | २ | २५ | अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः । |
| २ | २ | ४६ | अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः । |
| ५ | २ | २२ | अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः । |
| ३ | २ | २४ | अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् । |
| ४ | १ | २२ | अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् । |
| ४ | १ | २३ | अनिमित्तनिमित्तत्वान्नानिमित्ततः । |
| २ | २ | ५२ | अनियमे नियमान्नानियमः । |
| ५ | १ | २२ | अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः । |
| २ | २ | २१ | अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः । |
| ५ | १ | ३० | अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः । |
| २ | २ | २० | अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् । |
| ३ | १ | ६० | अनुशादोपपत्तेश्च । |
| ३ | १ | ३६ | अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः । |
| १ | २ | ५ | अनैकान्तिकः सव्यभिचारः । |
| ४ | २ | २० | अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः । |
| २ | २ | ३० | अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः । |
| ३ | १ | १५ | अपरिसंख्यानाच्च स्मृतिविषयस्य । |
| १ | १ | ३१ | अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः । |
| ४ | २ | ४३ | अपवर्गेऽप्येवं प्रसङ्गः । |
| ३ | १ | ६२ | अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः । |
| ३ | १ | ४६ | अप्रतीघातात् सन्निकर्षोपपत्तिः । |
| ३ | २ | ७ | अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् । |
| ३ | २ | ५ | अप्रत्यभिज्ञाने च विनाशप्रसङ्गः । |
| ३ | १ | ४४ | अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः । |
| ४ | १ | १४ | अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् । |
| ३ | १ | ४२ | अभिव्यक्तौ चाभिभवात् । |
| ३ | २ | २८ | अभ्यासात् । |
| २ | १ | ५६ | अभ्युपेत्य कालभेदे दोषवचनात् । |
| ३ | १ | २३ | अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् । |
| ४ | २ | ४२ | अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः । |
| ५ | २ | १५ | अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् । |
| ५ | १ | २१ | अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः । |
| २ | २ | २ | अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् । |
| ३ | २ | ६१ | अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् । |
| २ | १ | १० | अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः । |
| ५ | २ | ११ | अवयवविपर्यासवचनमप्राप्तकालम् । |
| ४ | २ | १२ | अवयवान्तराभावेऽप्यवृत्तेरहेतुः । |
| ४ | २ | १५ | अवयवावयविप्रसङ्गश्चैवमाप्रलयात् । |
| १ | १ | ४० | अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः । |

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| ५ | २ | १७ | अविज्ञातं चाज्ञानम् । |
| १ | २ | १२ | अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् । |
| १ | २ | १७ | अविशेषे वा किंचित्साधर्म्यादेकच्छलप्रसङ्गः । |
| ५ | २ | ६ | अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् । |
| २ | २ | ४५ | अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् । |
| ३ | १ | ३८ | अव्यभिचाराच्च प्रतीघातो भौतिकधर्मः । |
| ५ | १ | ४ | अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः । |
| ४ | २ | २२ | अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः । |
| २ | २ | ३३ | अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः । |
| २ | २ | ८ | असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः । |
| २ | २ | २२ | अस्पर्शत्वात् । |
| २ | २ | ३७ | अस्पर्शत्वादप्रतिषेधः । |

### आ.

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| ४ | २ | १८ | आकाशव्यतिभेदात्तदनुपपत्तिः । |
| ४ | २ | १९ | आकाशासर्वगतत्वं वा । |
| २ | २ | ६५ | आकृतिर्जातिलिङ्गाख्या । |
| २ | २ | ६० | आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः । |
| ४ | १ | १० | आत्मनित्यत्वे प्रेत्यभावसिद्धिः । |
| ३ | २ | ३१ | आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः । |
| १ | १ | ९ | आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् । |
| ३ | १ | ४६ | आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः । |
| ३ | १ | ४७ | आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् । |
| २ | २ | १३ | आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च । |
| १ | १ | ७ | आप्तोपदेशः शब्दः । |
| २ | १ | ५२ | आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः । |
| ४ | १ | ५१ | आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः । |

### इ.

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| १ | १ | १० | इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति । |
| ३ | १ | १२ | इन्द्रियान्तरविकारात् । |
| ३ | १ | ५४ | इन्द्रियार्थपञ्चत्वात् । |
| १ | १ | ४ | इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् । |
| ३ | २ | २१ | इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः । |

### ई.

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| ४ | १ | १९ | ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् । |

### उ.

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| ५ | २ | १८ | उत्तरस्याप्रतिपत्तिरप्रतिभा । |
| ४ | १ | ४९ | उत्पादव्ययदर्शनात् । |
| १ | १ | ३४ | उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः । |
| १ | १ | ३८ | उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः । |
| ५ | १ | २९ | उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः । |
| ३ | २ | ७१ | उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः । |
| २ | १ | ५० | उपलब्धेरद्विप्रवृत्तित्वात् । |
| २ | २ | ३४ | उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः । |
| ५ | १ | २५ | उभयकारणोपपत्तेरुपपत्तिसमः । |
| ५ | १ | १६ | उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः । |

### ऋ.

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| ४ | १ | ५९ | ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः । |

### ए.

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| ५ | १ | २३ | एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः । |
| ३ | १ | ९ | एकविनाशे द्वितीयाविनाशान्नैकत्वम् । |

| अ. | आ. | सू. | |
|---|---|---|---|
| ४ | २ | ११ | एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः । |
| ३ | १ | ६४ | एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तराणां तदनुपलब्धिः । |
| ३ | २ | ७० | एतेनानियमः प्रत्युक्तः । |
| | | | **ऐ.** |
| ३ | २ | ५८ | ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः । |
| | | | **क.** |
| ३ | १ | ३७ | कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः । |
| २ | २ | १ | कर्माकाशसाधर्म्यात्संशयः । |
| २ | २ | ४४ | कर्मानवस्थायिग्रहणात् । |
| २ | २ | १७ | कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इति। |
| ४ | १ | २८ | कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः । |
| ५ | २ | १९ | कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः । |
| ५ | १ | ३८ | कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः । |
| १ | २ | ९ | कालात्ययापदिष्टः कालातीतः । |
| ४ | १ | ४६ | कालान्तरेणानिष्पत्तिर्हेतुविनाशात् । |
| ५ | १ | ५ | किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः । |
| ३ | १ | ४५ | कुड्यान्तरितानुपलब्धेरप्रतिषेधः । |
| ३ | २ | ३८ | कुम्भादिष्वनुपलब्धेरहेतुः । |
| २ | १ | ४३ | कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् । |
| ४ | २ | ७ | कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः । |
| ३ | १ | ३६ | कथ्यासारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः । |
| ३ | २ | ५४ | केशनखादिष्वनुपलब्धेः । |
| ४ | २ | १३ | केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः । |
| ४ | १ | १८ | क्रमनिर्देशादप्रतिषेधः । |
| ३ | २ | ६ | क्रमवृत्तित्वादयुगपद्ग्रहणम् । |
| ५ | १ | २४ | क्वचित्तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः । |
| २ | २ | १७ | क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनैकान्तः । |
| ३ | २ | १३ | क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिः । |
| ४ | २ | ४० | क्षुदादिभिः प्रवर्तनाच्च । |
| | | | **ग.** |
| ३ | १ | ५७ | गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः । |
| ३ | १ | ६१ | गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः । |
| १ | १ | १४ | गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः । |
| २ | २ | ५४ | गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः । |
| ५ | १ | ३ | गोत्वाद्गोसिद्धिवत्तत्सिद्धिः । |
| ३ | २ | ४७ | ग्रहणे हेतुविकल्पाद्ग्रहणविकल्पो न बुद्धिविकल्पात् । |
| | | | **घ.** |
| ५ | १ | ८ | घटादिनिष्पत्तिदर्शनात्पीडने चाभिचारादप्रतिषेधः । |
| १ | १ | १२ | घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः । |
| | | | **च.** |
| १ | १ | ११ | चेष्टेन्द्रियार्थाश्रयः शरीरम् । |
| | | | **ज.** |
| २ | १ | ५६ | जातिविशेषे चानियमात् । |
| ३ | २ | ३५ | जस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः । |
| ३ | १ | १७ | ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् । |
| ४ | २ | ४७ | ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः । |
| २ | १ | २३ | ज्ञानलिङ्गत्वादात्मनो नानवरोधः। |
| ४ | १ | ३१ | ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् । |
| ३ | २ | २५ | ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः । |
| ३ | २ | ५६ | ज्ञानायौगपद्यादेकं मनः । |
| | | | **त.** |
| ४ | १ | २१ | तत्कारितत्वादहेतुः । |

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| १ | २ | ११ | तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति। |
| ४ | १ | ३ | तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्। |
| ४ | २ | १७ | तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः। |
| २ | २ | १५ | तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः। |
| ४ | २ | ५० | तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्। |
| २ | १ | १४ | तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः। |
| २ | २ | ६ | तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम्। |
| ४ | १ | ५४ | तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः। |
| २ | २ | १० | तत्सिद्धेरलिङ्गव्यहेतुः। |
| २ | १ | ५ | तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः। |
| ४ | १ | ८ | तथा दोषाः। |
| ५ | १ | १३ | तथा भावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः। |
| १ | १ | ३५ | तथा वैधर्म्यात्। |
| ३ | २ | ६७ | तथाऽऽहारस्य। |
| २ | १ | ४८ | तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः। |
| १ | १ | २२ | तदत्यन्तविमोक्षोऽपवर्गः। |
| ३ | २ | ७२ | तददृष्टकारितमिति चेत्पुनस्तत्प्रसङ्गोऽपवर्गे। |
| ४ | १ | २७ | तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत्। |
| ५ | १ | २६ | तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः। |
| २ | २ | १९ | तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः। |
| ३ | १ | ३३ | तदनुपलब्धेरहेतुः। |
| २ | २ | २६ | तदन्तरालानुपलब्धेरहेतुः। |
| २ | १ | ५७ | तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः। |
| ४ | २ | ४५ | तदभावश्चापवर्गे। |
| ३ | १ | ५ | तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्। |
| २ | २ | ३१ | तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः। |
| ३ | १ | ५४ | तदयौगपद्यलिङ्गत्वाच्च न मनसः। |
| ४ | २ | ४६ | तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपाये। |
| २ | २ | ५६ | तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात्संशयः। |
| ४ | २ | ५ | तदसंशयः पूर्वहेतुप्रसिद्धत्वात्। |
| ३ | २ | २० | तदात्मगुणत्वेऽपि तुल्यम्। |
| ३ | १ | १४ | तदात्मगुणसद्भावादप्रतिषेधः। |
| ४ | २ | २८ | तदाश्रयत्वादपृथग्ग्रहणम्। |
| ३ | १ | ७३ | तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात्। |
| १ | २ | २० | तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम्। |
| २ | १ | १८ | तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिः। |
| १ | १ | ३७ | तद्विपर्ययाद्वा विपरीतम्। |
| ३ | १ | ६६ | तद्व्यवस्थानं तु भूयस्त्वात्। |
| ३ | १ | ३ | तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः। |
| १ | १ | २६ | तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः। |
| ४ | २ | ३ | तन्निमित्तं त्ववयव्यभिमानः। |
| २ | १ | ४० | तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्। |
| ५ | १ | ३१ | तल्लक्षणावरोधादप्रतिषेधः। |
| ३ | २ | ३६ | तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः। |
| ४ | २ | ४८ | तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात्। |
| ४ | २ | ५१ | ताभ्यां विगृह्य कथनम्। |
| ३ | १ | ७१ | तेनैव तस्याग्रहणाच्च। |
| २ | २ | ५५ | ते विभक्त्यन्ताः पदम्। |
| ४ | १ | ६ | तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः। |
| ४ | २ | ८ | तेषु चावृत्तेरवयव्यभावः। |
| २ | १ | ३७ | तैश्चापदेशो ज्ञानविशेषाणाम्। |
| २ | १ | १५ | त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः। |
| २ | १ | १२ | त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः। |
| ५ | १ | १८ | त्रैकाल्यासिद्धेर्हेतोरहेतुसमः। |
| ३ | २ | ५५ | त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः। |

अ· आ· सू·
३ १ ५२ स्वाद्यव्यतिरेकात् ।

द.

३ १ १ दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ।
२ १ २२ दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ।
१ १ २ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ।
४ १ ५८ दुःखविकल्पे सुखाभिमानाच्च ।
३ १ ५० दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ।
२ १ ११ दृष्टान्तविरोधादप्रतिषेधः ।
५ १ ९ दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ।
५ १ ३४ दृष्टान्ते च साध्यसाधनभावेन धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ।
४ २ २ दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ।
४ २ १ दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ।
३ १ ३५ द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ।
२ २ ४३ द्रव्यविकारे वैषम्यवद् वर्णविकारविकल्पः ।
३ २ ४८ द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ।

ध.

१ २ १४ धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ।
२ १ ३५ धारणाकर्षणोपपत्तेश्च ।

न.

३ २ ७३ न करणाकरणयोरारम्भदर्शनात् ।
२ १ ५८ न कर्मकर्तृसाधनवैगुण्यात् ।
२ २ २३ न कर्मानित्यत्वात् ।
४ १ ४७ न कारणावयवभावात् ।
३ १ ६ न कार्याश्रयकर्तृवधात् ।
३ १ ४३ नक्तंचरनयनरश्मिदर्शनाच्च ।
४ १ ६५ न क्लेशसन्ततेः स्वाभाविकत्वात् ।
३ २ ८ न गत्यभावात् ।
४ १ १२ न घटाद् घटानिष्पत्तेः ।
२ २ १५ न घटाभावसामान्यनित्यत्वाच्च नित्येष्वप्यनित्यवदुपचाराच्च ।

अ· आ· सू·
२ २ १ न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ।
४ २ १० न चावयव्यवयवाः ।
३ १ ३२ न चैकदेशोपलब्धिरवयविसद्भावात् ।
२ २ ५८ न तदनवस्थानात् ।
३ १ ५६ न तदर्थबहुत्वात् ।
१ २ १६ न तदर्थान्तरभावात् ।
३ २ २९ न तदाशुगतित्वान्मनसः ।
४ १ ९ न दोषलक्षणावरोधान्मोहस्य ।
४ २ ४४ न निष्पन्नावश्यंभावित्वात् ।
३ २ १५ न पयसः परिणामगुणान्तरप्रादुर्भावात् ।
३ २ ५१ न पाकजगुणान्तरोत्पत्तेः ।
३ १ ६१ न पार्थिवाप्ययोः प्रत्यक्षत्वात् ।
४ १ ५३ न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ।
४ १ २० न पुरुषकर्माभावे फलानिष्पत्तेः ।
२ १ ३१ न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ।
२ १ १९ न प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः ।
४ २ १६ न प्रलयोऽणुसद्भावात् ।
४ १ ६४ न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ।
३ १ ५९ न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ।
३ २ ४ न युगपदग्रहणात् ।
३ २ ६० न युगपदनेकक्रियोपलब्धेः ।
३ १ ५३ न युगपदर्थानुपलब्धेः ।
३ १ ४० न रात्रावप्यनुपलब्धेः ।
३ २ ५७ न रूपादीनामितरेतरवैधर्म्यात् ।
२ २ ११ न लक्षणावस्थितापेक्षासिद्धेः ।
२ २ ५४ न विकारधर्मानुपपत्तेः ।
४ १ १७ न विनष्टेभ्योऽनिष्पत्तेः ।
३ १ २ न विषयव्यवस्थानात् ।
४ १ ३३ न व्यवस्थानुपपत्तेः ।
३ १ ७२ न शब्दगुणोपलब्धेः ।
४ १ ४५ न सद्यः कालान्तरोपभोग्यत्वात् ।
३ १ ६३ न सर्वगुणानुपलब्धेः ।
४ १ ६८ न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ।
३ १ २७ न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ।
३ २ ६५ न साध्यसमत्वात् ।
४ १ ५६ न सुखस्यान्तरालनिष्पत्तेः ।
३ २ ३७ न स्मरणकालानियमात् ।

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| ३ | १ | १३ | न स्मृतेः स्मर्तव्यविषयत्वात् । |
| ४ | १ | ३९ | न स्वभावसिद्धिरापेक्षिकत्वात् । |
| ४ | १ | ३८ | न स्वभावसिद्धेर्भावानाम् । |
| ५ | १ | १९ | न हेतुतः कार्यसिद्धेस्त्रैकाल्यासिद्धिः । |
| ३ | २ | ७१ | नाकृताभ्यागमप्रसङ्गात् । |
| २ | २ | ६२ | नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः । |
| २ | २ | २४ | नाणुनित्यत्वात् । |
| २ | १ | ४१ | नातीतानागतयोरितरेतरापेक्षा सिद्धिः । |
| ४ | १ | १६ | नातीतानागतयोः कारकशब्दप्रयोगात् । |
| २ | २ | ४२ | नातुल्यप्रकृतीनां विकारविकल्पात् । |
| ३ | १ | १६ | नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् । |
| २ | १ | २१ | नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः । |
| ४ | १ | २६ | नानित्यतानित्यत्वात् । |
| ३ | १ | ३४ | नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः । |
| २ | १ | ६६ | नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः । |
| ४ | १ | ३५ | नानेकलक्षणैरेकभावनिष्पत्तेः । |
| ३ | २ | २६ | नान्तःशरीरवृत्तित्वान्मनसः । |
| ३ | १ | २४ | नान्यत्र प्रवृत्त्यभावात् । |
| २ | २ | २६ | नान्यत्वेऽप्यभ्यासस्योपचारात् । |
| २ | १ | ४७ | नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति । |
| २ | २ | ७ | नाभावप्रामाण्यं प्रमेयासिद्धेः । |
| २ | १ | २८ | नार्थविशेषप्राबल्यात् । |
| ४ | २ | ३८ | नार्थविशेषप्राबल्यात् । |
| ४ | १ | ४८ | नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् । |
| ५ | २ | २१ | निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् । |
| ३ | २ | ७५ | नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः । |
| २ | २ | ४७ | नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् । |
| ४ | १ | ६ | नित्यनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः । |
| ५ | १ | ३५ | नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः । |
| ४ | १ | २८ | नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् । |
| २ | २ | ४८ | नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः । |
| ४ | १ | ७ | निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः । |
| ४ | १ | २४ | निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः । |
| ३ | २ | ३९ | नियमानियमौ तु तद्विशेषकौ । |
| ३ | १ | १८ | नियमश्च निरनुमानः । |
| ३ | २ | ११ | नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा । |
| २ | २ | ५२ | नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः । |
| ४ | १ | ४३ | निरवयवत्वादहेतुः । |
| ५ | १ | २७ | निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः । |
| ३ | १ | ४८ | नेतरेतरधर्मप्रसङ्गात् । |
| ३ | २ | १८ | नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् । |
| २ | १ | ३८ | नैकदेशत्रासादृश्येभ्योऽर्थान्तरभावात् । |
| ४ | १ | ४ | नैकप्रत्यनीकभावात् । |
| ३ | १ | ८ | नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् । |
| ३ | २ | ३२ | नोत्पत्तिकारणानपदेशात् । |
| ४ | १ | १२ | नोत्पत्तितत्कारणोपलब्धेः । |
| ३ | २ | ६६ | नोत्पत्तिनिमित्तत्वान्मातापित्रोः । |
| ३ | २ | १२ | नोत्पत्तिविनाशकारणोपलब्धेः । |
| ४ | १ | ३० | नोत्पत्तिविनाशकारणोपलब्धेः । |
| ३ | १ | २१ | नोष्णशीतवर्षाकालनिमित्तत्वात्पञ्चात्मकविकाराणाम् । |
| २ | २ | ४१ | न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः । |

प.

| अ॰ | आ॰ | सू॰ | |
|---|---|---|---|
| ५ | २ | ४ | पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः । |
| २ | २ | ५७ | [illegible]ष्वर्णविकार[illegible]रयत्तद्विकारः । |
| ३ | २ | ३७ | परश्वादिष्वारम्भनिवृत्तिदर्शनात् । |
| ४ | २ | १७ | परं वा त्रुटेः । |
| ३ | २ | ४१ | परिशेषाद्यथोक्तहेतूपपत्तेश्च । |
| ५ | २ | ९ | परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् । |

| अ. | आ. | सू. | |
|---|---|---|---|
| १ | २ | १ | प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । |
| ४ | २ | २९ | प्रमाणतश्चार्थप्रतिपत्तेः । |
| २ | १ | १७ | प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः । |
| १ | १ | १ | प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः । |
| ४ | २ | ३० | प्रमाणानुपपत्त्युपपत्तिभ्याम् । |
| २ | १ | १६ | प्रमेया च तुलाप्रामाण्यवत् । |
| ५ | १ | ३७ | प्रयत्नकार्यानेकत्वात् कार्यसमः । |
| १ | १ | १८ | प्रवर्त्तनालक्षणा दोषाः । |
| १ | १ | २० | प्रवृत्तिदोषजनितोऽर्थः फलम् । |
| ४ | १ | १ | प्रवृत्तिर्यथोक्ता । |
| १ | १ | १७ | प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति । |
| १ | १ | ६ | प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् । |
| २ | १ | ४५ | प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः । |
| ४ | १ | ६६ | प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविके ऽप्यनित्यत्वम् । |
| २ | २ | १९ | प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च । |
| ३ | २ | १७ | प्रागुत्पत्तेरभावोपपत्तेश्च । |
| ५ | १ | १२ | प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः । |
| ४ | १ | ४७ | प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् । |
| ३ | २ | ३४ | प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः । |
| २ | २ | ६८ | प्राप्तौ चानियमात् । |
| ५ | १ | ७ | प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या ऽविशिष्टत्वादप्राप्त्या ऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ । |
| ४ | १ | ५३ | प्रीतेरात्माश्रयत्वादप्रतिषेधः । |
| ३ | १ | २२ | प्रेत्याहाराभ्यासकृतात्स्तन्याभिलाषात् । |

## ब.

| अ. | आ. | सू. | |
|---|---|---|---|
| ४ | १ | ५७ | बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः । |
| १ | १ | २१ | बाधनालक्षणं दुःखमिति । |
| ३ | १ | ४१ | बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः । |
| १ | १ | १५ | बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् । |
| ४ | १ | ५० | बुद्धिसिद्धन्तु तदसत् । |
| ४ | २ | ३६ | बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् । |
| ४ | २ | २६ | बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत्तदनुपलब्धिः । |

## भ.

| अ. | आ. | सू. | |
|---|---|---|---|
| ३ | १ | ६० | भूतगुणविशेषोपलब्धेस्तादात्म्यम् । |
| ३ | २ | ६४ | भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् । |

## म.

| अ. | आ. | सू. | |
|---|---|---|---|
| ३ | १ | ३९ | मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः । |
| ३ | २ | ७४ | मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः । |
| २ | १ | ६८ | मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् । |
| ३ | १ | ३१ | महदणुग्रहणात् । |
| ४ | २ | ३२ | मायागन्धर्वनगरमृगतृष्णिकावद्वा । |
| ४ | २ | ३५ | मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे । |
| ४ | २ | २३ | मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः । |

## य.

| अ. | आ. | सू. | |
|---|---|---|---|
| २ | १ | ७ | यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः । |
| १ | १ | ३० | यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः । |
| ३ | २ | ६२ | यथोक्तहेतुत्वाच्चाणु । |
| ३ | २ | ४० | यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः । |
| २ | १ | ६ | यथोक्ताध्यवसायादेव तद्विशेषापेक्षात्संशये नासंशयो नात्यन्तसंशयो वा । |

## श.


अ॰ आ॰ सू॰

२ २ २ शब्द ऐतिह्यार्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ।

४ २ २१ शब्दसंयोगविभवाच्च सर्वगतम् ।

५ २ १४ शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ।

२ १ ५४ शब्द ऐतिह्यस्यानादप्रतिषेधः ।

२ १ [redacted] शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ।

३ २ ४६ शरीरगुणवैधर्म्यात् ।

३ १ ४ शरीरदाहे पातकाभावात् ।

३ २ ५३ शरीरव्यापित्वात् ।

३ २ ६६ शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ।

२ १ [redacted] शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ।

३ १ २६ श्रुतिप्रामाण्याच्च ।


## स.


३ १ २६ सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ।

३ १ ७० सगुणानामिन्द्रियभावात् ।

४ १ ४४ सद्यः कालान्तरे च निष्पत्तेः संशयः ।

१ १ ८ स द्विविधो दृष्टादृष्टार्थत्वात् ।

१ २ ३ स प्रतिपक्षस्थापनाहीनो वितण्डा ।

४ २ ३८ समाधिविशेषाभ्यासात् ।

१ १ २६ समानतन्त्रासिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः ।

१ २ [redacted] समानप्रसवात्मिका जातिः ।

२ १ १ समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ।

१ १ २३ समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ।

४ १ ६१ समारोपणादात्मन्यप्रतिषेधः ।

१ १ २७ सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ।

१ १ २८ सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ।

४ १ ३० सर्वमेवम् ।

४ १ २६ सर्वं नित्यं पञ्चभूतनित्यत्वात् ।

४ १ ३४ सर्वं पृथग्भावलक्षणपृथक्त्वात् ।

२ १ १३ सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ।

४ १ २५ सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ।

४ १ ३७ सर्वमभावो भावेष्वितरेतराभावसिद्धेः ।

२ १ ३४ सर्वाग्रहणमवयव्यसिद्धेः ।

३ १ ७ सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ।

१ २ ४ सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ।

२ २ ५८ सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ।

४ १ ४१ सत्येऽन्तर्निदि कारणानुपपत्त्युपपत्तिभ्याम् ।

२ २ १५ सन्तानानुमानविशेषणात् ।

२ २ २५ सम्प्रदानात् ।

२ १ ५१ सम्बन्धाच्च ।

१ २ १३ सम्भवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम् ।

४ २ २४ सयोगोपपत्तेश्च ।

३ १ ६५ संसर्गाच्चानेकगुणग्रहणम् ।

५ १ २ साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ।

१ २ १८ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ।

५ १ १ साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ।

५ १ ३२ साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ।

५ १ १४ साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ।

५ १ ३३ साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च ।

२ १ १२ सा

| अ० | आ० | सू० | |
|---|---|---|---|
| ३ | २ | ७१ | साध्यत्वादहेतुः। |
| ५ | १ | ४ | साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः। |
| १ | १ | ३३ | साध्यनिर्देशः प्रतिज्ञा। |
| ३ | २ | ३ | साध्यसमत्वादहेतुः। |
| १ | १ | ३६ | साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्। |
| ५ | १ | ६ | साध्यातिदेशाच्च दृष्टान्तोपपत्तेः। |
| १ | २ | ८ | साध्याविशिष्टः साध्यत्वात्साध्यसमः। |
| २ | १ | ५५ | सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य। |
| ५ | १ | १४ | सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः। |
| १ | २ | ६ | सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः। |
| ५ | २ | २३ | सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः। |
| २ | १ | २६ | सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः संनिकर्षनिमित्तत्वात्। |
| २ | २ | ४६ | सुवर्णादीनां पुनरापत्तेरहेतुः। |
| ४ | १ | ६३ | सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः। |
| २ | १ | ३६ | सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम्। |
| २ | १ | [illegible] | स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः। |
| ३ | १ | ५९ | स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः। |
| ३ | २ | ९ | स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः। |
| ३ | २ | १० | स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः। |
| ३ | २ | ४३ | स्मरणं त्वात्मनो ज्ञस्वाभाव्यात्। |
| ३ | २ | २८ | स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः। |
| ४ | २ | ३४ | स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः। |
| ५ | २ | २० | स्वपक्षदोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञा। |
| ५ | १ | ४३ | स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोष इति। |
| ४ | २ | ३१ | स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः। |
| ४ | २ | १४ | स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः। |

ह०

| अ० | आ० | सू० | |
|---|---|---|---|
| ५ | २ | १२ | हीनमन्यतमेनाप्यवयवेन न्यूनम्। |
| ५ | २ | १३ | हेतूदाहरणाधिकमधिकम्। |
| ३ | २ | ४६ | हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा। |
| १ | १ | ३९ | हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्। |
| ४ | २ | ३३ | हेत्वभावादसिद्धिः। |
| ५ | २ | २४ | हेत्वाभासाश्च यथोक्ताः। |


इति।



अत्र टिप्पण्याम् औद्द्योतकरं वार्तिकम् ।
वाचस्पतिमिश्रकृता न्यायवार्तिकतात्पर्यटीका ।
उदयनाचार्यकृता तात्पर्यपरिशुद्धिः ।
विश्वनाथपञ्चाननकृता गौतमसूत्रवृत्तिः ।
एते ग्रन्थाः प्रमाणत्वेनाश्रिताः ।

श्रीगणेशाय नमः ।

श्रीवाचस्पतिमिश्रेण मिथिलेश्वरसूरिणा ।
लिख्यते मुनिमूर्धन्यश्रीगोतममतं महत् ॥ १ ॥

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः॥१॥ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः॥ २ ॥ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥ इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥ अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च ॥ ५ ॥ प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् ॥ ६ ॥ आप्तोपदेशः शब्दः ॥ ७ ॥ स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥ आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥ इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥ १० ॥

---

अत्र टिप्पण्यां येषां सूत्रत्वे प्रमाणमुपलब्धं तदभावे वा तयोरदर्शनं वा तदुपन्यस्यते ।

१ तासां पल्न्यासो सद्विधानामिति भाष्येण सूत्रमवतार्य पठितमिति तात्पर्यटीका । २ तदनन्तरापायादिति पा० । अपवर्गप्रतिपादनार्थं चेदं सूत्रमिति वार्तिकम् । ३ यथोद्दिष्टविभागद्वारेण सूत्रमिति वार्तिकम् । ४ इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादिसूत्रमिति वार्तिकम् । ५ अनुमानविशेषणार्थं सूत्रमिति वार्तिकम् । ६ सूत्रार्थः पूर्ववदिति वार्तिकम् । ७ न शब्दमात्रमिति सूत्रार्थं इति वार्तिकम् । ८ इदं सूत्रं बहुतरलिखितपुस्तके त्रुटितम् । स द्विविधो दृष्टादृष्टार्थत्वादित्यस्य सूत्रस्य तात्पर्यमाहेति तात्पर्यटीकायां दर्शनात्सूत्रमेवेदम् । ९ एतदर्थप्रकाशनायात्मादिसूत्रमिति वार्तिकम् । १० अयेतिशब्दः सूत्रानन्तर्गतः अत्र भाष्ये अनुमानाच्च प्रतिपत्तव्यः कथम् इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति हेतुस्थार्थकतया संगतत्वात् स्थापितः । इदं सूत्रमिति वार्तिकम् ।

चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥ घ्राणरसनचक्षुस्त्वक्‌श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥ पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥ १३ ॥ गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥ बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥ युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥ प्रवर्तनालक्षणा दोषाः ॥ १८ ॥ पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥ प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥ बाधनालक्षणं दुःखमिति ॥ २१ ॥ तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥ समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥ यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥ लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥ तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥ सर्वत-

---

११ शरीरं लक्षयितुं सूत्रं चेष्टेत्यादीति ता० टी० । १२ लक्षणसूत्राणि समानासमानजातीयविशेषकाणि सर्वाणीति सूत्रार्थो द्रष्टव्य इति वार्तिकम् । १३ अत्र २६ पृष्ठे टिप्पणी द्रष्टव्या । १४ एतत्सूत्रमिति वार्तिकम् । १५ बुद्धेरवसाप्तायाः लक्षणापदेशद्वारेण सूत्रमिति वार्तिकम् । १६ यस्मादिन्द्रियार्थसंनिकर्षे सत्यपि युगपज्ज्ञानानि न भवन्ति अतो गम्यते अस्ति तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि यस्य संनिधानासंनिधानानुविधानात् ज्ञानस्योत्पत्त्यनुत्पत्ती भवत इति कुतः कारणवैकल्ये कार्यप्रतिबन्धादिति सूत्रार्थ इति वार्तिकम् ।
१७ तात्पर्यटीकापुस्तकेषु यत्र २ सूत्रं लिखितं तत्रैवाद्यन्ताक्षराणि दृश्यन्ते । अत्र प्रवृ–भः इति लेखदर्शनादितिशब्दः सूत्रान्तर्गत एव भाष्यपुस्तकेषु तथा दर्शनाविशेषितः । १८ दोषलक्षणं प्रव–णा इति तात्पर्यटीका । १९ प्रेत्यभावं लक्षयति पुन– व इति ता० टी० । २० प्रवृ–लमिति ता० टी० । २१ दुःखलक्षणं बाध–नमिति ता० टी० । अत इतिशब्दः सूत्रान्तर्गतः । २२ तद–र्ग इति ता० टी० । २३ समानानेकधर्मोपपत्तेरिति सूत्रमिति वार्तिकम् । २४ प्रयोजनलक्षणं यम–न मिति ता० टी० । २५ लौकिकपरीक्षकाणामिति सूत्रमिति वार्तिकम् । २६–२७ अत्र ३६–३७ पृष्ठे टिप्पणी द्रष्टव्या ।

न्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥ सर्वतन्त्राविरुद्धस्तन्त्रे ऽधिकृतो ऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥ समानतन्त्रासिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥ यत्सिद्धावन्यप्रकरणसिद्धिः सो ऽधिकरणसिद्धान्तः ॥ ३० ॥ अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥ प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३२ ॥ साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥ उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥ तथा वैधर्म्यात् ॥ ३५ ॥ साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ३६ ॥ तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥ उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥ हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ३९ ॥ अविज्ञाततत्त्वे ऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ४० ॥ विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४१ ॥

इति गौतमसूत्रे प्रथमाध्यायस्य प्रथमाह्निकम् ॥

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥ यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥

---

२८ सर्व—न्त इति ता॰ टी॰ । २९ समा—न्त इति ता॰ टी॰ । ३० यत्सि—न्त इति ता॰ टी॰ । ३१ अभ्युपगमसिद्धान्तलक्षणसूत्रम् अ—न्त इति ता॰ टी॰ । ३२ अवयवानां विभागोद्देशार्थं सूत्रमिति वार्तिकम् । ३३ साध्य—ज्ञा इति ता॰ टी॰ । ३४ अत्र ४० पृष्ठे टिप्पणी द्रष्टव्या । ३५ सूत्रान्तरमवतारयति किमेतावदिति तथा—त् इति ता॰ टी॰ । ३६ इदं सूत्रमिति वार्तिकम् । ३७ अत्र ४२ पृष्ठे टिप्पणी द्रष्टव्या । ३८ उद—य इति ता॰ टी॰ । ३९ हेत्व—नमिति ता॰ टी॰ । ४० इदं सूत्रमिति वार्तिकम् । ४१ इदं सूत्रमिति वार्तिकम् ।

१ इदं सूत्रमिति वार्तिकम् । २ समानजातिभ्यां वादवितण्डाभ्यामसमानजातीयेभ्यः प्रमाणादिभ्यो व्यवच्छेदः सूत्रार्थ इति ता॰ टी॰ ।

स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥ सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ॥ ४ ॥ अनैकान्तिकः सव्यभिचारः ॥ ५ ॥ सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥ यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥ साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥ ८ ॥ कालात्ययापदिष्टः कालातीतः ॥ ९ ॥ वचनविघातो ऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥ तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥ अविशेषाभिहिते ऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥ संभवतो ऽर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥ धर्मविकल्पनिर्देशे ऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥ वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥ न तदर्थान्तरभावात् ॥ १६ ॥ अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ १७ ॥ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥ विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥ तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

इति गौतमसूत्रे प्रथमाध्यायः ॥ १ ॥

---

३ सप्र–ण्डा इति ता· टी· । ४ विभागोद्देशपरं सूत्रं सव्य–सा इति ता· टी· । ५ अनेकान्तः इति घट्टावरसूत्रपुस्तकपाठः । अने–र इति ता· टी· ६ को ऽस्य सूत्रस्यार्थ इति वार्तिकम् । ७ यस्मात्प्रकरणचिन्तेत्युक्तं सूत्रं ता· टी· । ८ साध्या–म इति ता· टी· । ९ अत्र ५४ पृष्ठे टिप्पणी द्रष्टव्या १० वच–लमिति ता· टी· । ११ विभागसूत्रमवतारयतीति ता· टी· । १२ अवि–लमिति ता· टी· । १३ सभ–लमिति ता· टी· । १४ धर्म–लमिति ता· टी· १५ इदं सूत्रमिति वार्तिकम् । १६ सिद्धान्तसूत्रं न तद–त इति ता· टी· १७ कोऽस्य सूत्रस्यार्थ इति वार्तिकम् । १८ सूत्रार्थस्तु यथाश्रुतीति वार्तिकम् १९ विप्र–नमिति ता· टी· । २० सूत्रान्तरमवतारयितुं भाष्यकार आहेति ता· टी·

समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ॥ १ ॥ विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ २ ॥ विप्रतिपत्तौ च संप्रतिपत्तेः ॥ ३ ॥ अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥ ४ ॥ तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥ यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥ यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥ प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ॥ ८ ॥ पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षोत्पत्तिः ॥ ९ ॥ पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥ १० ॥ युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् ॥ ११ ॥ त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥ सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥ तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥ त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५ ॥ प्रमेया च तुलाप्रामाण्यवत् ॥ १६ ॥ प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥ १७ ॥

---

१ समानानेकधर्माध्यवसायादित्यादिसूत्रमिति वार्तिकम् । २ अस्य सूत्रत्वे विवरणाद्यपव्याननशक्तिः प्रमाणम् । ३ अत्र ६१ पृष्ठे टिप्पणी द्रष्टव्या । ४ अत्र ६१ पृष्ठे टिप्पणी द्रष्टव्या । ५ अत्र ६१ पृष्ठे टिप्पणी द्रष्टव्या । ६ चकारो बङ्गाक्षरलिखितपुस्तके नास्ति । अत्र ६१ पृष्ठे टिप्पणी द्रष्टव्या । ७ अत्र ६४ पृष्ठे टिप्पणी द्रष्टव्या । ८ प्रमाणसामान्याक्षेपसूत्रम् । ९ अत्र ६४ पृष्ठे टिप्पणी द्रष्टव्या । १० पश्चात्सिद्धाविति सूत्रमिति वार्तिकम् । ११ युगपत्सिद्धाविति सूत्रमिति वार्तिकम् । १२ सिद्धान्तसूत्रमिति वृत्तिः । अयमपि प्रतिषेधस्त्रिष्वपि कालेषु नोपपद्य इत्ययं सूत्रार्थं इति वार्तिकम् । १३ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । १४ इदं सूत्रमिति परिशुद्धिः । १५ इदं सूत्रमिति वार्तिकम् । १६ अस्य चार्थस्य ज्ञापनार्थं सूत्रमिति वार्तिकम् । १७ पूर्वपक्षसूत्रमिति वृत्तिः ।

तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिः ॥ १८ ॥ न प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः ॥ १९ ॥ प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ २० ॥ नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २१ ॥ दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २२ ॥ ज्ञानलिङ्गत्वादात्मनो नानवरोधः ॥ २३ ॥ तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २४ ॥ प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् ॥ २५ ॥ सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात् ॥ २६ ॥ तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २७ ॥ व्याहतत्वादहेतुः ॥ २८ ॥ नार्थविशेषप्राबल्यात् ॥ २९ ॥ प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ ३० ॥ न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३१ ॥ न चैकदेशोपलब्धिरवयविसद्भावात् ॥ ३२ ॥ साध्यत्वादवयविनि संदेहः ॥ ३३ ॥ सर्वाग्रहणमवयव्यसिद्धेः ॥ ३४ ॥ धारणाकर्षणोपपत्तेश्च ॥ ३५ ॥ सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ॥ ३६ ॥ रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३७ ॥

---

१८ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । १९ सिद्धान्तसूत्रमिति वृत्तिः क्वचिद्विनिवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनैकान्तः ॥ इति सूत्रमस्ति तच्च ७२ पृष्ठे टिप्पणी द्रष्टव्या । तत्सिद्धिः इति बं॰ पु॰ पाठः । २० प्रत्य—त इति ता॰ टी॰ पूर्वपक्षसूत्रमिति परिशुद्धिः । २१ नात्ममनसोरित्यादिसूत्रमिति ता॰ टी॰ । २२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २३ ज्ञान—ध इति ता॰ टी॰ । २४ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते अनवरोध इति वर्तत इति भाष्येण सूत्रत्वं प्रतीयते । २५ सिद्धान्तसूत्रमिति वृत्तिः । २६ अत्र ७४ पृष्ठे टिप्पणी द्रष्टव्या । २७ तैश्चा—णामिति ता॰ टी॰ । २८ व्याह—तुरिति ता॰ टी॰ । २९ परिहारसूत्रं नार्थ—त इति ता॰ टी॰ । ३० पूर्वपक्षसूत्रमिति परिशुद्धिः । ३१ तदेतत्सूत्रं वार्तिककारो व्याचष्टे इति ता॰ टी॰ । ३२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ३३ साध्यत्वादिति यथाश्रुतं सूत्रं गृहीत्वेति ता॰ टी॰ । ३४ संशयापाकरणार्थं सूत्रमिति वार्तिकम् । ३५ धार—श्चेति ता॰ टी॰ । ३६ आशङ्कोत्तरसूत्रमिति ता॰ टी॰ । ३७ अत्र ७६ पृष्ठे टिप्पणी द्रष्टव्या ।

नैकदेशत्राससादृश्येभ्यो ऽर्थान्तरभावात् ॥ ३८ ॥ वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३९ ॥ तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥ नातीतानागतयोरितरेतरापेक्षासिद्धिः ॥ ४१ ॥ वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥ कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ४३ ॥ अत्यन्तप्रायैकदेशसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४४ ॥ प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥ प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६ ॥ नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४७ ॥ तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥ शब्दो ऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥ उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥ संबन्धाच्च ॥ ५१ ॥ आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ॥ ५२ ॥ पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः ॥ ५३ ॥ शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥ सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य ॥ ५५ ॥ जातिविशेषे चानियमात् ॥ ५६ ॥ तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५७ ॥ न कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥

---

३८ अत्र ८७ पृष्ठे टिप्पणी द्रष्टव्या । ३९ वर्तमानकालप्रतिषेधार्थं सूत्रमिति वार्तिकम् । ४० एतदनुज्ञापनार्थं सूत्रमिति वार्तिकम् । ४१ अत्र ८८ पृष्ठे टिप्पणी द्रष्टव्या । ४२ अत्र ८९ पृष्ठे टिप्पणी द्रष्टव्या । ४३ अत्र ८९ पृष्ठे टिप्पणी द्रष्टव्या । ४४ अत्य–द्धिरिति ता॰ टी । ४५ प्रसि–त्तिरिति ता॰ टी॰ । ४६ प्रत्य–द्धेरिति ता॰ टी॰ । ४७–४८ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ४९ अत्र ९१ पृष्ठे टिप्पणी द्रष्टव्या । ५० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ५१ अत्र ९२ पृष्ठे टिप्पणी द्रष्टव्या । ५२ अत्र ९२ पृष्ठे टिप्पणी द्रष्टव्या । ५३–५४–५५ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ५६ जाति–त इति ता॰ टी॰ । ५७ तद–भ्य इति ता॰ टी॰ । ५८ सिद्धान्तसूत्रमिति वृत्तिः ।

अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५९ ॥ अनुवादोपपत्तेश्च ॥ ६० ॥ वाक्यविभागस्य चार्थग्रहणात् ॥ ६१ ॥ विध्यर्थवादानुवादवचनविनियोगात् ॥ ६२ ॥ विधिर्विधायकः ॥ ६३ ॥ स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ६४ ॥ विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥ नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ ६६ ॥ शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६७ ॥ मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६८ ॥

इति गौतमसूत्रे द्वितीयाध्यायस्याद्यमाह्निकम् ॥

न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात् ॥ १ ॥ शब्द ऐतिह्यार्थान्तर्भावादनुमानेऽर्थापत्तिसंभवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥ अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥ अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥ प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥ तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥ नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥ लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः ॥ ८ ॥ असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥ तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥

---

५९-६०-६१-६२-६३-६४-एषां सूत्रत्वे प्रमाणं नोपलभ्यते। ६५ विधि-ठ इति ता॰ टी॰। ६६ कोऽस्य सूत्रस्यार्थ इति वार्तिकम्। ६७ शीघ्र-प इति ता॰ टी। ६८ अनन्तरसूत्रावतारणपरं भाष्यं किं पुन प्रतिषेधेति ता टी।

१ अत्र १०० पृष्ठे टिप्पणी द्रष्टव्या। २ अत्र १०१ पृष्ठे टिप्पणी द्रष्टव्या। ३ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते। ४ सैव दूषणमाहेति ता॰ टी॰। वं पुं॰ (नानैकान्तिकत्वमर्थापत्तेरित्याद्यधिकः पाठः)। ५ प्रति-स् इति ता॰ टी। ६ अत्र १०२ पृष्ठे टिप्पणी द्रष्टव्या। ७ नाभा-द्धेरिति ता॰ टी। ८ तत्रानेकधाभिन्नप्रपञ्चस्योदाहरणार्थं सूत्रमिति वार्तिकम्। ९ अत्र १०३ पृष्ठे टिप्पणी द्रष्टव्या। १० तदनुपलब्धेरर्थसिद्धिरलक्षितेष्वहेतुः। एवं वं॰ पु॰ पाठः। अत्र १०४ पृष्ठे टिप्पणी द्रष्टव्या।

न लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥ प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥ आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च ॥ १३ ॥ न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥ १४ ॥ तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १५ ॥ सन्तानानुमानविशेषणात् ॥ १६ ॥ कारणद्रव्यस्य प्रदेशशब्देनाभिधानाद् नित्येष्वप्यव्यभिचार इति ॥ १७ ॥ प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १८ ॥ तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ १९ ॥ अनुपलम्भादप्यनुपलब्धिसद्भावान्नावरणानुपपत्तिरनुपलम्भात् ॥ २० ॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥ अस्पर्शत्वात् ॥ २२ ॥ न कर्मानित्यत्वात् ॥ २३ ॥ नाणुनित्यत्वात् ॥ २४ ॥ संप्रदानात् ॥ २५ ॥ तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥ अध्यापनादप्रतिषेधः ॥ २७ ॥ अभ्यासात् ॥ २८ ॥ नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ २९ ॥ अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः ॥ ३० ॥ तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ३१ ॥ विनाशकारणानुपलब्धेः ॥ ३२ ॥ अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३३ ॥ उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३४ ॥

११ अस्य चार्थस्य ज्ञापनार्थं सूत्रमिति वार्त्तिकम् । १२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । १३ कृतकवदुपचाराच्चेत्यनेन सूत्रेणेति वार्त्तिकम् । १४ अत्र १०६ पृष्ठे टिप्पणी द्रष्टव्या । १५-१६-१७ तत्त्वभाक्तयोः सन्तानानुमान-कारणद्रव्यस्येतिसूत्रैरिति ता॰ टी॰ । १८ अत्र १०८ पृष्ठे टिप्पणी द्रष्टव्या । १९-२० अत्र १०९ पृष्ठे टिप्पणी द्रष्टव्या । २१ अत्र ११० पृष्ठे टिप्पणी द्रष्टव्या । २२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २३ अत्र ११० पृष्ठे टिप्पणी द्रष्टव्या । २४ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २५ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २६ अत्र १११ पृष्ठे टिप्पणी द्रष्टव्या । २७ सिद्धान्तसूत्रमिति वृत्तिः । २८ पूर्वपक्षसूत्रमिति वृत्तिः । २९ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ३०-३१ अत्र ११२ पृष्ठे टिप्पणी द्रष्टव्या । ३२-३३-३४ एषां सूत्रत्वे प्रमाणं नोपलभ्यते ।

पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३५ ॥ विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ ३६ ॥ अस्पर्शत्वादप्रतिषेधः ॥ ३७ ॥ विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३८ ॥ विकारादेशोपदेशात्संशयः ॥ ३९ ॥ प्रकृतिविवृद्धौ विकारवृद्धेः ॥ ४० ॥ न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४१ ॥ नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४२ ॥ द्रव्यविकारे वैषम्यवद् वर्णविकारविकल्पः ॥ ४३ ॥ न विकारधर्मानुपपत्तेः ॥ ४४ ॥ विकारप्राप्तानामपुनरापत्तेः ॥ ४५ ॥ सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४६ ॥ नित्यत्वे ऽविकारादनित्यत्वे चानवस्थानात् ॥ ४७ ॥ नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ४८ ॥ अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः ॥ ४९ ॥ विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ५० ॥ प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५१ ॥ अनियमे नियमान्नानियमः ॥ ५२ ॥ नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५३ ॥ गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपप-

---

३५ उत्तार्थं सूत्रमिति वार्तिकम् । ३६ सिद्धान्तिनः सूत्रान्तरमिति वृत्तिः । ३७ अत्र ११५ पृष्ठे टिप्पणी द्रष्टव्या । ३८ विभ—से इति सूत्रव्याख्यैव भाष्यवार्तिके व्याख्याते इति ता॰ टी. । ३९ अत्र ११६ पृष्ठे टिप्पणी द्रष्टव्या । ४० अत्र ११७ पृष्ठे टिप्पणी द्रष्टव्या । ४१ अत्र १३८ पृष्ठे टिप्पणी द्रष्टव्या । ४२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ४३ अत्र ११७ पृष्ठे टिप्पणी द्रष्टव्या । ४४ अत्र ११८ पृष्ठे टिप्पणी द्रष्टव्या । ४५ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । अपुनरावृत्तेः इति पा॰ ४६ अत्र ११८ पृष्ठे टिप्पणी द्रष्टव्या । एतदुत्तरं तद्विकाराणां सुवर्णभावाव्यतिरेकात् । इत्येकमेव सूत्रं सूत्रोद्धारे दृश्यते । सूत्रत्रयं मुद्रितपुस्तके तेषां सूत्रत्वे प्रमाणं नोपलभ्यते । ४७–४८–४९ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ५० अत्र १२० पृष्ठे टिप्पणी द्रष्टव्या । ५१ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ५२ अत्र १२० पृष्ठे टिप्पणी द्रष्टव्या । ५३ अत्र १२१ पृष्ठे टिप्पणी द्रष्टव्या ।

ऽसवर्णविकाराः ॥ ५४ ॥ ते विभक्त्यन्ताः पदम् ॥ ५५ ॥ तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात्संशयः ॥ ५६ ॥ याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः ॥ ५७ ॥ न तदनवस्थानात् ॥ ५८ ॥ सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावे ऽपि तदुपचारः ॥ ५९ ॥ आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥ ६० ॥ व्यक्त्याकृतियुक्ते ऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ६१ ॥ नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६२ ॥ व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६३ ॥ व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६४ ॥ आकृतिर्जातिलिङ्गाख्या ॥ ६५ ॥ समानप्रसवात्मिका जातिः ॥ ६६ ॥

इति गौतमसूत्रे द्वितीयो ऽध्यायः ॥ २ ॥

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥ न विषयव्यवस्थानात् ॥ २ ॥ तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥ शरीरदाहे पातकाभावात् ॥ ४ ॥

---

५४ अत्र १२१ पृष्ठे टिप्पणी द्रष्टव्या । ५५ तेवि—इमिति ता॰ टी॰ । ५६ अस्य सूत्रत्वे इतिहासो ऽपि संशयः । ५७ अत्र १२२ पृष्ठे टिप्पणी द्रष्टव्या । ५८ अत्र १२२ पृष्ठे टिप्पणी द्रष्टव्या । ५९ सहचरणादिसूत्रमिति वार्तिकम् ।

६० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ६१ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ६२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ६३ पारमर्षसूत्रं व्यक्त्याकृतिजातयस्तु पदार्थ इति ता॰ टी॰ । ६४ व्यक्तिर्गुणविशेषाश्रयो मूर्तिरिति सूत्रमिति वार्तिकम् । ६५ आकृ—ख्या इति ता॰ टी॰ । ६६ समा—तिरिति ता॰ टी॰ । १ अत्र १२८ पृष्ठे टिप्पणी द्रष्टव्या । २ वि—तइति ता॰ टी॰ । ३ तद्व—धइति ता॰ टी॰ । तद्व्यवस्थानादात्मसद्भावादप्रतिषेध इति सूत्रमिति वार्तिकम् । ४ अत्र १३० पृष्ठे टिप्पणी द्रष्टव्या ।

तदभावः सात्मकप्रदाहे ऽपि तन्नित्यत्वात् ॥ ५ ॥ न कार्याश्रयकर्तृवधात् ॥ ६ ॥ सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥ नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥ एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥ अवयवनाशे ऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥ दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥ इन्द्रियान्तरविकारात् ॥ १२ ॥ न स्मृतेः स्मर्तव्यविषयत्वात् ॥ १३ ॥ तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥ अपरिसंख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥ नात्मप्रतिपत्तिहेतूनां मनसि संभवात् ॥ १६ ॥ ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥ नियमश्च निरनुमानः ॥ १८ ॥ पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः ॥ १९ ॥ पद्मादिषु प्रबोधसंमीलनविकारवत्तद्विकारः ॥ २० ॥ नोष्णशीतवर्षकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २१ ॥ प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥ अयसो ऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥ २३ ॥ नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥

---

५ तद–त् इति ता॰ टी॰ । ६ न कार्याश्रयकर्तृवधात् इति सूत्रमिति वार्तिकम् । ७ सव्येन चक्षुषा दृष्टमितरेण प्रत्यभिजानातीति सूत्रमिति वार्तिकम् । सव्य–त् इति ता॰ टी॰ । ८ नैक–त् इति ता॰ टी॰ । इदं सूत्रमिति वार्तिकम् । ९ एक–त्वमिति ता॰ टी॰ । १० अपरे ▯ अवयवनाशे ऽप्यवयव्युपलब्धेरहेतुरिति परिहारान्तरं वर्णयन्ति तस्योत्तरं दृष्टान्तविरोधादिति सूत्रमिति वार्तिकादस्य सूत्रत्वे मूलं चिन्त्यम् । ११ अस्य सूत्रत्वे पूर्वसूत्रस्यवार्तिकंप्रमाणम् । १२ इन्द्रिया–त् इति ता॰ टी॰ प्रतिसंधानं प्रकारान्तरेण सूचयतीति परिशुद्धिः । १३ अस्याक्षेपसूत्रमिति ता॰ टी॰ । १४ तदा–ध इति ता॰ टी॰ । १५ ध॰ पु॰ पञ्चदशसूत्रं नास्ति । अस्यसूत्रत्वे वनिकृतो ऽपि संशयः । १६–१७–१८ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । १९ अस्यार्थस्य ज्ञापनार्थं पूर्वाभ्यस्तेत्यादि सूत्रमिति वार्तिकम् । २० अत्र १३८ पृष्ठे टिप्पणी द्रष्टव्या । २१ नाकस्मिकः पद्मादिप्रबोधसमीलनविकार इति सूत्रार्थ इति वार्तिकम् । २२ अत्र १३८ पृष्ठे टिप्पणी द्रष्टव्या । २३ अत्र १३८ पृष्ठे टिप्पणी द्रष्टव्या । २४ नान्यत्र प्रवृत्त्यभावादिति सूत्रमिति वार्तिकम् ।

वीतरागजन्मादर्शनात् ॥ २५ ॥ सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥ २६ ॥ न संकल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥ पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥ श्रुतिप्रामाण्याच्च ॥ २९ ॥ कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात्संशयः ॥ ३० ॥ महदणुग्रहणात् ॥ ३१ ॥ रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम् ॥ ३२ ॥ तदनुपलब्धेरहेतुः ॥ ३३ ॥ नानुमीयमानस्य प्रत्यक्षतो ऽनुपलब्धिरभावहेतुः ॥ ३४ ॥ द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३५ ॥ अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः ॥ ३६ ॥ कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३७ ॥ अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः ॥ ३८ ॥ मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ३९ ॥ न रात्रावप्यनुपलब्धेः ॥ ४० ॥ बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितो ऽनुपलब्धिः ॥ ४१ ॥ अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥ नक्तंचरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

---

२५ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २६ अनैकान्तिकपक्षे सूत्रमिति वार्तिकम् । २७ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २८ सिद्धान्तसूत्रमिति वृत्तिः । अस्यार्थे बङ्गाक्षरलिखितपुस्तके पार्थिवाप्यतैजसं तद्गुणोपलब्धेः १ । निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् २ । गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ३ । सूत्रत्रयमस्ति तद्गौतमप्रणीतं न भवतीति भाष्यालोचनात्प्रतीयते । २९ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ३० संशयप्रतिपादनार्थं सूत्रमिति वार्तिकम् । ३१ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ३२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ३३ अत्र १४३ पृष्ठे टिप्पणी द्रष्टव्या । ३४ एवं तर्हीदं सूत्र नोपलब्धेः कारणप्रतिपादकमिति वार्तिकम् । ३५ शेषं भाष्ये इति वार्तिकस्वरसादस्य सूत्रत्वं सिध्यति । ३६ एवं च सूत्रमिति वार्तिकम् । अत्र १४४ पृष्ठे टिप्पणी द्रष्टव्या । ३७ शेषं भाष्य इति वार्तिकस्वरसादस्य सूत्रत्वं सिध्यति । ३८–३९ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ४० अत्र १४५ पृष्ठे टिप्पणी द्रष्टव्या । ४१ अत्र १४५ पृष्ठे टिप्पणी द्रष्टव्या । ४२ अभित् इति ता॰ टी॰ । ४३ नक्तंचररश्मिदर्शनाच्चेति दृष्टान्तसूत्रम् इति वार्तिकम् ।

कारणानुपलब्धिवद्दृश्यानुत्पत्तिः ॥ १३ ॥ लिङ्गतो ग्रहणा-
न्नानुपलब्धिः ॥ १४ ॥ न पयसः परिणामगुणान्तरप्रादु-
र्भावात् ॥ १५ ॥ व्यूहान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्ति-
रनुमानात् ॥ १६ ॥ क्वचिद्विनाशकारणानुपलब्धेः क्व-
चिच्चोपलब्धेरनेकान्तः ॥ १७ ॥ नेन्द्रियार्थयोस्तद्विनाशेऽपि
ज्ञानावस्थानात् ॥ १८ ॥ युगपज्ज्ञेयानुपलब्धेश्च न
मनसः ॥ १९ ॥ तदात्मगुणत्वेऽपि तुल्यम् ॥ २० ॥
इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः ॥ २१ ॥ नोत्प-
त्तिकारणानपदेशात् ॥ २२ ॥ विनाशकारणानुपलब्धेः
चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २३ ॥ अनित्यत्वग्रहा-
द्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २४ ॥ ज्ञानसमवेतात्मप्र-
देशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २५ ॥
नान्तःशरीरवृत्तित्वान्मनसः ॥ २६ ॥ साध्यत्वादहे-
तुः ॥ २७ ॥ स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २८ ॥
न तदाशुगतित्वान्मनसः ॥ २९ ॥ न स्मरणकालानिय-
मात् ॥ ३० ॥ आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगवि-
शेषः ॥ ३१ ॥ व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण
समानम् ॥ ३२ ॥ प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावा-

---

१३-१४ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते। १५ अस्य सूत्रत्वे प्रमाणं नोप-लभ्यते। १६ शेषं भाष्ये इति वार्तिकस्वरसादस्य सूत्रत्वम्। १७ सिद्धान्तिनः सूत्रमिति वृत्तिः। १८ सिद्धान्तसूत्रमिति वृत्तिः। १९ युगपज्ज्ञेयानुपलब्धेश्च न मनस इति पूर्वसूत्रस्यैवेति परिशुद्धिः। २० तदात्मगुणत्वेऽपि तुल्यमिति सूत्रमेवेति परिशुद्धिः। २१ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते। २२ अत्र १६९ पृष्ठे टिप्पणी द्रष्टव्या। २३ विना गइति ता॰ टी॰। २४-२५-२६ एषां सूत्रत्वे प्रमाणं नोपलभ्यते। २७ साध्य-तुरिति ता॰ टी॰। २८ स्म-धइति ता॰ टी॰। २९ न त-सइति ता॰ टी॰। ३० न स्मरत्-इति ता॰ टी॰। ३१ आत्मप्र इति ता॰ टी॰। ३२ व्यास-नम् इति ता॰ टी॰।

दयुगपत्स्मरणम् ॥ ३३ ॥ प्रातिभवत्तु प्रणिधानाद्यनपेक्षे
स्मार्ते यौगपद्यप्रसङ्गः ॥ ३४ ॥ ज्ञस्येच्छाद्वेषनिमित्तत्वादा-
रम्भनिवृत्त्योः ॥ ३५ ॥ तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थि-
वाद्येष्वप्रतिषेधः ॥ ३६ ॥ परश्वादावारम्भनिवृत्तिदर्शना-
त् ॥ ३७ ॥ कुम्भादिष्वनुपलब्धेरहेतुः ॥ ३८ ॥ नियमा-
नियमौ तु तद्विशेषकौ ॥ ३९ ॥ यथोक्तहेतुत्वात्पार-
तन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ४० ॥ परिशेषाद्य-
थोक्तहेतूपपत्तेश्च ॥ ४१ ॥ स्मरणं त्वात्मनो ज्ञस्वाभा-
व्यात् ॥ ४२ ॥ प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्य-
परिग्रहाश्रयाश्रितसंबन्धानन्तर्यवियोगैककार्यविरोधातिश-
यप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माध-
र्मनिमित्तेभ्यः ॥ ४३ ॥ कर्मानवस्थायिग्रहणात् ॥ ४४ ॥
अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्संपाते रूपाव्यक्तग्रह-
णवत् ॥ ४५ ॥ हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४६ ॥
ग्रहणे हेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पा-
त् ॥ ४७ ॥ प्रदीपार्चिःसंतत्यभिव्यक्तग्रहणवत्तद्ग्रह-
णम् ॥ ४८ ॥ द्रव्ये स्वगुणपरगुणोपलब्धेःसंशयः ॥ ४९ ॥
यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ५० ॥ न पाकजगुणा-

---

बं॰ पु॰ चतुस्त्रिंशत्तमं सूत्रं नास्ति । बं॰ पु॰ अष्टत्रिंशत्तममपि नास्ति ।
बं॰ पु॰ चतुश्चत्वारिंशत्तमसूत्रं नास्ति ।

३३-३४ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ३५ ज्ञातुरथेच्छादय इति सूत्रार्थ इति वार्तिकम् । ३६ अत्र १७४ पृष्ठे टिप्पणी द्रष्टव्या । ३७ अस्य सूत्रत्वे प्रमाणं नास्ति । ३८ अस्य सूत्रत्वे प्रमाणं नास्ति । ३९ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ४० यथो—म इति ता॰ टी॰ । ४१-४२ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ४३ प्रणिधानादिसूत्रमिति वार्तिकम् । १७८ पृष्ठे टिप्पणी द्रष्टव्या । ४४ कर्मानवस्थायिग्रहणादिति सूत्रमिति वार्तिकम् । ४५-४६-४७-४८ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ४९ इदं सूत्रमिति वार्तिकम् । ५० अत्र १८२ पृष्ठे टिप्पणी द्रष्टव्या ।

न्तरोत्पत्तेः ॥ ५१ ॥ प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५२ ॥ शरीरव्यापित्वात् ॥ ५३ ॥ केशनखादिष्वनुपलब्धेः ॥ ५४ ॥ त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५५ ॥ शरीरगुणवैधर्म्यात् ॥ ५६ ॥ न रूपादीनामितरेतरवैधर्म्यात् ॥ ५७ ॥ ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५८ ॥ ज्ञानायौगपद्यादेकं मनः ॥ ५९ ॥ न युगपदनेकक्रियोपलब्धेः ॥ ६० ॥ अलातचक्रदर्शनवत्तदुपलब्धिराशुसंचारात् ॥ ६१ ॥ यथोक्तहेतुत्वाच्चाणु ॥ ६२ ॥ पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६३ ॥ भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ॥ ६४ ॥ न साध्यसमत्वात् ॥ ६५ ॥ नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६६ ॥ तथाहारस्य ॥ ६७ ॥ प्राप्तौ चानियमात् ॥ ६८ ॥ शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ॥ ६९ ॥ एतेनानियमः प्रत्युक्तः ॥ ७० ॥ उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः ॥ ७१ ॥ तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ७२ ॥ न करणाकरणयोरारम्भदर्शनात् ॥ ७३ ॥ मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७४ ॥ नित्यत्वप्र-

---

५१ सिद्धान्तसूत्रमिति वृत्तिः । ५२ सिद्धान्तसूत्रमिति वृत्तिः । ५३ शरीरव्यापित्वादित्यस्य सूत्रत्वेति परिशुद्धिः । ५४ अत्र १८४ पृष्ठे टिप्पणी द्रष्टव्या । ५५ त्वक्पर्यन्तत्वाच्छरीरस्येति सूत्रव्याघातादिति परिशुद्धिः । ५६-५७ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ५८ उक्तः सूत्रार्थ इति वार्तिकम् । ५९ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ६० शेषं भाष्ये इति वार्तिकस्यारस्यादस्य सूत्रत्वम् । ६१ अस्योत्तरद्वारकं सूत्रमिति वार्तिकम् । ६२ इदं सूत्रमिति परिशुद्धिः । ६३ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ६४ अत्र १८७ पृष्ठे टिप्पणी द्रष्टव्या । ६५ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ६६-६७ पूर्वसूत्रप्रतीकेन पूरयतीति तात्पर्यटीकादर्शनादनयोः सूत्रत्वम् । ६८ प्राप्तौ-तु इति ता० टी० । ६९ प्राप्तस्तर्हि इत्यधिकः ग० पु० । अस्योत्तरद्वारकं सूत्रमिति वार्तिकम् । ७० इदं सूत्रमिति परिशुद्धिः । ७१ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ७२-७३-७४ एषां सूत्रत्वे प्रमाणं नोपलभ्यते ।

सङ्गश्च प्रायणानुपपत्तेः ॥ ७५ ॥ अणुश्यामतानित्यत्ववदेतत्स्यात् ॥ ७६ ॥ नाकृताभ्यागमप्रसङ्गात् ॥ ७७ ॥

इति गौतमसूत्रे तृतीयोध्यायः ॥ ३ ॥

प्रवृत्तिर्यथोक्ता ॥ १ ॥ तथा दोषाः ॥ २ ॥ तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥ नैकप्रत्यनीकभावात् ॥ ४ ॥ व्यभिचारादहेतुः ॥ ५ ॥ तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥ निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥ न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥ नित्यनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥ आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥ व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥ न घटाद् घटानिष्पत्तेः ॥ १२ ॥ व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥ अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥ व्याघातादप्रयोगः ॥ १५ ॥ नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥ न विनष्टेभ्यो ऽनिष्पत्तेः ॥ १७ ॥ क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥ ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥ १९ ॥ न पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥ तत्कारितत्वादहेतुः ॥ २१ ॥ अनिमित्ततो भावोत्पत्तिः

---

७५-७६ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ७७ अत्र १९२ पृष्ठे टिप्पणी द्रष्टव्या । १ शङ्कानिराकरणाय सूत्रमित्याहेति ता॰ टी॰ । २ प्रवृत्तिदोषसूत्राभ्यामिति परिशुद्धिः । ३ सिद्धान्तसूत्रमिति वृत्तिः । ४-५-६-७-८-९ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । १० सिद्धान्तसूत्रमिति वृत्तिः । ११ रूपादिमत्सामग्रीपूर्वकं गवादि व्यक्तमिति सूत्रार्थ इति वार्तिकम् । १२-१३-१४-१५-१६ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । १७ अत्र १९८ पृष्ठे टिप्पणी द्रष्टव्या । १८ पूर्वं बीजविनाशः पश्चादङ्कुरोत्पत्तिरिति सूत्रार्थ इति वार्तिकम् । १९ सूत्रयति ईश्वर इतीति परिशुद्धिः । २० सिद्धान्तसूत्रमिति परिशुद्धिः । २१ तत्र सूत्र योजयति तत्कारितत्वादिति परिशुद्धिः ।

कण्टकतैदण्यादिदर्शनात् ॥ २२ ॥ अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥ निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥ सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥ नानित्यता नित्यत्वात् ॥ २६ ॥ तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥ नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्थानात् ॥ २८ ॥ सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥ नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥ तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥ नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥ न व्यवस्थानुपपत्तेः ॥ ३३ ॥ सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥ नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥ लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥ सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥ न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥ न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥ व्याहतत्वादयुक्तम् ॥ ४० ॥ संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥ न कारणावयवभावात् ॥ ४२ ॥ निरवयवत्वादहेतुः ॥ ४३ ॥ सद्यः कालान्तरे च निष्पत्तेः संशयः ॥ ४४ ॥ न सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥ कालान्तरेणानिष्पत्तिहेतु-

---

३५ रे नास्ति । ४४ फलनिष्पत्तेः । प्रागुत्पत्तेरुत्पत्तिधर्म्मकमसदित्यसत्त्वोपपादकदर्शनात् इतिसूत्रानन्तरं तत्स्थाने ऽस्ति ।

२२ दृष्टान्तसूत्रमिति वार्तिकम् । २३–२४ नव्यास्तु सूत्रद्वयमिदं व्यावक्षत इति वृत्तिः । २५ पूर्वपक्षसूत्रमिति वृत्तिः । सूत्रस्य दृष्टान्तार्थत्वादिति वार्तिकम् । २६ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २७ तदनित्यत्वमित्यादिसूत्रमिति परिशुद्धिः । २८ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २९ आक्षेपसूत्रमिति वृत्तिः । ३० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ३१ ३२–३३ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ३४ पूर्वपक्षसूत्रमिति वृत्तिः । ३५–३६ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ३७–३८ किं पुनरनेन सूच्यते क्रियते । पूर्वसूत्रविरोधश्चोच्यत इति वार्तिकादनयोः सूत्रत्वम् । ३९–४० अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ४१ प्रतिषेधद्वारकं सूत्रमिति वार्तिकम् । ४२ एकान्तोप्ययं सूत्रार्थ इति वार्तिकम् । ४३–४४–४५ एषां सूत्रत्वे प्रमाणं नोपलभ्यते ।

विनाशात् ॥ ४६ ॥ प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥ नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ॥ ४८ ॥ उत्पादव्ययदर्शनात् ॥ ४९ ॥ बुद्धिसिद्धं तु तदसत् ॥ ५० ॥ आश्रयाव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥ प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥ न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५३ ॥ तत्संबन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५४ ॥ विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥ न सुखस्यान्तरालनिष्पत्तेः ॥ ५६ ॥ बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥ दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥ ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥ प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥ समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥ पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥ सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥ न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६४ ॥ न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६५ ॥ प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेप्यनित्यत्वम् ॥ ६६ ॥ अणुश्यामतानित्यत्ववद्वा ॥ ६७ ॥ न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६८ ॥

इति श्रीगौतमसूत्रे चतुर्थाध्यायस्याद्यमाह्निकम् ॥

---

४६-४७ एषां सूत्रत्वे प्रमाणं नोपलभ्यते। बं॰ पु॰ एकोनपञ्चाशत्तमं सूत्रं नास्ति। ५०ं बं॰ पु॰ न चाधिकमस्ति। ४८ सूत्रमेवं योजनीयमिति परिशुद्धिः। ४९-५०-५१ उत्पादव्ययदर्शनाद् बुद्धिसिद्धं तु तदसदित्यनयोरपि सूत्रत्व सिद्धं भवतीति परिशुद्धिः। ५२ आश्रयव्यतिरेकात्तु सिद्ध इति सूत्रार्थः इति वार्तिकम्। ५३-५४ सूत्रार्थैकथनेनैव भाष्यवार्तिके व्याख्यात इति ता टी॰। ५५-५६ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते। ५७-५८ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते। ५९ अपवर्गः प्रत्याख्यायते ऽनेन सूत्रेणेति वार्तिकम्। ६० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते। ६१-६२ समारोपणादात्मन्यप्रतिषेध इति सूत्रेण पात्रचयान्तानुपपत्तेश्च फलाभाव इत्यनेनापि इति परिशुद्धिः। ६३-६४-६५-६६-६७-६८ एषां सूत्रत्वे प्रमाणं नोपलभ्यते।

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥ दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ॥ २ ॥ तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥ विद्याविद्याद्वैविध्यात्संशयः ॥ ४ ॥ तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥ वृत्त्यनुपपत्तेरपि तर्हि न संशयः ॥ ६ ॥ कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ॥ ७ ॥ तेषु चावृत्तेरवयव्यभावः ॥ ८ ॥ पृथक् चावयवेभ्यो ऽवृत्तेः ॥ ९ ॥ न चावयव्यवयवाः ॥ १० ॥ एकस्मिन्भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ११ ॥ अवयवान्तराभावेप्यवृत्तेरहेतुः ॥ १२ ॥ केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ १३ ॥ स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १४ ॥ अवयवावयविप्रसङ्गश्चैवमा प्रलयात् ॥ १५ ॥ न प्रलयो ऽणुसद्भावात् ॥ १६ ॥ परं वा त्रुटेः ॥ १७ ॥ आकाशव्यतिभेदात् तदनुपपत्तिः ॥ १८ ॥ आकाशासर्वगतत्वं वा ॥ १९ ॥ अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥ २० ॥ शब्दसंयोगविभवाच्च सर्वगतम् ॥ २१ ॥ अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २२ ॥ मूर्तिमतां च संस्थानोपपत्तेरवयव-

---

वं पु० विंशतितमं सूत्रं नास्ति ।

१ अत्र २२५ पृष्ठे टिप्पणी द्रष्टव्या । २ सूत्रं दोषनिमित्तमित्यादि ता० टी० । ३ सूत्रं तन्निमित्तमिति ता० टी० । ४ संशयप्रदर्शनाय सूत्रमिति वृत्तिः । ५-६-७ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ८ अस्य सूत्रत्वे वृत्तिकृतो ऽपि संशयः । ९ पूर्वपक्षिसूत्रमिति वृत्तिः । १० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ११ सिद्धान्तसूत्रमिति वृत्तिः । १२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । १३ इदं सूत्रमिति ता० टी० । १४ पुर्शक्तिः इति वं० पु० । अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । १५ दोषान्तराभिधानाय सूत्रमिति वृत्तिः । अत्र २३० पृष्ठे टिप्पणी द्रष्टव्या । १६-१७ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । १८-१९ संयोगमात्र चोत्तरसूत्रेणानूद्यत इति वार्तिकादस्योत्तरस्य च सूत्रत्वम् । २०-२१-२२ एषां सूत्रत्वे प्रमाणं नोपलभ्यते ।

सद्भावः ॥ २३ ॥ संयोगोपपत्तेश्च ॥ २४ ॥ अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २५ ॥ बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥ २६ ॥ व्याहतत्वादहेतुः ॥ २७ ॥ तदाश्रयत्वादपृथग्ग्रहणम् ॥ २८ ॥ प्रमाणतश्चार्थप्रतिपत्तेः ॥ २९ ॥ प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥ स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ३१ ॥ मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३२ ॥ हेत्वभावादसिद्धिः ॥ ३३ ॥ स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥ मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे ॥ ३५ ॥ बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥ तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥ समाधिविशेषाभ्यासात् ॥ ३८ ॥ नार्थविशेषप्राबल्यात् ॥ ३९ ॥ क्षुदादिभिः प्रवर्त्तनाच्च ॥ ४० ॥ पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ४१ ॥ अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४२ ॥ अपवर्गेऽप्येवं प्रसङ्गः ॥ ४३ ॥ न निष्पन्नावश्यंभावित्वात् ॥ ४४ ॥ तदभावश्चापवर्गे ॥ ४५ ॥ तदर्थं यमनियमाभ्यामात्म-

---

२३ अस्य सूत्रत्वे ननु इदं सूत्रं संस्थानवत्त्वादित्यनेनैव चरितार्थमित्युत्तरसूत्रस्थं वार्तिकं प्रमाणम् । २४ अस्य सूत्रत्वे संयोगित्वादिति सूत्रार्थे इति वार्त्तिकं प्रमाणम् । २५ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २६ सं॰ पु॰ तदनुपलब्धिरिति नास्ति । पूर्वपक्षसूत्रमिति वृत्तिः । २७–२८–२९–३०–३१ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ३२–३३ अनयोः सूत्रत्वे शङ्कते सूत्राभ्यामिति वृत्तिर्मूलम् । सं॰ पु॰ दुर्गत्रिंशत्तमादिसूत्रद्वयं नास्ति । ३४–३५–३६–३७–३८ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ३९ अस्योत्तरसूत्रमिति ता॰ टी । ४० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ४१ अत्र २३८ पृष्ठे टिप्पणी द्रष्टव्या । ४२–४३ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ४४ अत्र २३८ पृष्ठे टिप्पणी द्रष्टव्या । ४५ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते ।

संस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४६ ॥ ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४७ ॥ तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात् ॥ ४८ ॥ प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥ तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥ ताभ्यां विगृह्य कथनम् ॥ ५१ ॥

## इति गौतमसूत्रे चतुर्थोऽध्यायः ॥ ४ ॥

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥ साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥ गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥ साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षव-

---

४६–४७–४८ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ४९ अत्र २४० पृष्ठे टिप्पणी द्रष्टव्या । ५० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ५१ अत्र २४० पृष्ठे टिप्पणी द्रष्टव्या । १ साधर्म्यादिसूत्रमिति वार्तिकम् । जातिविशेषलक्षणावतारहेतुतया संगतेन विभागसूत्रेण सह त्रिभिः सूत्रैः सत्प्रतिपक्षदेशनाभासप्रकरणं तदवान्तरसूत्रसंपिण्डने त्रिभिः सूत्रैः साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिषट्कप्रकरणं तथा द्विसूत्रकं प्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तादिविकल्पोपक्रमजातिद्वयप्रकरणं तथा त्रिभिः सूत्रैर्व्यवस्थितात्र्यवस्थितोपक्रमजातिद्वयप्रकरणं तथा द्विद्विसूत्रकाण्येकैकजातिकानि द्वादश प्रकरणानि कथाभासरूपषट्पक्षीप्रकरणं चेति प्रथमाह्निके सप्तदश प्रकरणानि । अथ विभागसूत्रेण सह षड्भिः सूत्रैः प्रतिज्ञोपलक्षितोक्रमाचाश्रयनिग्रहस्थानपञ्चकप्रकरणं तथा चतुर्भिः सूत्रैः प्रकृतोपयोगिशब्दार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणं तथा त्रिसूत्रकं स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणं तथा द्विसूत्रकं पुनरुक्तनिग्रहस्थानप्रकरणं तथा चतुःसूत्रमनुत्तरफलनिग्रहस्थानचतुष्कप्रकरणं तथा त्रिसूत्रकं भ्रान्तोत्तरनिग्रहस्थानत्रिकप्रकरणं तथा द्विसूत्रकं प्रमाणान्तरोपपन्नप्रमाणाभासाभ्यनिग्रहस्थानद्विकप्रकरणमित्येवं द्वितीयाह्निके सप्तप्रकरणानीति परिशुद्धिदर्शनात् पञ्चमाध्यायसूत्रनिर्णयः ।

२–३ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते ।

र्याद्वर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥ किञ्चित्साधर्म्यादुपसं-
हारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥ साध्यातिदेशाच्च दृष्टा-
न्तोपपत्तेः ॥ ६ ॥ प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या
ऽविशिष्टत्वादप्राप्त्या ऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥
घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥
दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन
प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥ प्रदीपोपादानप्रसङ्गनिवृत्ति-
वत्तद्विनिवृत्तिः ॥ १० ॥ प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टा-
न्तः ॥ ११ ॥ प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥
तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥
सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्या-
त्संशयसमः ॥ १४ ॥ साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा
वा संशये ऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामा-
न्यस्याप्रतिषेधः ॥ १५ ॥ उभयसाधर्म्यात् प्रक्रियाप्रसिद्धेः
प्रकरणसमः ॥ १६ ॥ प्रतिपक्षात्प्रकरणप्रसिद्धेः प्रतिषेधा-
नुपपत्तिः ॥ १७ ॥ त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥
न हेतुतः कार्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥ प्रतिषेधानुप-
पत्तेः प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥ अर्थापत्तितः प्रतिपक्ष-
सिद्धेरर्थापत्तिसमः ॥ २१ ॥ अनुक्तस्यार्थापत्तेः पक्षहानेरु-

---

११ ब॰ पु॰ च नास्ति १६ बं॰ पु॰ प्रसिद्धेरित्यत्र इति नास्ति । १७ बं॰ पु॰ प्रकरणप्रसिद्धेरित्यत्र प्रेति नास्ति । प्रतिपक्षोपपत्तेः इति सूत्ररूपमस्ति ।

४ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ५ हेत्वर्थापरिज्ञानादिति सूत्रार्थ इति वार्तिकम् । ६–७ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ८ इदं सूत्रमिति ता॰ टी॰ ९–१०–११–१२–१३–१४ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । १५ अत्र २४७ पृष्ठे टिप्पणी द्रष्टव्या । १६–१७–१८ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । १९ बं॰ पु॰ कार्यमित्यत्र साध्यमित्यस्ति । विरोधः सूत्रार्थ इति वार्तिकम् । २० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २१ उदाहरणपुरःसरं सूत्रं योजयतीति ता॰ टी॰ ।

संस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४६ ॥ ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४७ ॥ तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात् ॥ ४८ ॥ प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥ तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥ ताभ्यां विगृह्य कथनम् ॥ ५१ ॥

इति गौतमसूत्रे चतुर्थोऽध्यायः ॥ ४ ॥

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥ साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥ गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥ साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षव-

४६–४७–४८ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । ४९ अत्र २४० पृष्ठे टिप्पणी द्रष्टव्या । ५० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ५१ अत्र २४० पृष्ठे टिप्पणी द्रष्टव्या । १ साधर्म्यादिसूत्रमिति वार्तिकम् । जातिविशेषलक्षणावसरोद्देशतया वगतेन विभागसूत्रेण सह त्रिभिः सूत्रैः सत्प्रतिपक्षदेशनाभासप्रकरणं तदयोत्तरसूत्रसमिपदहने त्रिभिः सूत्रैः साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिषट्कप्रकरणं तथा द्विसूत्रकं प्राप्त्यप्राप्तियुगनद्धव्याप्तिविकल्पोपक्रमजातिद्वयप्रकरणं तथा त्रिभिः सूत्रैर्व्यवस्थिताव्यवस्थितोपक्रमजातिद्वयप्रकरणं तथा द्विद्विसूत्रकाण्येकैकजातिकानि द्वादश प्रकरणानि कथाभासरूपषट्पक्षीप्रकरणं चेति प्रथमाह्निके सप्तदश प्रकरणानि। अथ विभागसूत्रेण सह षड्भिः सूत्रैः प्रतिज्ञोपलक्षितोक्तमात्राश्रयनिग्रहस्थानपञ्चकप्रकरणं तथा चतुर्भिः सूत्रैः प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणं तथा त्रिसूत्रकं स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणं तथा द्विसूत्रकं पुनरुक्तनिग्रहस्थानप्रकरणं तथा चतुःसूत्रमनुत्तरफलनिग्रहस्थानचतुष्कप्रकरणं तथा त्रिसूत्रकं भ्रान्तोत्तरनिग्रहस्थानत्रिकप्रकरणं तथा द्विसूत्रकं प्रमाणान्तरोपनयनप्रयासोद्भाव्यनिग्रहस्थानद्विकप्रकरणमित्येवं द्वितीयाह्निके सप्तप्रकरणानीति परिशुद्धिदर्शनात् पञ्चमाध्यायसूत्रनिर्णयः ।

२–३ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते ।

र्थावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥ किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥ साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥ प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥ घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥ दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥ प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥ प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥ प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥ तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥ सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः ॥ १४ ॥ साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशये ऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥ उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥ प्रतिपक्षात्प्रकरणप्रसिद्धेः प्रतिषेधानुपपत्तिः ॥ १७ ॥ त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥ न हेतुतः कार्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥ प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥ अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥ अनुक्तस्यार्थापत्तेः पक्षहानेरु-

---

११ ब॰ पु॰ च नास्ति १६ वं॰ पु॰ प्रसिद्धेरित्यत्र इति नास्ति । १७ बं॰ पु॰ प्रकरणप्रसिद्धेरित्यत्र प्रेति नास्ति । प्रतिपक्षोपपत्तेः इति सूत्ररूपमस्ति ।

४ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ५ हेत्वर्थापरिज्ञानादिति सूत्रार्थ इति वार्तिकम् । ६–७ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते । ८ इदं सूत्रमिति ता॰ टी॰ ९–१०–११–१२–१३–१४ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । १५ अत्र २४७ पृष्ठे टिप्पणी द्रष्टव्या । १६–१७–१८ एषां सूत्रत्वे प्रमाणं नोपलभ्यते । १९ ब॰ पु॰ कार्य्येत्यत्र साध्येत्यस्ति । विरोधः सूत्रार्थ इति वार्तिकम् । २० अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । २१ उदाहरणपुरःसरं सूत्र योजयतीति ता॰ टी॰।

पपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥ एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥ क्वचित्तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ॥ २४ ॥ उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥ उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥ निर्दिष्टकारणाभावेप्युपलम्भाद् उपलब्धिसमः ॥ २७ ॥ कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥ तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥ ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥ साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥ साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च ॥ ३३ ॥ दृष्टान्ते च साध्यसाधनभावेन धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥ ३४ ॥ नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥ प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥ प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥ कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥ प्रतिषेधेपि समा-

---

३४ वं॰ पु॰ प्रयातमित्यधिकमस्ति।

२२ अस्य प्रत्यादेशसूत्रमिति वार्तिकम्। २३ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते। २४ वं पु॰ क्वचिच्चोपपत्तेरिति नास्ति। अस्य प्रत्यादेशसूत्रमिति ता॰ टी॰। २५ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते। २६ विरोधः सूत्रार्थ इति वार्तिकम्। २७ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते। २८ व-पु स्नुपलब्धिसमः इत्यत्र इत्यतिदेश इत्येव पाठः। अस्य प्रत्याख्यानसूत्रमिति ता॰ टी॰। २९–३० अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते। ३१ ममापि तु सर्वजनप्रत्यात्मवेदनीयेत्याह सूत्रकार इति ता॰ टी॰। ३२ व॰ पु॰ च नास्ति। अस्य सूत्रत्वे प्रमाणं नोपलभ्यते। ३३ अस्य प्रत्याख्यानसूत्रमिति ता॰ टी॰। ३४–३५ अनयोः सूत्रत्वे प्रमाणं नोपलभ्यते। ३६ अस्य प्रत्याख्यानसूत्रमिति ता॰ टी॰। ३७ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते। ३८ सूत्र कार्यान्यत्वे इति ता॰ टी॰।

षो दोषः ॥ ३९ ॥ सर्वत्रैवम् ॥ ४० ॥ प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥ प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥ स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोष इति ॥ ४३ ॥

इति गौतमसूत्रे पञ्चमाध्यायस्याद्यमाह्निकम् ॥

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगो ऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥ प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञ हानिः ॥ २ ॥ प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥ प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥ पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥ अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥ प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् ॥ ७ ॥ वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥ परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥ पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ॥ १० ॥ अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥ हीनमन्य-

---

३९ तदेतत्सूत्रावतारपरं भाष्यमिति ता· टी· । ४० सर्वासु जातिष्वेवं युक्तिरिति सूत्रार्थ इति वार्तिकम् । ४१-४२-४३ एषां सूत्रत्वे प्रमाणं नोपलभ्यते ।

६ थं· पु· मिच्छतो इति नास्ति ।

एतदाह्निकस्यसूत्राणां सूत्रत्वे वृत्तिवार्तिकतात्पर्यटीकासु विशिष्य प्रमाणं नोपलभ्यते ऽथापि निग्रहस्थानविभागतद्विशेषलक्षणपरत्वेनैषां सूत्रत्वं निर्विवादम् ।

९ अपि नास्ति थं· पु· ।   ११ वचनं नास्ति थं· पु· ८·

तमेनाप्यवयवेन न्यूनम् ॥ १२ ॥ हेतूदाहरणाधिकमधिकम् ॥ १३ ॥ शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥ अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥ १५ ॥ विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १६ ॥ अविज्ञातं चाज्ञानम् ॥ १७ ॥ उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥ कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥ १९ ॥ स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २० ॥ निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २१ ॥ अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २२ ॥ सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥ हेत्वाभासाश्च यथोक्ताः ॥ २४ ॥

इति गौतमसूत्रे पञ्चमाध्यायः ॥

॥ इति न्यायसूत्राणि ॥



१५ चापद्यस्येत्यत्रापद्यमानस्येत्यस्ति वचनमित्यत्राभिधानमस्ति ब पु० ।
१६ आदौ अविज्ञानस्येत्यस्ति ब० पु ।
१७ अविज्ञातवतो ऽज्ञानम् इत्याकारकम् ब पु० ।

॥ श्रीः ॥

# न्यायभाष्यस्य सूचीपत्रम् ।


| पृ० | पं० | विषयाः । |
|---|---|---|
| २६२ | २१ | अज्ञानलक्षणम् । |
| ८८ | ७ | अतीतानागतकालसिद्धेः परस्परापेक्षत्वम् । |
| ३८ | ७ | अधिकरणसिद्धान्तलक्षणम् । |
| २६३ | ३ | अधिकलक्षणम् । |
| २६२ | १६ | अननुभाषणलक्षणम् । |
| २५३ | १ | अनित्यसमनिराकरणम् । |
| २५२ | १८ | अनित्यसमलक्षणम् । |
| २०२ | १ | अनिमित्ततो भावोत्पत्तिनिरासः । |
| २४६ | ८ | अनुत्पत्तिसमनिराकरणम् । |
| २४६ | ३ | अनुत्पत्तिसमलक्षणम् । |
| २५२ | १ | अनुपलब्धिसमनिराकरणम् । |
| २५१ | ११ | अनुपलब्धिसमलक्षणम् । |
| ८६ | १७ | अनुमानप्रामाण्याक्षेपः । |
| ८७ | ३ | अनुमानप्रामाण्याक्षेपनिरासः । |
| १७ | १ | अनुमानलक्षणविभागौ । |
| ६८ | ५ | अनुवादपुनरुक्तयोर्विलक्षणयोपपादनम् । |
| ६७ | १३ | अनुवादलक्षणम् । |
| ३० | ६ | अपवर्गनिरूपणम् । |
| २६३ | २० | अपसिद्धान्तलक्षणम् । |
| २६१ | १० | अपार्थकलक्षणम् । |
| २६३ | १ | अप्रतिभालक्षणम् । |
| २६१ | १५ | अप्राप्तकाललक्षणम् । |
| १०३ | १ | अभावप्रामाण्याक्षेपः । |
| १०३ | ४ | अभावस्य वस्तुत्वव्यवस्थापनम् । |
| १९८ | ४ | अभावाद् भावोत्पत्तिनिरासः । |
| ३६ | १ | अभ्युपगमसिद्धान्तलक्षणम् । |
| ६६ | २० | अर्थवादविभागः । |
| २६० | ११ | अर्थान्तरलक्षणम् । |
| १०२ | ८ | अर्थापत्तिप्रामाण्यप्रतिषेधानुपपत्तिः । |
| २४६ | ३ | अर्थापत्तिसमनिराकरणम् । |
| २४८ | १८ | अर्थापत्तिसमलक्षणम् । |
| १०१ | १२ | अर्थापत्तेरप्रामाण्याक्षेपः । |
| १०१ | १६ | अर्थापत्तेरप्रामाण्याक्षेपपरिहारः । |
| ३८ | ८ | अवयवविभागः । |
| ७६ | १३ | अवयविनि पूर्वपक्षः । |
| २२७ | ६ | अवयविनि पूर्वपक्षः । |
| ८२ | १ | अवयविसाधनम् । |
| ८१ | ६ | अवयविनोऽवयवेभ्योऽर्थान्तरत्वे युक्तिः । |
| ८४ | ४ | अवयविन्याक्षेपपरिहारौ । |
| २७८ | ४ | अवयविसत्त्वोपपादनम् । |
| ७८ | १३ | अवयविसद्भावोपपादनम् । |
| ८३ | ६ | अवयव्यनभ्युपगमे प्रत्यक्षानुपपत्तिः । |
| २२६ | ४ | अवयव्युपलम्भोपपादनम् । |
| २६१ | ५ | अविज्ञातार्थलक्षणम् । |
| २४६ | १७ | अविशेषसमनिराकरणम् । |
| २४६ | ११ | अविशेषसमलक्षणम् । |
| २४८ | १० | अहेतुसमनिराकरणम् । |
| २४८ | ४ | अहेतुसमलक्षणम् । |
| १२३ | १८ | आकृतिमात्रस्य पदार्थत्वपूर्वपक्षः । |
| १२६ | १ | आकृतिलक्षणम् । |
| १७१ | १ | आत्ममनःसंयोगस्य शरीरान्तःस्थत्वम् । |
| १३७ | ३ | आत्मनित्यत्वहेत्वाक्षेपः । |
| १३६ | ५ | आत्मनित्यत्वे युक्त्यन्तरम् । |
| १३८ | १ | आत्मनित्यत्वे हेत्वन्तरम् । |
| १२८ | १ | आत्मनो देहादिव्यतिरिक्तत्वम् । |
| १३३ | १० | आत्मनो देहादिव्यतिरिक्तत्वे युक्तिः । |
| १३४ | १४ | आत्मनो नित्यत्वहेतुः । |
| १३१ | ४ | आत्मनो नित्यत्वे ऽपि हिंसादोषोपपत्तिः । |
| २४ | ७ | आत्मानुमापकानि । |
| ११० | ३ | आवरणनिरासः । |
| १०६ | ११ | आवरणाक्षेपः । |
| १३२ | १ | इन्द्रियचैतन्यनिरासः । |
| १२६ | १ | इन्द्रियचैतन्यपूर्वपक्षतन्निरासौ । |
| १५१ | ७ | इन्द्रियपञ्चत्वसाधनम् । |
| २६ | ४ | इन्द्रियपरिगणनम् । |
| १४५ | १ | इन्द्रियभौतिकत्वे युक्तिः । |
| १४३ | १ | इन्द्रियविभुत्वे ऽनुपपत्तिः । |
| १४६ | ६ | इन्द्रियाणां प्राप्यकारित्वम् । |
| १४७ | ४ | इन्द्रियाणां प्राप्यकारित्वे आक्षेपनिरासः । |

| पृ. | पं. | विषयाः । |
|---|---|---|
| १४२ | ६ | इन्द्रियाणां भौतिकत्वसाधनम् । |
| १५३ | १० | इन्द्रियाणामाहङ्कारिकत्वनिरासः । |
| ८७ | १ | इन्द्रियार्थनिरूपणम् । |
| ७६ | १० | इन्द्रियार्थनिरूपणदोषादाने युक्तिः । |
| १५० | १२ | इन्द्रियैकत्वनिरासः । |
| १४६ | ७ | इन्द्रियैकत्वपूर्वपक्षः । |
| १५२ | १३ | इन्द्रियैकत्वसाधकहेत्वन्तरनिरासः । |
| २०० | १ | ईश्वरस्वरूपनिरूपणम् । |
| १०८ | १४ | उच्चारणात्प्राक् शब्दाभावः । |
| २४४ | १ | उत्कर्षसमादिनिराकरणम् । |
| २४३ | ७ | उत्कर्षसमादिलक्षणम् । |
| ४१ | ८ | उदाहरणलक्षणम् । |
| ५७ | ११ | उपचारच्छललक्षणम् । |
| ४३ | ६ | उपनयलक्षणम् । |
| २५० | १५ | उपपत्तिसमनिराकरणम् । |
| २५० | ११ | उपपत्तिसमलक्षणम् । |
| २१ | २ | उपमानफलम् । |
| २० | ८ | उपमानलक्षणम् । |
| ६० | ८ | उपमानसाधनम् । |
| ६० | ३ | उपमानसिद्धौ पूर्वपक्षः । |
| ६० | १७ | उपमानस्यानुमानेऽन्तर्भावोपपादनम् । |
| ६० | ११ | उपमानस्यानुमानान्तर्भावाक्षेपः |
| २५१ | ३ | उपलब्धिसमनिराकरणम् । |
| २५० | २२ | उपलब्धिसमलक्षणम् । |
| ८४ | १ | एकत्वमहत्त्वमध्यमाभ्यामवयविसिद्धिः । |
| २२१ | १० | ऐकात्म्यनिरासे युक्तिः । |
| १०१ | १ | ऐतिह्यादीनां प्रमाणचतुष्टयान्तर्भावः । |
| १०० | ७ | ऐतिह्यादीनां प्रमाणान्तरत्वाक्षेपः । |
| २५४ | १७ | कार्यसमनिराकरणम् । |
| २५४ | १० | कार्यसमलक्षणम् । |
| ५४ | १ | कालातीतलक्षणम् । |
| १६४ | ४ | क्षणिकत्ववादेऽनुपपत्तिः । |
| १६५ | १ | क्षणिकभावनिराकरणम् । |
| १५४ | १ | गन्धादीनामाश्रयनिरूपणम् । |
| ७१ | १ | ग्राहकस्य ग्राह्यत्वसमावेशोदाहरणम् । |
| १५६ | १६ | घ्राणादीनां गन्धादिग्रहणसामर्थ्यम् । |
| १५७ | [illegible] | घ्राणादीनां स्वगतगुणाग्राहकत्वम् । |
| १३३ | १ | चक्षुरिन्द्रियस्यैकत्वम् । |
| १५८ | ४ | चक्षुर्द्वित्वाक्षेपपरिहारः । |
| ५५ | ७ | छललक्षणम् । |
| ५५ | १० | छलविभागः । |
| ५७ | ४ | जल्पलक्षणम् । |
| २४० | ८ | जल्पवितण्डयोः प्रयोगावसरनिरूपणम् । |
| १२३ | ५ | जातिमात्रस्य पदार्थत्वपूर्वपक्षः । |
| ५८ | १८ | जातिलक्षणम् । |
| १२६ | ७ | जातिलक्षणम् । |
| २४१ | ४ | जात्युत्तरविभागः । |
| २ | १० | ज्ञातव्यपदार्थनिरूपणम् । |
| १८१ | [illegible] | ज्ञानगतप्रत्यक्षत्वाप्रत्यक्षत्वहेतुनिरूपणम् । |
| १६८ | ७ | ज्ञानयौगपद्यनिरासः । |
| १६८ | १० | ज्ञानस्य मनोगुणत्वनिरासः । |
| १७७ | ३ | ज्ञानस्यात्मगुणत्वोपसंहारः । |
| १७३ | २० | ज्ञानेच्छाद्वेषादीनामेकगुणत्वम् । |
| २३५ | १५ | तत्त्वज्ञानफलम् । |
| २३४ | ८ | तत्त्वज्ञानविवृद्धिविचारः । |
| ७ | ११ | तत्त्वज्ञानस्यापवर्गे क्रमेणोपयोगः । |
| २३७ | १५ | तत्त्वज्ञानोपायकथनम् । |
| ६ | ३ | तर्कनिरूपणोपयोगः । |
| ३५ | १२ | तर्कलक्षणम् । |
| ३६ | ७ | तर्कोपयोगनिरूपणम् । |
| २१५ | ४ | दुःखपरीक्षा । |
| १० | ३ | दुःखलक्षणम् । |
| २१६ | ६ | दुःखस्य सुखाभावमात्रत्वनिरासः । |
| ३६ | ४ | दृष्टान्तलक्षणम् । |
| १९५ | २ | दोषनित्यत्वव्यवस्थापनम् । |
| २८ | १२ | दोषलक्षणम् । |
| ४४ | १ | निगमनलक्षणम् । |
| ५६ | १० | निग्रहस्थानबहुत्वम् । |
| ५६ | ४ | निग्रहस्थानलक्षणम् । |
| २५७ | १७ | निग्रहस्थानविभागः । |
| ३७ | ६ | निर्णयलक्षणम् । |
| ३८ | ११ | निर्णये सर्वत्र विमर्शानावश्यकत्वम् । |
| २५३ | १८ | नित्यसमनिराकरणम् । |
| २५३ | १३ | नित्यसमलक्षणम् । |
| ३१ | ४ | नित्यसुखाभिव्यक्तिनिरासः । |
| ३३ | १५ | नित्यसुखाभ्युपगमे मोक्षानुपपत्तिः । |
| २६३ | १६ | निरनुयोज्यानुयोगलक्षणम् । |
| २६१ | १ | निरर्थकलक्षणम् । |
| २६१ | १८ | न्यूनलक्षणम् । |

| पृ० | पं० | विषयाः । |
|---|---|---|
| ५ | ७ | पञ्चावयवनिरूपणोपयोगः । |
| ४५ | १ | पञ्चावयवप्रयोजनम् । |
| १२१ | १५ | पदलक्षणम् । |
| २३४ | [illegible] | पदार्थानां प्रातीतिकमात्रत्वनिरासः । |
| २३६ | [illegible] | पदार्थानां प्रातीतिकमात्रत्वनिरासे युक्तिः । |
| २६३ | १२ | पर्यनुयोज्योपेक्षणलक्षणम् । |
| २३१ | १ | परमाणुनिरवयवत्वे आक्षेपः । |
| २३१ | ६ | परमाणुसावयवत्वाभ्युपगमे युक्तिः । |
| २३० | ६ | परमाणुस्वरूपनिरूपणम् । |
| २३३ | १ | परमाणूनां सावयवत्वनिरासः । |
| १९६ | ५ | परिणामवादनिरासः । |
| २६२ | ६ | पुनरुक्तलक्षणम् । |
| १८ | ३ | पूर्ववदनुमानोदाहरणम् । |
| २४७ | १६ | प्रकरणसमनिराकरणम् । |
| ५३ | १ | प्रकरणसमलक्षणम् । |
| २४७ | १२ | प्रकरणसमलक्षणम् । |
| २५८ | ६ | प्रतिज्ञान्तरलक्षणम् । |
| ४० | ८ | प्रतिज्ञालक्षणम् । |
| २५९ | ३ | प्रतिज्ञाविरोधलक्षणम् । |
| २५९ | ६ | प्रतिज्ञासंन्यासलक्षणम् । |
| २५८ | १ | प्रतिज्ञाहानिलक्षणम् । |
| ३८ | १ | प्रतितन्त्रसिद्धान्तलक्षणम् । |
| ११ | ११ | प्रत्यक्षलक्षणम् । |
| १५ | ३ | प्रत्यक्षलक्षणम् । |
| १२ | ३ | प्रत्यक्षलक्षणसूत्रस्य पदकृत्यम् । |
| १३ | ४ | प्रत्यक्षलक्षणसूत्रस्य पदकृत्यम् । |
| १४ | ६ | प्रत्यक्षलक्षणसूत्रस्य पदकृत्यम् । |
| ७३ | ६ | प्रत्यक्षलक्षणाक्षेपः । |
| ७५ | ५ | प्रत्यक्षलक्षणाक्षेपपरिहारः । |
| ७४ | ७ | प्रत्यक्षलक्षणे हेत्वन्तरानुक्तावुपपत्तिः । |
| ७८ | १ | प्रत्यक्षस्यानुमानत्वनिरासः । |
| ७७ | १ | प्रत्यक्षस्यानुमानत्वाक्षेपः । |
| ६४ | ११ | प्रमाणपरीक्षारम्भः । |
| ६७ | ३ | प्रमाणमात्रानभ्युपगमे प्रतिषेधस्याप्यनुपपत्तिः । |
| १० | १ | प्रमाणविभागः । |
| २३५ | ४ | प्रमाणादिप्रतीतेर्मिथ्यात्वनिरासः । |
| ७० | १४ | प्रमाणे प्रमाणसाधने ऽनवस्था । |
| ६८ | ३ | प्रमाणैकदेशाभ्युपगमे प्रामाण्यमात्राक्षेपासंभवः । |
| १३७ | १ | प्रमेयपरीक्षारम्भः । |
| २४ | ६ | प्रमेयविभागः । |
| ३५ | १७ | प्रयोजनलक्षणम् । |
| १६४ | ३ | प्रवृत्तिदोषपरीक्षा । |
| २८ | ८ | प्रवृत्तिलक्षणम् । |
| २४५ | ११ | प्रसङ्गप्रतिदृष्टान्तसमनिराकरणम् । |
| २४५ | ३ | प्रसङ्गप्रतिदृष्टान्तसमलक्षणे । |
| २४४ | १७ | प्राप्त्यप्राप्तिसमनिराकरणम् । |
| २४४ | ११ | प्राप्त्यप्राप्तिसमलक्षणे । |
| ५ | १ | प्रामाण्यग्रहोपायप्रमाणफलनिरूपणम् । |
| ६६ | २० | प्रामाण्यप्रतिषेधानुपपत्तिः । |
| ६६ | १ | प्रामाण्यप्रमेयत्वसमावेशः । |
| ६५ | १२ | प्रामाण्याक्षेपपरिहारः । |
| १९६ | ६ | प्रेत्यभावपरीक्षा । |
| २९ | ५ | प्रेत्यभावलक्षणम् । |
| २१२ | ६ | फलपरीक्षा । |
| २९ | १२ | फललक्षणम् । |
| २१३ | १४ | फलस्य सत्त्वासत्त्वतदुभयनिरासः । |
| १९९ | १ | फलस्येश्वरमात्रहेतुकत्वनिरासः । |
| २१३ | ३ | फलस्योत्पत्तेः प्रागसत्त्वव्यवस्थापनम् । |
| १५६ | ६ | बुद्धिनित्यत्वपूर्वपक्षः । |
| २७ | ५ | बुद्धिनिरूपणम् । |
| १५८ | १२ | बुद्धिपरीक्षाऽऽरम्भः । |
| १७८ | ३ | बुद्धिसन्तानमात्रचैतन्यनिरासः । |
| १८० | ३ | बुद्धेरनित्यत्वम् । |
| १८७ | १५ | बुद्धेरनित्यत्वोपसंहारः । |
| ६४ | १४ | ब्राह्मणवाक्यविभागः । |
| १६३ | ४ | भावानां क्षणिकत्वाक्षेपतन्निरासः । |
| २०९ | १ | भावानां स्वभावसिद्धत्वाक्षेपपरिहारौ । |
| १५५ | ५ | भूतगुणनियमोपपादनम् । |
| १७४ | ६ | भूतचैतन्यपूर्वपक्षनिरासः । |
| १७५ | १ | भूतचैतन्ये ऽनुपपत्तिः । |
| २६ | ११ | भूतपरिगणनम् । |
| १६३ | ४ | भूतमात्राच्छरीरारम्भे दूषणम् । |
| २१६ | ४ | मतानुज्ञालक्षणम् । |
| २६३ | ७ | मतानुज्ञालक्षणम् । |
| १३५ | १० | मनश्चैतन्यपूर्वपक्षः । |
| १८५ | ४ | मनस एकत्वम् । |
| १७६ | १४ | मनसश्चैतन्यनिरासः । |
| १८६ | १० | मनसोऽणुत्वम् । |
| ३८ | २ | मनोऽनुमापकनिरूपणम् । |
| १६ | ३ | मनःप्रत्यक्षनिरूपणम् । |

| पृ० | पं० | विषयाः । |
|---|---|---|
| १४१ | १३ | मानुषशरीरस्य पार्थिवत्वे प्रमाणान्तरम् । |
| १४० | १२ | मानुषशरीराणां पार्थिवत्वसाधनम् । |
| ८ | ९ | मिथ्याज्ञानस्वरूपकथने । |
| १६३ | ३ | मुक्तेरनन्तरं शरीराभावे हेतुः । |
| २३८ | १२ | मोक्षदशायामपि ज्ञानापत्तिपूर्वपक्षः । |
| २४० | ११ | मोक्षप्रतिपादकश्रुतिनिरूपणम् । |
| २३६ | ९ | मोक्षस्वरूपनिरूपणम् । |
| २४३ | १५ | मोक्षे क्लेशसन्तत्युच्छेदः । |
| २३३ | १५ | मोक्षे क्लेशानुबन्धविच्छेदोदाहरणम् । |
| २१७ | १५ | मोक्षे पूर्वपक्षः । |
| २१८ | ४ | मोक्षे पूर्वपक्षनिरासः । |
| १६१ | ४ | मोक्षोपपत्तिः । |
| ३२ | ७ | योगजधर्मस्य नित्यत्वनिरासः । |
| १४४ | ९ | रूपोपलब्धिहेतुनिरूपणम् । |
| १२० | १५ | वर्णविकारस्योपगमे ऽनुपपत्त्यन्तरम् । |
| ११६ | ६ | वर्णानां नित्यत्वे ऽनित्यत्वे च विकारस्याभावे युक्तिः । |
| ११७ | ५ | वर्णानां विकारत्वनिरासः । |
| ११८ | ९ | वर्णानां विकारत्वहेतुनिरासः । |
| ११५ | ९ | वर्णे विकारत्वादेशत्वसंशयः । |
| ८७ | १८ | वर्तमानकालसाधनम् । |
| ८६ | ११ | वर्तमानकालसाधनोपसंहारः । |
| ८७ | [illegible] | वर्तमानकालाक्षेपः । |
| ८६ | २ | वर्तमानकालानभ्युपगमे सर्वप्रमाणविलोपापत्तिः । |
| ५५ | १२ | वाक्छललक्षणम् । |
| ४६ | ९ | वादलक्षणम् । |
| २६३ | ३ | विक्षेपलक्षणम् । |
| ४ | ९ | वितण्डायाः प्रयोजनविचारः । |
| ५१ | ९ | वितण्डालक्षणम् । |
| ६५ | १७ | विधिलक्षणम् । |
| ३१ | ३ | विप्रतिपत्तेः संशयहेतुत्वम् । |
| ५२ | ६ | विरुद्धलक्षणम् । |
| १६२ | ९ | वृत्तिनानात्वाभावपूर्वपक्षः । |
| १६० | २० | वृत्तिवृत्तिमतोरभेदनिरासः । |
| १६१ | १० | वृत्तीनामन्तःकरणधर्मत्वनिरासः । |
| ६४ | १३ | वेदप्रामाण्याक्षेपः । |
| ६५ | [illegible] | वेदप्रामाण्याक्षेपपरिहारः । |
| ६८ | १५ | वेदप्रामाण्यानुगमोपायः । |

| पृ० | पं० | विषयाः । |
|---|---|---|
| ६६ | १४ | वेदस्य नित्यत्वेन प्रामाण्यनिरासः । |
| ४२ | ७ | वैधर्म्योदाहरणलक्षणम् । |
| १२७ | ३ | व्यक्त्याकृत्युत्पत्तिनिरासः । |
| १२२ | ४ | व्यक्तिमात्रस्य पदार्थत्वपूर्वपक्षः । |
| १२४ | ११ | व्यक्तिलक्षणम् । |
| १२५ | [illegible] | व्यक्त्याकृतिजातीनां पदार्थत्वम् । |
| ११० | ६ | शब्दनित्यत्वहेतोर्व्यभिचारः । |
| ११२ | ९ | शब्दनित्यत्वहेत्वन्तरनिरासः । |
| ११३ | ४ | शब्दनित्यत्वे ऽनुपपत्तिः । |
| १११ | २ | शब्दनित्यत्वे हेत्वन्तरम् । |
| ३२ | ५ | शब्दप्रमाणनिरूपणम् । |
| २३ | १० | शब्दविभागः । |
| ११४ | ७ | शब्दसंतानोत्पत्तिप्रतिबन्धकनिरूपणम् । |
| ११५ | ० | शब्दस्याकाशगुणत्वम् । |
| ९२ | ५ | शब्दस्यानुमानात्पार्थक्यम् । |
| ९१ | [illegible] | शब्दस्यानुमानत्वाक्षेपः । |
| ९१ | १४ | शब्दस्यानुमानत्वे युक्तिः । |
| १०४ | १३ | शब्दानित्यत्वसाधनम् । |
| १०६ | १४ | शब्दानित्यत्वहेतोर्व्यभिचारशङ्का । |
| १०७ | ६ | शब्दानित्यत्वहेतोर्व्यभिचारनिरासः । |
| ९२ | ११ | शब्दार्थव्यवस्थायाः समयकारितत्वम् । |
| ९३ | ० | शब्दार्थसंबन्धसाधनम् । |
| ९२ | १८ | शब्दार्थसंबन्धाक्षेपः । |
| १३० | ८ | शरीरचैतन्यनिरासः । |
| १८२ | ६ | शरीरचैतन्यनिरासः । |
| १८२ | ० | शरीरचैतन्यपूर्वपक्षः । |
| १८४ | १० | शरीरचैतन्याभावे हेत्वन्तरम् । |
| २४ | ११ | शरीरलक्षणम् । |
| १८८ | १३ | शरीराणां कर्मनिमित्तकत्वम् । |
| १९० | ६ | शरीराणां कर्मनिमित्तकत्वे उपपत्तिः । |
| १८६ | १३ | शरीराणां प्रत्यात्मनियतत्वे हेतुः । |
| १८७ | १० | शरीरोत्पत्तिविचारः । |
| ६ | ६ | शास्त्रप्रवृत्तेस्त्रैविध्यम् । |
| १६ | २ | शेषवदनुमानलक्षणोदाहरणे । |
| २५५ | ८ | षट्पक्षीनिरूपणम् । |
| २१० | ३ | संख्यैकान्तनिरासः । |
| २११ | ४ | संख्यैकान्तनिरासहेत्वाक्षेपः । |
| ९० | ३ | संशयपरीक्षा । |
| ९४ | ० | संशयपरीक्षोपसंहारः । |
| ३४ | ४ | संशयलक्षणम् । |

| पृ० | पं० | विषयाः । | पृ० | पं० | विषयाः । |
|---|---|---|---|---|---|
| २४७ | ३ | संशयसमनिराकरणम् । | २४१ | ११ | साधर्म्यवैधर्म्यसमलक्षणे । |
| २४६ | १३ | संशयसमलक्षणम् । | ५३ | १३ | साध्यसमलक्षणम् । |
| ६१ | १६ | संशयाक्षेपपरिहारः । | ५६ | १४ | सामान्यच्छललक्षणम् । |
| ३ | ३ | संशयादिनिरूपणोपयोगप्रदर्शनम् । | ३६ | १४ | सिद्धान्तलक्षणम् । |
| ६० | १२ | संशयानुपपत्तिः । | ३७ | १ | सिद्धान्तविभागः । |
| ३७ | ८ | सर्वतन्त्रसिद्धान्तलक्षणम् । | १७६ | १ | स्मृतिहेतुनिरूपणम् । |
| २०३ | ११ | सर्वनित्यत्वनिरासः । | १७० | ८ | स्मृत्ययौगपद्यहेत्वन्तरनिरासः । |
| २०४ | १ | सर्वनित्यत्वनिरासे हेतुः । | १७२ | १८ | स्मृत्ययौगपद्यहेतुनिरूपणम् । |
| २०५ | ३ | सर्वनित्यत्वनिरासे हेत्वन्तरम् । | १३४ | १ | स्मृत्या आत्मस्थैर्यसाधनम् । |
| २०६ | ५ | सर्वपृथक्त्वनिरासः । | ४० | ११ | हेतुलक्षणम् । |
| २०२ | १४ | सर्वानित्यत्वनिरासः । | २५६ | १४ | हेत्वन्तरलक्षणम् । |
| २०७ | ३ | सर्वाभावत्वनिरासः । | ५१ | ६ | हेत्वाभासविभागः । |
| २०८ | ३ | सर्वाभावत्वनिरासे युक्तिः । | २६४ | १६ | हेत्वाभासानां निग्रहस्थानत्वम् । |
| ५१ | १२ | सव्यभिचारलक्षणम् । | २२६ | ५ | हेयोपादेयभावमानिरूपणम् । |
| २४३ | १३ | साधर्म्यवैधर्म्यसमनिराकरणम् । | | | |




## शुद्धिपत्रम् ।

| पृ॰ | पं॰ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| २३८ | ६ | अस्त्यत | अस्त्येत |
| २५४ | १७ | का ं | कायां |
| २५६ | ७ | लाब्धः | लब्धिः |
| २६० | ६ | दनात् | दानात् |
| २६४ | १ | विपर्ययात् | विपर्ययात् |
| २६४ | ३ | सते | सतो |
| २६४ | १२ | माद | मदि |

| पृ॰ | पं॰ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| | | अङ्कपङ्क्तौ । | |
| ८१ | | सू॰ ३४ | सू॰ ३३ |
| १०३ | | आ॰ १ | आ॰ २ |
| ११७ | | ३८–४२ | ३६–४३ |
| ११६ | | ४३–४८ | ४४–४६ |
| १६३ | | ७६ | ७५ |



॥ श्रीगणेशाय नमः ॥

श्रीसरस्वत्यै नमः ।

नमः श्रीगौतमाय ।

# न्यायभाष्यम् ।

**प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्*।**

प्रमाणमन्तरेण नार्थप्रतिपत्तिः नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम् । प्रमाणेन खल्वयं ज्ञाता ऽर्थमुपलभ्य तमर्थमभीप्सति जिहासति वा । तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते । सामर्थ्यं पुनरस्याः फलेनाभिसंबन्धः समीहमानस्तमर्थमभीप्सन् जिहासन्वा तमर्थमाप्नोति जहाति वा । अर्थस्तु सुखं सुखहेतुश्च दुःखं दुःखहेतुश्च । सो ऽयं प्रमाणार्थो ऽपरिसंख्येयः प्राणभृद्भेदस्यापरिसंख्येयत्वात् । अर्थवति च प्रमाणे प्रमाता प्रमेयं प्रमितिरित्यर्थवन्ति भवन्ति† । कस्मात् अन्यतमापाये ऽर्थस्यानुपपत्तेः । तत्र यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता स येनार्थं प्रमिणोति तत्प्रमाणं यो ऽर्थः प्रमीयते तत्प्रमेयं यदर्थविज्ञानं सा प्रमितिः चतसृषु चैवंविधास्वर्थतत्त्वं परिसमाप्यते‡ । किं पुनस्तत्त्वम् ।

---

* प्रमाणं प्रत्यक्षादि अर्थवद् अर्थाव्यभिचारि प्रवृत्तिसामर्थ्यात् । संवादिप्रवृत्तिजनकत्वात् । प्रवृत्तिजनकतायामवान्तरव्यापारः प्रमाणजन्या ऽर्थप्रतीतिः । तथा च संवादिप्रवृत्तिजनकत्वेन प्रामाण्यमनुमीयत इति बोधयितुमिदं वाक्यम् । अतश्च विषयमात्रावभासकस्य ज्ञानस्य स्वप्राहकत्वस्याप्यभावेन स्वधर्मिकप्रमात्वग्राहकतायाः असंभवेन ज्ञानान्तरस्य चासिद्धप्रमात्वाभावस्य पूर्वज्ञानप्रामाण्यग्राहकत्वायोगात् प्रामाण्यमुभयथापि दुर्ग्रहमिति शास्त्रं कथं पदार्थतत्त्वज्ञानं जनयेदिति तद्द्वारेण तस्य निःश्रेयसोपायता न संभवतीति शङ्का निरस्ता भवति । न्या॰ वा॰ ता॰ टी॰ ।

प्रमाणत इति तसिल् हेतुत्वकरणत्वयोरुभयोरपि एकस्य द्वयोर्बहूनां च प्रमाणानां संग्रहार्थः । न्या॰ वा॰ ।

† प्रमाणेऽर्थवति विषयाव्यभिचारिणि सति प्रमातार्थवान् प्राप्तविषयः प्रमेयं चार्थवत् ज्ञायमानरूपविशिष्टं प्रमितिश्चार्थवती तद्विषयविषयताका भवतीत्यर्थः । प्रमाणाभासेन विषयप्रदर्शने प्रदर्शितप्रकाराभावात् । अन्यथाख्यातिरूपनैयायिकसिद्धान्ते प्रमाणाभासजनितज्ञानविषयताया धर्म्यंशवृत्तिप्रकारवृत्तित्वात् ।

‡ तत्त्वपरिसमाप्तिश्च विनियोगयोग्यता उपेक्ष्यता वा । न्या॰ वा॰ सुखसाधनत्वेन दुःखसाधनत्वेन वा पूर्वं गृहीते वस्तुनि प्रमाणेनोपदर्शिते संवादिप्रवृत्त्यवधृतप्रमाणभा-

सतश्च सद्भावोऽसतश्चासद्भावः। सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति*। असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। कथमुत्तरस्य प्रमाणेनोपलब्धिरिति।

सत्युपलभ्यमाने तदनुपलब्धेः† प्रदीपवत्। यथा दर्शकेन दीपेन दृश्ये गृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति यद्यभविष्यदिदमिव व्यज्ञास्यत विज्ञानाभावान्नास्तीति (एवं प्रमाणेन सति गृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति यद्यभविष्यदिदमिव व्यज्ञास्यत विज्ञानाभावान्नास्तीति)। तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति। सच्च खलु षोडशधा‡ व्यूढमुपदेक्ष्यते। तासां खल्वासां सद्विधानाम्।

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥

§निर्देशे यथावचनं विग्रहः। चार्थे द्वन्द्वसमासः||। प्रमाणादीनां तत्त्वमिति शैषिकी षष्ठी। तत्त्वस्य ज्ञानं निःश्रेयसस्याधिगम इति कर्मणि षष्ठ्यौ। त एतावन्तो विद्यमानार्थाः एषामविपरीतज्ञानार्थमिहोपदेशः। सोऽयमनवयवेन¶ तन्त्रार्थ उद्दिष्टो वेदितव्यः। आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः। तच्चैतदुत्तरसूत्रेणानूद्यत इति। हेयं तस्य निर्वर्तकं** ज्ञानमात्य-

---

येन तेन तद्रूपवैशिष्ट्येन ज्ञापिते तज्जातीये सुखसाधनत्वस्मरणेनोपादाने दुःखसाधनत्वस्मरणेन परिहारे उभयोरपस्मरणेनोपेक्षा चेति फलं परिसमाप्तिरिति यावत्। अत्र विस्तरस्तु ग्रन्थेनो पादानाद्यभावेऽपि तत्त्वसमाप्तिर्मा विघानीति योग्यतावधृतम्। ता॰ टी। अर्थतत्त्वमित्यत्रार्थेति ३ पु नास्ति।

* सद् भावरूपं वस्तु सदिति प्रतीयमानं भावरूपेण ज्ञायमानं यथाभूतं तद्रूपविशिष्टं वस्तुतस्ततोऽन्यरूपेणाज्ञातं तत्त्वमित्युच्यत इत्यर्थः। एवमग्रेऽपि।

† तद्वदनुपलब्धेरिति ३ पु पाठः।

( ) एतच्चिह्नमध्यस्थपाठः २। ३ पुस्तकयोर्नास्ति।

‡ असतां प्रमाणविषयत्वेऽपि तेषां भावपरतन्त्रत्वाच्चतुर्वर्गानन्तर्भावाद्वा भावप्रपञ्चवदेवं वाभावप्रपञ्चस्याप्युल्लिखितत्वाद्वा तद्भेदा नोच्यन्ते। व्यूहः सङ्क्षेपः। न्या॰ वा॰।

§ अत्र त एते सद्भेदा इति सूत्रमिति वार्तिके तात्पर्यटीकायां च दृश्यते।

|| सर्वपदार्थप्रधानो द्वन्द्वः समास इति वार्तिकतात्पर्यटीकयोः संमतः पाठः।

¶ अनवयवेन साकल्येन।

** हेयं दुःखं तस्य निर्वर्तकमविद्यातृष्णे धर्माधर्मौ चेति। न्या॰ वा॰।

न्तिकं तस्योपायो ऽधिगन्तव्य इत्येतानि चत्वार्य्यर्थपदानि* सम्यग्बुद्ध्वा निःश्रेयसमधिगच्छति ।

तत्र संशयादीनां पृथग्वचनमनर्थकम् । संशयादयो यथासम्भवं प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्तइति । सत्यमेतत् । इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या । तस्याः पृथक्प्रस्थानाः† संशयादयः पदार्थाः तेषां पृथग्वचनमन्तरेणाध्या‡त्मविद्यामात्रमियं स्यात् यथोपनिषदः । तस्मात्संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यते । तत्र नानुपलब्धे न निर्णीते ऽर्थे न्यायः§ प्रवर्त्तते किं तर्हि संशयिते ऽर्थे । यथोक्तं विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय|| इति । विमर्शः संशयः पक्षप्रतिपक्षौ न्यायप्रवृत्तिः अर्थावधारणं निर्णयस्तत्त्वज्ञानमिति । स चायं किं स्विदिति वस्तुविमर्शमात्रमनवधारणं ज्ञानं संशयः प्रमेये ऽन्तर्भवन्नेवमर्थे पृथगुच्यते । अथ प्रयोजनम् । येन प्रयुक्तः¶ प्रवर्त्तते तत्प्रयोजनम् । यमर्थमभीप्सन् जिहासन्वा कर्मारभते तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः तदाश्रयश्च** न्यायः प्रवर्त्तते । कः पुनरयं न्यायः । प्रमाणैरर्थपरीक्षणं न्यायः†† । प्रत्यक्षागमाश्रितमनुमानं सा ऽन्वीक्षा प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा तया प्रवर्त्ततइत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम् । यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं‡‡ न्यायाभासः स

---

* अर्थपदानि शास्त्रप्रतिपाद्या विषयाः ।

† पृथक्प्रस्थानाः प्रतिपाद्यविषयभेदलक्षणपृथग्विधाः । अग्निहोत्रहवनादिप्रस्थाना त्रयी । हलशकटादिप्रस्थाना वार्त्ता । स्वाम्यमात्यभेदानुविधायिनी दण्डनीतिः । संशयादिभेदानुविधायिनी आन्वीक्षिकी । न्या॰ वा॰ ।

‡ आत्मेति ४ । ७ पुस्तकयोः पाठः ।

§ पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः । प्रतिज्ञाद्यवयवसमूहो वा न्यायः । नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति । ता॰ टी॰ ।

|| न्या॰ सू॰ अ॰ १ आ॰ १ सू॰ ४१ ।

¶ यदिच्छाजनितकृतिमानित्यर्थः । तत्पदार्थो धर्मार्थकाममोक्षा इति के चित् । सुखाप्तिदुःखहाने इति न्या॰ वा॰ ।

** उपकारकत्वमाश्रयार्थः न्या॰ वा॰ उल्लेख्यत्वमिति तदर्थः ।

†† प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि तैरर्थस्य लिङ्गस्य परीक्षणम् । ता॰ टी॰ ।

‡‡ उपमानविरुद्धं च प्रत्यक्षागमविरुद्धतयैवोक्तमिति न पृथगुक्तम् । न्या॰ वा॰ ।

इति। तत्र यावदन्यो सप्रयोजनो वितण्डा [illegible] परीक्ष्यते*। वितण्डया प्रवर्तमानो वैतण्डिकः। स प्रयोजनमनुयुक्तो यदि प्रतिपद्यते सोऽस्य पक्षः सोऽस्य सिद्धान्त इति वैतण्डिकत्वं जहाति। अथ न प्रतिपद्यते नायं लौकिको न परीक्षक इत्यापद्यते। अथापि परपक्षप्रतिषेधज्ञापनं प्रयोजनं ब्रवीति एतदपि तादृगेव। यो ज्ञापयति यो जानाति येन† ज्ञाप्यते यच्च‡ प्रतिपद्यते यदि तदा वैतण्डिकत्वं जहाति अथ न प्रतिपद्यते परपक्षप्रतिषेधज्ञापनं प्रयोजनमित्येतदस्य वाक्यमनर्थकं भवति। वाक्यसमूहश्च स्थापनाहीनो वितण्डा तस्य यद्यभिधेयं प्रतिपद्यते सोऽस्य पक्षः स्थापनीयो भवति अथ न प्रतिपद्यते प्रलापमात्रमनर्थकं भवति वितण्डात्वं निवर्तत इति। अथ दृष्टान्तः प्रत्यक्षविषयोऽर्थः§ यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते स च प्रमेयम्। तस्य पृथग्वचनं च तदाश्रयावनुमानागमौ तस्मिन्सति स्यातामनुमानागमौ असति च न स्याताम्। तदाश्रया च न्यायप्रवृत्तिः। दृष्टान्तविरोधेन च परपक्षप्रतिषेधो वचनीयो भवति दृष्टान्तसमाधिना च स्वपक्षः साधनीयो भवति। नास्तिकश्च दृष्टान्तमभ्युपगच्छन्नास्तिकत्वं जहाति||। ¶अनभ्युपगच्छन् किंसाधनः परमुपाल**भेतेति। निरुक्तेन च दृष्टान्तेन शक्यमभिधातुं साध्य††साधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्। तद्विपर्ययाद्विपरीत‡‡मिति। अस्त्ययमित्यनुज्ञायमानो§§ऽर्थः सिद्धान्तः। स च प्रमेयं तस्य पृथग्वचनं सत्सु

---

* प्रयोजनस्य सकलकर्मविद्याव्यापकत्वोक्त्या वितण्डायां स्वपक्षस्थापनाभावेन प्रयोजनाभावकोटिः परपक्षप्रतिषेधमात्रेणापि प्रयोजनवत्ताकोटिश्चोपस्थापितेति संशयात् क्रमप्राप्तान् दृष्टान्तादीनुल्लङ्घ्य वितण्डापरीक्षावसर इति ता० टी०।

† यच्च ज्ञाप्यते ५। ४। २ पा०। ‡ एतच्च प्रतिपद्यते ५। ४। २ पा०।

§ अनुमानमात्रेणागममात्रेण वा गम्यस्यापि दृष्टान्ततया अन्वायुर्वेदप्रामाण्यवदनुभया मताभिस्त्वत्यदृष्टेति च सूत्रकारविशेषोपादानात् यथाश्रुतार्थकत्वे लक्षणासङ्गतिरिति व्याचष्टे यत्रेत्यादि। क्व चित्केवललौकिकानां क्व चित्केवलपरीक्षकाणां क्व चिल्लौकिकानां परीक्षकाणां चेति व्याख्येयम्। ता० टी०।

|| तस्य यथाभङ्गुरादित्वेन पूर्वदृष्टव्यक्तीनां तद्गतधर्माणां च साधनकाले प्रदर्शनासंभवादिति भाव.।

¶ अनुपगच्छन् ४। २ पा०। ** उपालभेत ४। २ पा०।

†† साध्यसाधनसाधर्म्यादिति १ पु० पाठः। ‡‡ न्या० सू० अ० १ आ० १ सू० ३६। ३७

§§ अभ्युपगम इदमित्थम्भूतं चेति। तस्य व्यवस्था मतविशेषाङ्गीकारेण इदं साङ्ख्येष्विदं योगेष्विति। सर्वतन्त्रसिद्धान्तस्तर्हि न सिद्धान्तोऽव्यवस्थानात्। तच्च न योऽयं सर्वैरभ्युपगम इत्यमेव व्यवस्था। न्या० वा०।

सिद्धान्तभेदेषु वादजल्पवितण्डाः प्रवर्त्तन्ते नातो ऽन्यथेति । साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । तेषु प्रमाणसमवाय आगम *प्रतिज्ञा हेतुरनुमानम् । उदाहरणं प्रत्यक्षम्† । उपनय‡मुपमान§ सर्वेषामेकार्थसमवाये सामर्थ्यप्रद‖र्शनं¶ निगमनमिति । सो ऽयं परमो** न्याय इति । एतेन वादजल्पवितण्डाः प्रवर्त्तन्ते नातो ऽन्यथेति । तदाश्रया च तत्त्वव्यवस्था†† । ते चैते ऽवयवाः शब्दविशेषाः सन्तः प्रमेये ऽन्तर्भूता एवमर्थं पृथगुच्यन्त इति । तर्को न प्रमाणसंगृहीतो न प्रमाणान्तरं प्रमाणानामनुग्राहक‡‡स्तत्त्वज्ञानाय§§ कल्पते । तस्योदाहरणं किमिदं जन्म‖‖ कृतकेन¶¶ हेतुना निर्वर्त्यते आहो स्विदकृतकेन*** । एवमविज्ञाते ऽर्थे कारणोपपत्त्या ऊहः प्रवर्तते यदि कृतकेन हेतुना निर्वर्त्यते हेतूच्छेदादुपपन्नो ऽयं जन्मोच्छेदः अथाकृतकेन हेतुना ततो हेतूच्छेदस्याशक्यत्वादनुपपन्नो जन्मोच्छेदः । अथाकस्मिकमतो ऽकस्मान्निर्वर्त्यमानं न पुनर्निवर्त्स्यतीति निवृत्तिकारणं नोपपद्यते तेन जन्मानुच्छेद इति । एतस्मि-

---

* तत्रागमः प्रतिज्ञेति न युक्तम् आगमस्य तत्त्वव्यवच्छेदकत्वात् प्रतिज्ञार्थस्य च प्रतिपाद्यत्वात् । आगमाधिगतार्थस्य प्रतिपाद्यत्वादागमः प्रतिज्ञेति न दोषः । य एवार्थ आगमेनाधिगतस्तमेव परस्मा आचष्ट इत्यागमः प्रतिज्ञेत्युच्यते । एवं लिङ्गदर्शनमात्रे हेतूपचाराद्धेतुरनुमानमिति । न्या वा ।

† स्मृतिविषयस्य प्रत्यक्षेण पुनरुपदर्शनादुदाहरणं प्रत्यक्षं यस्मात्पूर्वं ऽनुभूतमर्थं स्मरति स्मृतं च विषयमुदाहरणत्वेनादत्ते । तेन पूर्वानुभवप्रसिद्धमनुविधीयमानं प्रत्यक्षमिव प्रत्यक्षमिति । न्या वा ।

‡ उपनयः ५ । ४ । २ पु पाठः ।

§ क्व पुनरुपमानार्थः । अविप्रतिपत्तिः । यथा प्रत्यक्षे न विप्रतिपद्यते एवमुदाहरणेऽपीति । न्या वा ।

‖ दर्शनम् ५ । ४ । २ पु पाठः ।

¶ एकवाक्यभावे इतरेतरसम्प्रत्ययितार्थापेक्षित्वम् । न्या वा ।

** परमत्वं विप्रतिपन्नपुरुषप्रतिपादकत्वम् । एकैकशः प्रमाणानि प्रवृत्तानि न विप्रतिपन्नं पुरुषं प्रतिपादयन्ति वाक्यभावापन्नानि पुनर्विप्रतिपन्नमतो ऽयं परम इति । न्या वा ।

†† विशेषनिश्चयः पञ्चावयववाक्याधीन इत्यर्थः ।

‡‡ प्रमाणयुक्तत्वायुक्तत्वसंभावकः । §§ कल्प्यते १ पु पाठः ।

‖‖ निकायविशिष्टाभिरपूर्वाभिः शरीरेन्द्रियबुद्धिवेदनाभिरभिसम्बन्धो जन्म । ता टी । ¶¶ कृतेन ५ । ४ । २ । ३ पाठः ।

*** अथाकस्मिकमिति ५ । ४ । २ । ३ अधिकः पाठः ।

स्तर्कविषये कर्मनिमित्तं जन्मेति प्रमाणानि प्रवर्तमानानि तर्केणानुगृह्यन्ते तत्त्वज्ञानविषयस्य विभागात्तत्त्वज्ञानाय कल्पते तर्क इति । सोऽयमित्थम्भूतस्तर्कः प्रमाणसहितो वादे साधनायोपालम्भाय चार्थस्य भवतीत्येवमर्थं पृथगुच्यते प्रमेयान्तर्भूतोऽपीति । निर्णयस्तत्त्वज्ञानं प्रमाणानां फलं* तदवसानो वादः । तस्य पालनार्थं जल्पवितण्डे । तावेतौ तर्कनिर्णयौ लोकयात्रां वहत इति । सोऽयं निर्णयः प्रमेयान्तर्भूत एवमर्थं पृथगुद्दिष्ट इति । वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसानो† वाक्यसमूहः पृथगुद्दिष्ट उपलक्षणार्थम् । उपलक्षितेन व्यवहारस्तत्त्वज्ञानाय भवतीति । तद्विशेषौ‡ जल्पवितण्डे तत्त्वाध्यवसायसंरक्षणार्थमित्युक्तम् । निग्रहस्थानेभ्यः पृथगुद्दिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्तीति|| जल्पवितण्डयोस्तु

* यद्येवमिन्द्रियापातजन्म प्रत्यक्षज्ञानमपि तत्त्वज्ञानमिति निर्णयः स्यादत आह । प्रमाणानामिति । अनेन पञ्चावयववाक्यमुपलक्षयति । तत्र सतर्काणां प्रमाणानां समवायात् । परमार्थतस्तु तर्केऽर्थस्तत्त्वनिश्चयो विनिर्णय इति प्रत्यक्षादीनामपि तर्कसहायानां निर्णयफलत्वमिति । ता॰ टी॰ ।

† अधिक्रियत इत्यधिकरणं साध्यम् । तदधिकृत्य साधनप्रवृत्तेः । उभाभ्यां वादिप्रतिवादिभ्यां स्वस्वसाध्ये साधनं वक्तव्यम् । अन्यतरस्मिन् साध्ये निर्णयः । वादे हि तावद् ब्रूते यावदन्यतरस्मिन् निर्णयो न जातः तत्त्वबुभुत्स्वोर्वादिनोर्वादेऽधिकारात् । जल्पे तु पुरुषशक्तिपरीक्षालक्षणेऽप्रतिभाशालिनापि पराजयोपपत्तेर्नावश्यं तत्त्वनिर्णयः । तस्मादन्यतरनिर्णयावसानत्वेन जल्पाद्भेदो वादस्येति । ता॰ टी॰ ।

‡ विशेषोऽङ्गाधिक्यमङ्गहानिश्च । छलजातिनिग्रहस्थानप्रयोगादधिको जल्पः । स प्रतिपक्षस्थापनाहीनस्तु वितण्डा । विषयभेदाच्च भेदः । शिष्यादिविषयो वादः शिष्यमाणविषये जल्पवितण्डे इति । न्या॰ वा॰ ।

§ इमिति ५ । ४ । ५ । ६ नास्ति ।

|| पृथगुपदिष्टानामपि सव्यभिचारादीनां वादेऽचोदनीयत्वाद् वादे चोदनीयानामपि न्यूनादीनां पृथगनुपदेशाद् यथाश्रुतं भाष्यं दुर्घटमतो निग्रहस्थानभेदज्ञापनार्थत्वात् पृथगुपदेश इति वार्तिकम् । निग्रहस्थानान्तर्गतत्वेनैव तद्विभागे स्थानभेदप्रसङ्गादिदमप्ययुक्तमित्युक्त्वा अयं तु हेत्वाभासानां न निग्रहस्थानत्वं तथा सति सर्वत्र हेत्वाभाससत्त्वात् सर्वस्यैव निगृहीतत्वापत्तेः । तस्माद् हेत्वाभासप्रयोगो निग्रहस्थानं तद्विभाजकसूत्रस्थहेत्वाभासपदं च तत्प्रयोगपरं तत्र च प्रयोगस्य न लक्षणमपेक्षणीयमपि । हेत्वाभासानामन्यत्र उक्तं हेत्वाभासाश्च यथोक्ता इति न च हेत्वाभासस्यावच्छेदकप्रवेशादेव पृथङ्निरूपणापेक्षेति वाच्यम् । तथा सति प्रमाणतर्कोपालम्भ इति वादसूत्रावच्छेदकप्रमाणादेरपि पृथङ्निरूपणापत्तेरिति युक्तमुत्पश्याम इति विश्वनाथपञ्चाननाः । गौ॰ सू॰ वृ॰ ।

(निग्रहस्थानानीति । छलजातिनिग्रहस्थानानां पृथगुपदेश उपलक्षणार्थ इति उपलक्षितानां स्ववाक्यपरिवर्जनं छलजाति) निग्रहस्थानानां परवाक्ये पर्य्यनुयोगः । जातेश्च परेण प्रयुज्यमानायाः सुलभः समाधिः स्वयं च सुकरः प्रयोग* इति । सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता† ॥

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथावि‡द्यं वेदितव्यम् । इह त्वध्यात्मविद्यायामात्मादितत्त्वज्ञानं निःश्रेयसाधिगमो ऽपवर्गप्राप्तिः ।

§तत्खलु निःश्रेयसं किं तत्त्वज्ञानानन्तरमेव भवति । नेत्युच्यते । किं तर्हि तत्त्वज्ञानात् ।

## दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरा॥भावादपवर्गः ॥ २ ॥

तत्रात्माद्यपवर्गपर्य्यन्तं¶ प्रमेये मिथ्याज्ञानमनेकप्रकारकं** वर्त्तते । आत्मनि ताव††न्नास्तीति‡‡ अनात्मन्यात्मेति दुःखे सुखमिति अनित्ये नित्यमिति अत्राणे त्राणमिति सभये निर्भयमिति जुगुप्सिते ऽभिमतमिति हातव्ये ऽप्रतिहातव्यमिति प्रवृत्तौ नास्ति कर्म नास्ति कर्म्मफलमिति दोषेषु नायं दोषनिमित्तः संसार इति प्रेत्यभावे नास्ति जन्तुर्ज्जीवो वा सत्त्व

( ) एतच्चिह्नमध्यस्थः पाठः ४ । २ पुस्तकयोर्नास्ति ।

* परेण जातौ प्रयुक्तायां प्राश्निकान् ब्रवीति जातिरनेन प्रयुक्तेति न चनं पर्यनुयुञ्जीरन् कथं जातिः कतमा जातिरसौ जात्यभिज्ञः शक्नोति वक्तुमेवं जातिरियं च जातिरिति । एवं च सुकरः प्रयोगः स्ववाक्ये परिवर्जनं चेत्युभयमविरुद्धम् । न्या॰ वा॰ ।

† परीक्षितेति जयन्तवृत्तिधृतः पाठः । ‡ यथाविधम् २ । ३ पाठः ।

§ अपरीक्ष्य तत्त्वानिर्णयायोगाच्चानिर्णीतप्रयोजनसम्बन्धानां लक्षणपरीक्षयोरवकाशः न च प्रयोजनसम्बन्धनिर्णयः परीक्षां विनेति तत्परीक्षार्थं द्वितीयं सूत्रम् । ता॰ टी॰ ।

|| अपायादिति ५ । ३ पाठः । ¶ अपवर्गान्ते । ५ । ३ पाठः ।

** प्रवर्त्तते ५ पाठः । †† आत्मनि नास्तीति ४ । ३ पाठः ।

‡‡ सदसतोः प्रमाणगम्यत्वं सारूप्यं क्रियागुणव्यपदेशस्तद्रहितता च विशेषः । अनयच विशेषाग्रहात्सारूप्यग्रहाच्च विपर्ययः । आत्मानात्मनोः अहङ्कारविषयत्वं सारूप्यमिच्छाद्याधारानाधारता च विशेषः । न्या॰ वा॰ ।

आत्मा वा यः प्रेत्यप्रेत्य च भवेदिति अनिमित्तं जन्मानिमित्तो जन्मापरम इत्यादिमान् प्रेत्यभावो ऽनन्तश्चेति नैमित्तिकः सन्नकर्मनिमित्तः प्रेत्यभाव इति देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां निरात्मकः प्रेत्यभाव इति अपवर्गे भीष्मः * खल्वयं सर्वकार्य्योपरमः सर्वविप्रयोगे ऽपवर्गे बहु † भद्रकं लुप्यतइति कथं बुद्धिमान्सर्वसुखोच्छेदमचैतन्यममु ‡ मपवर्गं रोचयेदिति । एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः प्रतिकूलेषु द्वेषः । रागद्वेषाधिकाराच्चासत्येर्ष्यामायालोभादयो दोषा भवन्ति । दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति । वाचा ऽनृतपरुषसूचनाऽसम्बद्धानि । मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेति । सेयं पापात्मिका प्रवृत्तिरधर्म्माय । अथ शुभा शरीरेण दानं परित्राणं परिचरणं च । वाचा सत्यं हितं प्रियं स्वाध्यायं चेति । मनसा दयामस्पृहां श्रद्धाञ्चेति । सेयं धर्म्माय । अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ । यथा ऽन्नसाधनाः प्राणाः अन्नं वै प्राणिनः प्राणा इति । सेयं प्रवृत्तिः कुत्सितस्याभिपूजितस्य च जन्मनः कारणम् । जन्म पुनः शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः तस्मिन्त्सति दुःखं तत्पुनः प्रतिकूलवेदनीयं बाधना पीडा ताप इति । तइमे मिथ्याज्ञानादयो दुःखान्ताः§ धर्म्मा अविच्छेदेनैव प्रवर्त्तमानाः संसार|| इति । यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अपयन्ति दोषापाये प्रवृत्तिरपैति¶ प्रवृत्त्यपाये जन्मापैति जन्मापाये दुःखमपैति दुःखापाये च आत्यन्तिको ऽपवर्गो निःश्रेयसमिति । तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम् । आत्मनि तावदस्तीति अनात्मन्यनात्मेति एवं दुःखे नित्ये त्राणे सभये जुगुप्सिते हातव्ये च यथाविषयं वेदितव्यम् । प्रवृत्तौ अस्ति कर्म्मास्ति कर्म्मफलमिति । दोषेषु दोष-

* स खल्वयमिति ९ । ३ पाठः ।   † बहु च भद्रमिति ९ । ४ । ३ पाठः ।

‡ अमुमिति ३ । ३ नास्ति ।

§ सूत्रकारोक्तक्रमाद्विपरीतक्रमाभिधानं भाष्यकृतो दुःखादीनां मिथ्याज्ञानपूर्वकत्वेन मिथ्याज्ञानस्य दुःखादिपूर्वकत्वेनानादित्वं दर्शयितुम् । ता टी ।

|| दुःखादीनां कार्यकारणभावः संसारः स चानादिः । न्या० वा० ।

¶ धर्माधर्मौ जन्मसाधनत्वात् प्रवृत्तिपदेन वाच्यौ न क्रिया तस्याः क्षणिकत्वात् ।

निमित्तो ऽयं संसार इति प्रेत्यभावे खल्वस्ति जन्तुर्जीवः सत्त्वः आत्मा वा यः प्रेत्य भवेदिति निमित्तवज्जन्म निमित्तवान् जन्मोपरम इत्यनादिः प्रेत्यभावो ऽपवर्गान्त इति नैमित्तिकः सन्प्रेत्यभावः प्रवृत्तिनिमित्त इति सात्मकः सन् देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां प्रवर्त्ततइति अपवर्गे शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमो ऽपवर्गः बहु च कृच्छ्रं घोरं पापकं लुप्यतइति कथं बुद्धिमान्सर्वदुःखोच्छेदं सर्वदुःखासंवि*दमपवर्गं न रोचयेदिति । तद्यथा मधुविषसंपृक्तान्नमनादेयमिति एवं सुखं दुःखानुष†क्त‡मनादेयमिति ।

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति । तत्र नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः तत्रोद्दिष्टस्य तत्त्वव्यवच्छेदको धर्मो लक्षणम् । लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा । तत्रोद्दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते यथा प्रमाणानां प्रमेयस्य च । उद्दिष्टस्य लक्षितस्य च विभागवचनं यथा छलस्य वचनविघातो ऽर्थो§पपत्त्या छलं|| तत्त्रिविधमिति । अथोद्दिष्टस्य विभागवचनम्¶ ॥

---

* सविदपवर्गम् ४ पाठः । † दु खासक्तमिति १ पाठः ।

‡ अनुषङ्गो ऽविनाभावः यत्रैकं तत्रेतरदिति । समाननिमित्तता वा ऽनुषङ्गः । यान्येव सुखसाधनानि तान्येव दुःखसाधनानीति । समानाधारता वा ऽनुषङ्गः यत्र सुखं तत्र दुःखमिति । समानोपलभ्यता वा ऽनुषङ्गः येन सुखमुपलभ्यते तेन दुःखमपीति । न्या॰ वा॰ ।

§ अर्थविकल्पोपपत्त्या ५ । ४ । २ । ३ पाठः । || न्या॰ सू॰ अ॰ १ आ॰ २ सू ५१

¶ विभागस्याप्युद्देशरूपत्वान्तर्भावात्त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्यनेन [illegible] विरोधः । विभागे ऽपि पदार्थमात्राभिधानेनोद्देशलक्षणसत्त्वात् । विभागकरणं च प्रमाणान्तरसत्त्वशङ्कानिवृत्तये । लक्षणेनेतरव्यावृत्तधर्मबोधने ऽपि प्रमाणान्तराभावबोधनस्यावश्यकत्वात् । न्या॰ वा॰ । स्यादेतत् । विभागपरमेतत्सूत्रमिति वक्ष्यति । न च विभागो न्यूनाधिकसंख्याव्यवच्छेदार्थं एकं किं चिदुपसंग्राहकमन्तरेण । न च प्रमाणत्वादन्यत्तदुपसंग्राहकं न चेदमलक्षितमुपसंगृह्णाति । न चैतत्सूत्रमस्य लक्षणपरं विभागपरत्वादिति शङ्कानिराकरणपरं भाष्यमथोद्दिष्टस्येति । तस्यार्थः । यद्यपि विभागपरमेतत्सूत्रं तथापि प्रमाणपदसमभिव्याहृतं तत्सामर्थ्यात्प्रमाणत्वमपि लक्षयतीति । तथा हि प्रमीयते ऽनेनेत्यस्य वाक्यस्यार्थे प्रमाणपदप्रयोगः । प्रमा च स्मृतेरन्या ऽर्थाव्यभिचारी स्वतन्त्रः परिच्छेदः । तस्माद्विभागपरादपि सूत्रात् प्रतीयमानं प्रमाणसामान्यलक्षणमपेक्षितं गृहीतमिति प्रमाणत्वोपगृहीतानां प्रत्यक्षादीनां युक्तो विभागः । ता॰ टी॰ ।

## प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

अक्षस्याक्षस्य प्रतिविषयं* वृत्तिः प्रत्यक्षं वृत्तिस्तु सन्निकर्षो ज्ञानं वा। यदा सन्निकर्षस्तदा ज्ञानं प्रमितिः यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः† फलम्। अनुमानं मितेन लिङ्गेन‡ अर्थस्य पश्चान्मानमनुमानम्§। उपमानं|| सामीप्यज्ञानं यथा गौरेवं गवय इति। सामीप्यं तु सामान्ययोगः। शब्दः शब्द्यते ऽनेनार्थ इत्यभिधीयते ज्ञाप्यते उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद्बोद्धव्यम्। प्रमीयते ऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दस्तद्विशेषसमाख्याया अपि तथैव व्याख्यानम्। किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते अथ ¶प्रमेयं व्यवतिष्ठन्ते** इति। उभयथा दर्शनम्। अस्त्यात्मेत्याप्तोपदेशात्प्रतीयते। तत्रानुमानमिच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्†† इति। प्रत्यक्षं युञ्जानस्य योगसमाधिजमात्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति। अग्निराप्तोपदेशात्प्रतीयते ऽत्राग्निरिति प्रत्यासीदता धूमदर्श-

---

* प्रतिगतमक्षं प्रत्यक्षमिति प्रादिसमासः। भाष्यं तु फलितार्थकथनपरम्। अन्यथा ऽव्ययीभावसमासाश्रयणे ऽक्षस्येति षष्ठीश्रवणानुपपत्तेः। न्या वा। इदं च व्युत्पत्तिनिमित्तमात्रम्। प्रवृत्तिनिमित्तत्वे हीन्द्रियगतेषु गुणसामान्यादिषु व्यभिचारः। अर्थसाक्षात्कारिज्ञानजनकत्वं तु प्रवृत्तिनिमित्तम्। ता टी। वृत्तिर्व्यापारः।

† सन्निकर्षस्य व्यापारत्वे प्रमितिः फलं ज्ञानस्य व्यापारत्वे हानादिबुद्धयः फलमिति विवेकः। उपादानबुद्धिरित्यत्रोपादानं विषयो यस्याः सा बुद्धिरिति नार्थः। उपादेयमिदं सलिलमिति बुद्धिरनागतोपादानविशिष्टं सलिलमालम्बमाना न साक्षात्कारवती सलिलमात्रसाक्षात्कारस्तु स्यात् न च तन्मात्रमस्य फलमपि तूपादेयता सा च परोक्षा ऽनागतत्वात्तस्मादुपादीयते ऽनेनेत्युपादानमुपादानं चासौ बुद्धिश्चेत्युपादानबुद्धिः प्रागालोचिते तोये तज्जातीये दृष्टचरपिपासोपशमनहेतुभावस्य स्मृतिबीजसंस्कारोद्बोधेन स्मरणे तज्जातीयमिदमिति लिङ्गपरामर्श एव साक्षात्कारफलम्। तस्योपादानकारणत्वात्। लिङ्गे चिनश्यदवस्थव्याप्तिस्मरणसहकारिदृश्यमानस्य सलिलस्य पिपासोपशमनहेतुतया अनुमानमुखेनोपादानबुद्धिरित्युच्यते। एवं हानबुद्ध्यादिकमपि बोध्यम्। ता टी।

‡ लिङ्गिन इति ५। ४। २। ३ पाठः।

§ अत्र पश्चात् इत्यध्याहारः। तेनानुमितिकारणीभूतलिङ्गपरामर्शाभिधानात्तस्य प्रमाणतोपपद्यते। अनुमित्यभिधाने तु प्रमाणता नोपपद्येत। हानादिबुद्धिकारणत्वादनुमितेरेव प्रमाणतेति यथाश्रुतमेव वा भाष्यं व्याख्येयम्। न्या वा।

|| उपमानम् उपमानम् ४। २। ३ पाठः।

¶ प्रतिप्रमेयमिति ५। ४। २। ३ पाठः।

** एकैकस्मिन् प्रमेये बहूनां प्रमाणानां व्यापार एकैकस्यैव वेत्यर्थः।

†† न्या सू अ १ आ १ सू १०।

नेनानुमीयते प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते । व्यवस्था पुनरग्निहोत्रं जुहुयात्स्वर्गकाम इति । लौकिकस्य स्वर्गे *न लिङ्गदर्शनं न प्रत्यक्षम् । स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतोरनुमानम् । तत्र न प्रत्यक्षं नागमः । पाणौ प्रत्यक्षत उपलभ्यमाने नानुमानं नागम इति । सा चेयं प्रमितिः प्रत्यक्षपरा जिज्ञासितमर्थमाप्तोपदेशात्प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते लिङ्गदर्शनानुमितं च प्रत्यक्षतो दिदृक्षते प्रत्यक्षत उपलब्धे ऽर्थे जिज्ञासा निवर्त्तते । पूर्वोक्तमुदाहरणम् । अग्निरिति प्रमातुः प्रमातव्ये ऽर्थे प्रमाणानां सम्भवो† ऽभिसंप्लवः असम्भवो व्यवस्थेति ।

इति त्रिसूत्रीभाष्यम् ।

अथ विभक्तानां लक्षणमिति ।

## इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज् ज्ञानं ‡तत् प्रत्यक्षम् । न तर्हीदानीमिदं भवति आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति । नेदं कारणावधारणमेतावत्प्रत्यक्षे कारणमिति किं तु विशिष्टकारणवचन॰

---

* न लिङ्गदर्शनप्रत्यक्षमिति ७ । १ पाठः ।

† सङ्करो ऽभिसंप्लवः असङ्करो व्यवस्थेति ५ । ४ । ७ । ३ पाठः ।

‡ अत्र च यत इत्यध्याहृत्य यत्तदोर्नित्याभिसम्बन्धात्तत्प्रत्यक्षमिति प्रमाणवाचि प्रत्यक्षपदं योजनीयम् ॥ वा॰ ता॰ टी॰ । सूत्रार्थः समानासमानजातीयविशेषकत्वम् । न्या॰ वा॰ समानजातीयमनुमानादि असमानजातीयं प्रत्यक्षाभासप्रमेयादि तेभ्यो विशेषकत्वं विशेषस्तदस्य सूत्रस्य प्रयोजनम् । यः खलु कुतश्चिद् व्यामोहात्समानासमानजातीयव्यावृत्तं तद्रूपं न शक्नोति ग्रहीतुं सो ऽनेन लक्षणेन बोध्यते एवंलक्षणकं प्रत्यक्षमिति । तस्मात् सामान्यतः सिद्धविविक्तप्रत्यक्षमात्रानुवादेन लक्षणविधानपरमिदं सूत्रम् । इतस्त्ववगतलक्षणस्तेनैव विविच्य प्रत्यक्षतत्त्वं ग्रहीतीति समानासमानजातीयव्यवच्छेदः सूत्रार्थ उक्त इति । ता॰ टी॰ । सन्निकर्षः पुनः षोढा भिद्यते संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेषणविशेष्यभावश्चेति । द्रव्यप्रत्यक्षे संयोगः । द्रव्यगतरूपादिप्रत्यक्षे संयुक्तसमवायः । रूपादिगतसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः । शब्दप्रत्यक्षे समवायः । तद्गतसामान्यप्रत्यक्षे समवेतसमवायः । समवायाभावयोर्विशेषणविशेष्यभावः ।

मिति* । यत्प्रत्यक्षज्ञानस्य विशिष्टकारणं तदुच्यते यत्तु समानमनुमानादिज्ञानस्य न तन्निवर्त्तत इति । मनसस्तर्हीन्द्रियेण संयोगो वक्तव्यः । भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति समानत्वान्नोक्त इति । यावदर्थं वै नामधेयशब्दा‡स्तैरर्थसम्प्रत्ययः अर्थसम्प्रत्ययाच्च व्यवहारः । तत्रेदमिन्द्रियार्थसन्निकर्षा-

---

* कारणायधारणं कार्यान्तरव्यवच्छेदः । विशिष्टकारणमसाधारणकारणम् । आत्ममनःसंयोगस्य ज्ञानमात्रं प्रति कारणत्वान्नवचो ऽपेक्ष इति भावः । इन्द्रियमनःसंयोगस्य चन्द्रियार्थसन्निकर्षकथनेनैवाक्तस्वान्मानसे सुखादिसाक्षात्कारे इन्द्रियार्थसन्निकर्षसत्त्वे ऽपीन्द्रियमनःसन्निकर्षाभावेनाव्यापकत्वाद्वा ऽनुक्तिः । आत्मनश्च विषयप्रकाशसंयोगस्य विषयगतानां रूपमहत्त्वानेकद्रव्यत्वानामनुक्तिः । सर्वासमव्यापकत्वात् । संस्कारस्य चासाधारणत्वाभावात् ।

† समानस्य चात्ममनःसंयोगेन । रूपज्ञानं रसज्ञानमिति विषयेणाभिलापयन्मनसा ऽभिलापाभावात् । अतीन्द्रियवृत्तित्वाद्वा विषयावृत्तित्वाद्वा मनोवृत्तित्वाद्वा व्या वा । ननु इन्द्रियार्थसन्निकर्षः प्रत्यक्षे न कारणं चक्षुःश्रोत्रयोरप्राप्यकारित्वात् । तयोरप्राप्यकारित्वं च सान्तरग्रहणात् पृथुतरग्रहणाच्च । न हि शाखाग्रेण विषयसंयोगः सम्भवति । चन्द्रादीनां पृथुतराणामप्युपलम्भाच्च तावत्परिमाणकत्वाल्पपरिमाणकस्य चक्षुषः संयोगः सम्भवति इति चेत । सान्तरग्रहणादित्यस्य हेतोः साध्याव्यतिरेकात् । नयनगमनेन पृथुतरस्यापि ग्रहणोपपत्तेः चक्षुषो ग्रहणायसमानपरिमाणकत्वस्य ग्रहणे ऽनपेक्षणीयत्वात् । चक्षु प्राप्यकारि इन्द्रियत्वाद् घ्राणादिवदित्यनुमानात्प्राप्यकारित्वसिद्धिः । घ्राणादावपि विप्रतिपत्तौ तु इन्द्रियं प्राप्यकारि करणत्वाद्वास्यादिवदिति साधनीयम् । करणमात्रे ऽप्राप्यकारित्वं यद्यस्तु तथा सति सर्वत्र कार्योत्पत्तिप्रसङ्गेन बाधनीयः । अत्र वार्त्तिके तात्पर्यटीकायां च विस्तरः । सूत्रे इन्द्रियार्थसन्निकर्षात् सुखादु ते ऽपि भवन्तस्तद्व्युदासार्थमाह ज्ञानमिति व्या वा ।

‡ इह द्वयी प्रत्यक्षजातिरविकल्पिका सविकल्पिका चेति । तत्रोभयी इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति लक्षणेन सङ्गृहीतापि न स्वशब्देनोपात्ता तत्र विप्रतिपत्तेस्तत्राविकल्पिकाया पदमव्यपदेश्यमिति सविकल्पिकायाश्च व्यवसायात्मकमिति । तत्र व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि तत्कर्म व्यपदेश्यं विशेष्यमिति यावत् । सर्वं हि सविकल्पकं विशेषणविशेष्यभावेन वस्तुप्रवर्त्तते । अविद्यमानं व्यपदेश्यं यस्मिंस्तदव्यपदेश्यम् । जात्यादिस्वरूपावगाहि न तु जात्यादीनां मिथो विशेषणविशेष्यभावावगाहीति यावत् । तत्र नामरहितम् विकल्पकं नास्तीति ये विप्रतिपद्यन्ते तन्मतमपाचिकीर्षुरुपन्यस्यति यावदर्थं वै इत्यादि । ता टी अर्थो हि सर्वदा सर्वथा सर्वत्र नामधेयेनान्वितो नास्ति सो ऽर्थो य कदा चिन्नामधेयेन वियुज्यते तदनेन नामधेयतादात्म्यमर्थानाम । अत्र हेतुमाह तैरर्थप्रत्यय इति । अर्था हि प्रतीयमाना नामधेयैरुपेतास्तत्सामानाधिकरण्येना वगम्यन्ते गौरित्ययं ऽश्व इत्ययं इति । न चोपायतया सामानाधिकरण्यं घटते न हि चक्षुरादिसामानाधिकरण्यं रूपाद्यनुभवति नापि ज्ञायमान उपाय उपेयसामानाधिकरण्यमनुभवति न हि भवति धूमो ऽयं वह्निरिति । अपि चाशब्दोपाये ऽनुमेयादौ न शब्दसम्भेदनाधिगमो भवेदस्ति तु तस्मात्ते शब्दे सह समाना

दुत्पन्नमर्थज्ञानं रूपमिति वा रस इत्येव वा भवति रूपरसशब्दाश्च विषयनामधेयम् । तेन व्यपदिश्यते ज्ञानं रूपमिति जानीते रस इति जानीते नामधेयशब्देन व्यपदिश्यमानं सत् शाब्दं प्रसज्यते अत आह । अव्यपदेश्यमिति । यदिदमनुपयुक्ते शब्दार्थसम्बन्धे ऽर्थज्ञानं तन्नामधेयशब्देन व्यपदि-

---

धिकरणस्यार्थस्य प्रत्ययो ऽतो नामधेयात्मानो ऽर्थाः । किञ्च गवादिषु घटादिषु च शब्दापकर्षे ऽर्थप्रत्ययापकर्षात्तदुत्कर्षे चार्थप्रत्ययोत्कर्षात्प्रत्ययस्य च प्रत्येतव्योत्कर्षाधीनोत्कर्षत्वान्नामधेयोत्कर्षेणार्थोत्कर्षो ऽर्थस्य तादात्म्यं कथयति । तदिदमुक्तं समः प्रयोजनं सम्प्रत्यय इति । अर्थसम्प्रत्ययाच्च व्यवहार । ततश्चाविसंवादात्प्रमाणं तन्नामधेयतादात्म्यं साधयत्यर्थानामित्यर्थः । तथा चार्थानां नामधेयात्मकत्वात्तद्गोचरमालोचनमपि नामगोचरमित्यर्थन्नामधेयेन व्यपदिश्यमानं शाब्दं प्रसज्यत इति । न शब्दप्रमाणकतया शाब्दमपि तु शब्दे सति शाब्दं शब्दश्चास्य विषयत्वेन जनको ऽर्थतादात्म्यात् । तथा च नाविकल्पं शब्दरहितमस्तीति तात्पर्यार्थः । तदस्य निराकरणमव्यपदेश्यमिति । यदिदमनुपयुक्ते शब्दार्थसम्बन्धे ऽर्थज्ञानं तन्नामधेयेन न व्यपदिश्यते । अयमभिसन्धिः । सामानाधिकरण्येन शब्दात्मकत्वं रूपादीनामभिधीयमानं शब्दब्रह्मात्मकत्वं वोच्येत श्रूयमाणगौरित्यादिपदभेदात्मकत्वं वा । न तावदाद्यः कल्पः । न खल्वस्मदादिसमस्तदर्शनपथातिवृत्तेन शब्दब्रह्मणा रूपादीनामस्ति सामानाधिकरण्यप्रतीतिः । किन्तु श्रूयमाणशब्दसामानाधिकरण्येन तु तादात्म्यप्रसाधने ऽनुपयुक्तशब्दसम्बन्धस्य बालमूकादेः रूपादिविज्ञानेषु नास्ति श्रूयमाणशब्दगन्धो ऽपि प्रागेव तु तत्सामानाधिकरण्यम् । न तु तेषामपि प्राग्भवीयशब्दभावनाऽनुगमेन तत्सामानाधिकरण्यमिति साम्प्रतम् । न खलु रूपाद्यात्मनः शब्दस्य रूपादिवैशद्येनावैशद्यं सम्भवति । युगपद्वैशद्यावैशद्यरूपविरुद्धधर्मयोगेन भेदप्रसङ्गात् । वैशद्ये तु व्युत्पन्नवदव्युत्पन्नो ऽपि शब्दैर्व्यवहरेत् । न तु सम्बन्धग्रहणमपेक्षेत । न च तादात्म्यादन्यद्वाचकत्वं शब्दानां यत्र सम्बन्धग्रहापेक्षा भवेत् । न च तादात्म्ये ऽपि कल्पितभेदानां वाच्यवाचकभावः तथा सति न सामानाधिकरण्यं स्यात् । न ह्यस्ति सम्भवो भेदकल्पना च सामानाधिकरण्यप्रथा चेति । तस्मादव्युत्पन्नानामस्ति शब्दरहितं रूपादिषु निर्विकल्पकं प्रत्यक्षमिति । न केवलमव्युत्पन्नानां व्युत्पन्नानामप्यस्तीत्याह । गृहीते ऽपि च शब्दार्थसम्बन्धे इति । अस्यार्थस्य सास्नादिमद्रूपस्याय गकाराद्यौकारो नामधेयमिति सम्बन्धग्रहणस्वरूपम् । न त्वयं पिण्डो डित्थशब्द इति प्रत्ययः । तस्माद्भिन्नयोरेव शब्दार्थयोः सम्बन्धग्रहात्तन्मूलत्वाच्च शब्दार्थव्यवहारस्य न शब्दपुरःसरमपि ज्ञानं सामानाधिकरण्यमात्मनो ऽर्थस्यावगमयति ।

श्यते । गृहीते ऽपि च शब्दार्थसम्बन्धे ऽस्यार्थस्याय शब्दो नामधेयमिति । यदा तु सो ऽर्थो गृह्यते तदा तत्पूर्वस्मादर्थज्ञानान्न विशिष्यते तदर्थविज्ञानं तादृगेव भवति * । न चा ऽप्रतीयमानेन व्यवहारः तस्या†ज्ञेयस्यार्थस्य सञ्ज्ञाशब्देनेतिकरणयुक्तेन निर्दिश्यते रूपमिति ज्ञानं रस इति ज्ञानमिति । तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते व्यवहारकाले तु व्याप्रियते । तस्मादशाब्दमर्थज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमिति । ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते तत्रेन्द्रियार्थसन्निकर्षादुदकमिति ज्ञानमुत्पद्यते । तच्च प्रत्यक्षं प्रसज्यत इत्यत आह । अव्यभिचारीति ‡ । यदतस्मिंस्तदिति तद्व्यभिचारि यत्तु तस्मिंस्तदिति तदव्यभि-

---

यत्तु शब्दानुपायेऽपि ज्ञाने शब्दः पूर्वं सम्भवति तद्गृहीतसङ्केतस्य प्रथममिन्द्रियार्थसन्निकर्षादालोचनेन शब्दसंसर्गरहितेनालोचिते ऽर्थमात्रे तस्यार्थस्य शब्दभेदेन सम्बन्धाच्छब्दविषयः संस्कारः प्रबोध्यते । स प्रबुद्धः शब्दस्मृतिं जनयति । तेन व्युत्पन्नस्य निर्विकल्पात् पराञ्चः प्रत्ययाः शब्दानुपाया अपि शब्दपुरःसरा जायन्ते । तस्माद् व्युत्पन्नानामपि नामधेयस्मरणाय पूर्वमेषितव्यो विनैव नामधेयमर्थप्रत्ययः । तदेवमर्थज्ञानकाले न समाख्याशब्दो व्याप्रियते प्रतीयमानतया व्यवहारकाले परप्रत्यायनकाले तु व्याप्रियते कारणतया तदनेन गोपालाविपालादीनां सञ्ज्ञानिवेशनं तासु व्यक्तिषु व्यवहारोत्कर्षहेतुर्नार्थोत्कर्षहेतुरित्यपि सूचितं भवति । तस्मादविकल्पप्रत्यक्षविरोधेनाव्यपदेश्यपदेनास्यैवाविकल्पस्य शब्दार्थव्याधरहितता सूचितेत्याशयवानुपसंहरति तस्मादिति । ता॰ टी॰ ।

* तस्य स्वर्थज्ञानस्याप्य समाख्याशब्दो नास्तीति येन प्रतीयमानं व्यवहाराय कल्पेतेति ५ । ४ । ३ पुस्तकेष्वधिकः पाठः ।

† तस्मादिति ५ । ४ । २ । ३ पाठः ।

‡ अर्थस्यैव व्यभिचारः स च प्रतीयमानरूपाभावरूपः । यथा मरीचिषु प्रतीयमानस्तोयत्वाभावः तद्विषयत्वात्तु ज्ञानस्य व्यभिचारित्वमिति क स्वित् । विशेष्यार्थगतधर्मोपचाराहित्वाज्ज्ञानमेव व्यभिचारीति । न्या॰ वा॰ । यद्यपि सामान्यलक्षणेनैव व्यभिचारिणो निरस्ताः प्रत्ययास्तदपेक्ष च विशेषलक्षणम् । अन्यथा ऽनुमानादिपदेष्वप्यव्यभिचारिपदमुपादेयं स्यात्तथा ऽपि सिद्धे सत्यारम्भो नियमार्थः । द्वयी हि प्रमाणानां गतिः किञ्चित्स्वसत्तामात्रेण प्रमासाधनं यथा प्रत्यक्षं न हि चक्षुरादीनां ग्रहणं प्रमायामुपयुज्यते ऽपि तु सत्तैव । अनुमानादीनि तु स्वज्ञानेन प्रमासाधनानि । न ह्यगृहीतं लिङ्गं वा शब्दो वा ऽऽगमसहितं सादृश्यं वा यथाविषयमादधाति प्रमाम् । तत्रा ऽनुमानस्य प्रमोपजननात्प्रागेवार्थाव्यभिचारग्रहणमपेक्ष्यते नान्यथा सत् प्रमा

चारि प्रत्यक्षमिति । दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयति धूम इति वा रेणुरिति वा तदेतदिन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानं प्रत्यक्षं प्रसज्यत इत्यत आह । व्यवसायात्मकमिति* । न चैतन्मन्तव्यम् । आत्ममनःसन्निकर्षजमेवाऽनवधारणज्ञानमिति । चक्षुषा ह्ययमर्थं पश्यन्नावधारयति यथा चेन्द्रियेणोपलब्धमर्थं मनसोपलभते एवमिन्द्रियेणानवधारयन्मनसा नावधारयति ।

---

सिध्यतीति । शब्दादौ तु यद्यपि प्रमोपजननं प्रति नार्थाव्यभिचारस्यापेक्षा तथापि शक्यमतिरोहितार्थमन्त्रमध्यपतितस्य द्रागित्येव प्रतीयमानार्थस्यापि सृण्येव जर्फरीतुर्फरीतू इत्येवमादेर्मन्त्रस्याप्तप्रणेतृकतया सामान्यतो ऽर्थाव्यभिचारित्वं ग्रहीतुम् । औत्सर्गिकं हि शब्दानामर्थपरत्वमत एव निगमनिरुक्तसहायास्ततो ऽर्थमवधारयन्ति । एवं यथा मुद्गस्तथा मुद्गपर्णीति आप्तवाक्यश्रवणादेव मुद्गसादृश्यज्ञानस्यानुपजनितफलस्यापि शक्यं तदर्थाव्यभिचारित्वं निश्चेतुम् । प्रत्यक्षस्य तु प्रमाणस्यात्यन्तपरोक्षस्योपलम्भ एव प्रमोपजननात् प्राग् दुर्लभः प्रागेव तु तस्यार्थाव्यभिचारित्वम् । यद्यपि च संवेदनप्रामाण्यपक्षे ऽपि तत्संवेदनं मनसा सुलभं तथा ऽपि न तन्मात्रं प्रमाणमपि त्वसाधारणेन्द्रियार्थसन्निकर्षसहायमिति तत्सहायस्य तस्य परोक्षत्वमेव । तेन प्रत्यक्षस्य प्रमाणस्य फलाव्यभिचारेणैवाव्यभिचारज्ञानं न स्वरूपत इत्येतत्प्रमाणान्तरेभ्यो व्यावृत्तमसाधारणं प्रत्यक्षस्य रूपमापयितुमव्यभिचारिपदोपादानम् । अथ वा प्रत्यक्षाव्यभिचार एवानुमानाद्यव्यभिचारे कारणम् । न ह्यस्ति सम्भवो ऽव्यभिचरितप्रत्यक्षगृहीतपक्षधर्मताकं तर्कसहायप्रत्यक्षगृहीताविनाभावं वा ऽनुमानं व्यभिचरतीति । यत्तु बाधितविषयं सत्प्रतिपक्षितं वा ऽनुमानं तदपि यद्यपि प्रथमं व्याप्तिग्रहणादौपेत न खण्डितं तथापि खण्डनोत्तरकालं सो ऽपि प्रतीयते । तथा च व्याप्तिग्राहि प्रत्यक्षं तत्रापि व्यभिचरतीति । एवमागमो ऽपि साक्षात् क्व चित्पारम्पर्येण प्रत्यक्षपूर्वकस्तद्व्यभिचारेणैव व्यभिचरति । आगमव्यभिचारेण चोपमानव्यभिचारो व्याख्यातः । तदेवं प्रत्यक्षाव्यभिचारेण प्रमाणानामव्यभिचारो ऽस्तीति प्रत्यक्षस्यैव विशेषणमव्यभिचारिपदं चकार नेतरेषां प्रमाणानाम् । न ह्यस्ति सम्भवस्तन्मूलं प्रत्यक्षमव्यभिचारि तानि च व्यभिचारीणीति । सो ऽयं विशेषः प्रमाणान्तरेभ्यः प्रत्यक्षस्य । तस्मात्सुष्ठूक्तं शीघ्रं परीक्षय इति । ता. टी.

* अव्यभिचारिपदेनैव संशयज्ञानमपि परास्तम् । नो खलु संशयज्ञानं विकल्प्यमानवस्तुगोचरं तद्रूपं वस्तु प्रापयति । अप्रापयच्चोपदर्शितं कथं संवादकम् । असंवादकं च कथमव्यभिचारि । तस्मादव्यभिचारिपदेनैव संशयज्ञाने निरस्ते सविकल्पकप्रत्यक्षावरोधार्थमुपादीयमानं व्यवसायात्मकपदं संशयज्ञानप्रत्यक्षतापाकरणमन्वाचिनोति । व्यवसायात्मकपदं साक्षात्सविकल्पस्य वाचकम् । तथा

यच्चैतदिन्द्रियानवधारणपूर्वकं मनसा ऽनवधारणं तद्विशेषापेक्षं विमर्शमात्रं* संशयो न पूर्वमिति । सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः† उपहतेन्द्रियाणामनुव्यवसायाभावादिति । आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यमनिन्द्रियार्थसन्निकर्षजं‡ हि तदिति । इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात् । भौतिकानीन्द्रियाणि नियतविषयाणि सगुणानां चैषामिन्द्रियभाव इति । मनस्त्वभौतिकं सर्वविषयं§ च नास्य सगुणस्येन्द्रियभाव इति । सति चेन्द्रियार्थसन्निकर्षे सन्निधिमसन्निधिं चा||स्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्याम इति । मनसश्चेन्द्रियभावात्¶ न वाच्यं लक्षणान्तरमिति । तन्त्रान्तरसमाचाराच्चै**तत्प्रत्येतव्यमिति । परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः । व्याख्यातं प्रत्यक्षम्†† ।

---

हि । व्यवसायो विनिश्चयो विकल्प इत्यनर्थान्तरं स एवात्मा रूपं यस्य तत्सविकल्पकं प्रत्यक्षम् । ता टी अत्रैव सविकल्पस्य प्रत्यक्षत्वाभावपूर्वपक्षस्तस्य प्रत्यक्षत्वसाधनं च विस्तरेण तात्पर्यटीकायाम् ।

* तद्विमर्शमिति ५ । ४ । २ । ३ पाठः ।

† पश्चान्मनसानुव्यवसाय इति ५ । ४ । २ पुस्तकेष्वधिकः पाठः ।

‡ अनिन्द्रियजमिति ५ । ४ । २ पुस्तकपाठः ।

§ मनः सर्वविषयं स्मृतिकारणसंयोगाधारत्वात् आत्मवत् । सुखग्राहकसंयोगाधिकरणत्वात् समस्तेन्द्रियाधिष्ठातृत्वाच्चात्मवदिति न्या वा । अत्र भौतिका भौतिकत्वरूपमिन्द्रियमनसोर्वैधर्म्यं मनसो नित्यत्वेन तत्रासिद्धस्य भौतिकत्वस्याभावस्याभ्युपगमासम्भवात्तयोरन्यमात्रधर्मत्वात्तथात्वे श्रोत्रस्य चाभौतिकस्य पाठानुपपत्तिप्रसङ्गात् वार्तिके दूषितम् । घ्राणादीनि यथाः स्वगुणान् गन्धादिना बाह्यं गन्धादि बोधयन्ति नैवं स्वगुणेन शब्देन श्रोत्रं बाह्यं शब्दं बोधयति तन्मनायत् श्रोत्रमपि घ्राणादिसूत्रे न पठितव्यमित्यापत्त्या सगुणानां चैषामिन्द्रियभाव इत्यपि वार्तिके दूषितम् ।

|| यति ५ । ४ । २ । ३ पाठः ।

¶ भावाच्च वाच्यमिति ५ । ४ । २ । ३ पाठः ।

** शास्त्रान्तरे मनस इन्द्रियत्वमुक्तमत्र च न दूषितमतस्तस्य स्वमतेऽपीन्द्रियत्वमिष्टमित्यनुमीयत इति भावः ।

†† ज्ञानादीनां व्यस्तानामेवात्मलक्षणत्वेपि इच्छाप्रयत्नद्वेषसुखदुःखज्ञानान्यात्मनो लिङ्गमिति भूयसा सूत्रे पाठाद्घनविघातो र्थविकल्पाणपत्त्या फलमिति समस्तस्य लक्षणत्वाच्चैतत्सूत्रपठितानां समस्तानां लक्षणत्वमुत व्यस्तानामिति सन्देहे प्रत्येकं विशेषणानामनुमानमुखेनाव्यविपर्ययसमग्रव्यावर्तकत्वेन समस्तानामेव लक्षणत्वमिति वार्तिकम् ।

अत्रैव सतो र्थाद्विज्ञानमिति कल्पना पोढमिति सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमिति च तन्त्रान्तरीयलक्षणानि सर्वेषामेव विज्ञानानामग्रजत्वाद् व्याप्तेरनुपपत्त्या प्रत्यक्षादिपदैर्व्याख्यस्य कल्पनाऽपोढत्वानुपपत्त्या च सर्वत्रे ऽतिप्रसङ्गाच्च विस्तरेण दूषितानि वार्तिके तत एवानुसन्धेयानि ।

अथ* तत्पूर्वकं† त्रिविध‡मनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च§ ॥ ५ ॥

---

* अत्रानुमानमिति सिद्धवत् प्रमाणविशेषरूपलक्ष्यानुवाद एव नाप्रत्यक्षं प्रमाणमित्यप्रामाण्यमनुमानस्य सदूरं प्रतिक्षिपति । दृष्टप्रामाण्याप्रामाण्यविज्ञानव्यक्तिसाधर्म्येण हि कासां चिद् व्यक्तीनां प्रामाण्यमप्रामाण्यं वा विदधीत दृष्टसाधर्म्यं चानुमानमेवेति कथं तेनैव तस्याप्रामाण्यम् । अपि चानुमानमप्रमाणमिति वाक्यप्रयोगोऽपि विप्रतिपन्नं सन्दिग्धं वा पुरुषं प्रत्यर्थवान् न च परपुरुषवर्त्तिनो देहधर्मा अपि सन्देहाज्ञानविपर्यासा गौरत्वादिवत् प्रत्यक्षा वीक्ष्यन्ते । न च तद्वचनात् प्रतीयन्ते वचनस्यापि प्रत्यक्षादन्यस्याप्रामाण्योपगमात् । पुरुषविशेषमनधिकृत्य तु वचनमनर्थकं प्रयुञ्जानो नायं लौकिको न परीक्षक इत्युन्मत्तवदनवधेयवचनः स्यात् । तस्मादकामेनापि प्रमाणमनुमानमुपेतव्यमिति लक्ष्यं प्रमाणभेदमनुमानमनूद्य तत्पूर्वकमिति लक्षणं विधत्ते । अथेति । आनन्तर्ये । उक्तं प्रत्यक्षमनुमानस्य हेतुरिदानीमनुमानं हेतुमद् व्युत्पाद्यते इत्यर्थः । ता॰ टी॰ ।

† तानि ते तत्पूर्वं यस्य तदिदं तत्पूर्वकम् । यदा तानीति विग्रहस्तदा समस्तप्रमाणाभिसम्बन्धात्सर्वप्रमाणपूर्वकत्वमनुमानस्य वर्णितं भवति । पारम्पर्येण पुनस्तत् प्रत्यक्षएव व्यवतिष्ठतइति तत्पूर्वकत्वमुक्तं भवति । यदापि विवेकात् ते पूर्वं यस्येति ते द्वे प्रत्यक्षे पूर्वं यस्य प्रत्यक्षस्य तदिदं तत्पूर्वकं प्रत्यक्षमिति । ते च द्वे प्रत्यक्षे लिङ्गलिङ्गिसम्बन्धदर्शनमाद्यं प्रत्यक्षं लिङ्गदर्शनं द्वितीयम् । बुभुत्सावतो द्वितीयाल्लिङ्गदर्शनात् संस्काराभिव्यक्त्युत्तरकालं स्मृतिः स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनमयं धूम इति । तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं परामर्शरूपमनुमानं भवति । यदा पुनस्तत् पूर्वं यस्य तदिदं तत्पूर्वकमिति तदा भेदस्याविवक्षितत्वाल्लिङ्गलिङ्गिसम्बन्धदर्शनानन्तरं लिङ्गदर्शनसम्बन्धस्मृतिभिर्लिङ्गपरामर्शो विशिष्यते । न्या॰ वा॰ ।

अत्र पूर्वसूत्राज् ज्ञानपदं सम्बन्धनीयं तेन प्रत्यक्षपूर्वकं ज्ञानमनुमानमिति लक्षणं पर्यवस्यति । तेन प्रत्यक्षजन्ये संस्कारे नातिव्याप्तिरिति वार्त्तिकम् ।

‡ अत्र लिङ्गस्य प्रसिद्धसदसंदिग्धभेदेनानुमानस्य त्रैविध्यान्तरं वार्त्तिके प्रदर्शितम् । प्रसिद्धमिति पक्षे व्यापकं सदिति सजातीयेऽस्ति असन्दिग्धमिति सजातीयाविनाभावीति तद्व्याख्यानं च तत्रैव । पूर्ववदादिपदेषु प्रदर्शितं कारणेन कार्यानुमानमित्यादि भाष्ये कारणस्याव्याप्यत्वेन तेनानुमानासम्भवमाशङ्क्य कारणज्ञानेन कार्यज्ञानमित्याशयो वार्त्तिके दर्शितः । एवं शेषवदित्यत्रापि ।

§ अत्रान्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति भाष्योक्तत्रैविध्यादन्यत् त्रैविध्यं सूत्रघटकस्य फलपदानामेकवाक्यतया पूर्ववच्चाम साध्यव्यापकं शेषवदिति समाने ऽस्ति सामान्यतश्चादृष्टं चशब्दात् प्रत्यक्षागमाविरुद्धं चेत्येवं चतुर्लक्षणं पञ्चलक्षणमनुमानमिति सूत्रव्याख्यान्तरं च वार्त्तिककृतोक्तम् । अबाधितविषयमसत्प्रतिपक्षं पूर्ववदिति ध्रुव

तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनं चाभिसम्बध्यते। लिङ्गलिङ्गिनोः सम्बद्धयोर्दर्शनेन लिङ्गस्मृतिरभिसम्बध्यते। स्मृत्या लिङ्गदर्शनेन चाऽप्रत्यक्षो ऽर्थो ऽनुमीयते। पूर्ववदिति यत्र कारणेन कार्यमनुमीयते* यथा मेघोन्नत्या भविष्यति वृष्टिरिति। शेषवत्तद् यत्र कार्येण कारणमनुमीयते। पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसो ऽनुमीयते भूता वृष्टिरिति। सामान्यतोदृष्टं व्रज्यापूर्वकमन्यत्र दृष्टस्याऽन्यत्र दर्शनमिति। तथा चादित्यस्य तस्मादस्त्यप्रत्यक्षाऽप्यादित्यस्य व्रज्येति† अथ वा पूर्व-

---

इत्वा शेषवदित्येका विधा। सामान्यतो ऽदृष्टमिति द्वितीया। शेषवत् सामान्यतोदृष्टमिति तृतीया। तदेव त्रिविधमनुमानं तत्र चतुर्लक्षणं द्वयम् एकं पञ्चलक्षणमिति तात्पर्यटीका। प्रत्यक्षागमाविरुद्ध चेति चकारेणासत्प्रतिपक्षत्वमपि सूचितमिति सत्येव। तेनाबाधितविषयमसत्प्रतिपक्षं साध्यव्यापकमिति त्रिविधमपि लभ्यते। तत्र शेषवदिति सामान्यतो ऽदृष्टं चेत्यनयोः पृथग्योजने चतुर्लक्षणं द्वयम्। उभयोर्मेलनेन सम्बन्धे पञ्चलक्षणं तृतीयमिति बोध्यम्।

* कारणज्ञानेन कार्यानुमानं कारणसामानाधिकरण्येन वा कार्यानुमानं न विवक्षितं कारणज्ञानस्य व्याप्यव्यापककार्यज्ञानासम्भवाभयोर्व्यधिकरणत्वाच्च। किं तु कार्यं कारणविशेषणत्वेनोपयुक्तं गुणभूतमनुमीयते इति सूत्रार्थः। एवं शेषवदित्यत्रापि कार्यदर्शनेन कारणं कार्यस्याङ्गभूतमनुमीयत इति बोध्यम्। भाष्योक्तोदाहरणयोः प्रयोगाकारश्च वृष्टिमन्त एते मेघाः गम्भीरध्वानवत्त्वे सति बहुबलाकावत्त्वे सति अचिरप्रभावत्त्वे सति उन्नतिमत्त्वाद् वृष्टिमन्मेघवदिति। उपरिवृष्टिमद्देशसम्बन्धिनी नदी स्रोतःशीघ्रत्वे सति पूर्णफलकाष्ठादिवहनवत्त्वे सति पूर्णत्वात् पूर्वोवृष्टिमन्नदीवदिति। भविष्यति भूता चेति कालस्याविवक्षितत्वात्. कश्चित्काल उपादेय इति व्या या

† देशान्तरप्राप्तिमानादित्यः द्रव्यत्वे सति चयवृद्धिमत्प्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसम्बन्धादनुत्पन्नपादविहारस्य परिवृत्त्य तत्प्रत्ययविषयत्वात् मयूरादिवदिति व्याख्याकारः। व्या या तत्प्रत्ययविषयत्वादित्युच्यमाने पुरःस्थितेन स्थाणुना व्यभिचार. सो ऽपि हि प्रत्यभिज्ञानविषयो भवति तत्रैव स्थितस्तचिरस्त्वर्थे परिवृत्त्येत्युक्तम्। तथा ऽपि गुणादिभिर्व्यभिचारस्तन्निवृत्त्यर्थं द्रव्यत्वे सतीति। तथापि प्रदीपप्रभाभिर्व्यभिचारस्तन्निवृत्त्यर्थं चयवृद्धिप्रत्ययाविषयत्वे सतीति। तथापि पृष्ठतो ऽवस्थितया स्थूणया व्यभिचारस्तन्निवृत्त्यर्थं प्राङ्मुखोपलभ्यत्वे सतीति। उपलभ्यता चोपलब्धिकर्मता सा चेहातीता विवक्षिता ऽन्यथा पूर्वापरजलधिवेलाऽवगाहिना तुहिनशैलेन व्यभिचारः। यद्यप्ययमपि परावृत्त्य तत्प्रत्ययतो ऽतिपतितोपलब्धिकर्मभावस्तथा ऽपि तदा नरान्तरस्योपलभ्यो मार्तण्डमण्डल त्वस्तचूडावलम्बि न प्राच्यां कस्य चिदुपलम्भगोचर इति वैषम्यम्। तथापि यदि दूरेव पुरो ऽवस्थितस्य पश्चिमाभिमुखस्य

वदिति यत्र यथापूर्वं* प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानं यथा धूमेनाग्निरिति । शेषवन्नाम परिशेषः स च प्रसक्तप्रतिषेधे ऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः यथा सदनित्यमे†वमादिना‡ द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन्द्रव्यकर्मगुणसंशये न द्रव्यमेकद्रव्यत्वात् । न कर्म शब्दान्तरहेतुत्वात् । यस्तु शिष्यते सो ऽयमिति शब्दस्य गुणत्वप्रतिपत्तिः । सामान्यतोदृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते यथेच्छादिभिरात्मा । इच्छादयो गुणाः गुणाश्च द्रव्यसंस्थानाः तद्यदेषां स्थानं स आत्मेति § । विभागवचनादेव त्रिविधमिति सिद्धे त्रिविधवचनं ||

---

प्रासादस्य स्वयमुपनिपत्य पृष्ठतो भवति सदोक्तलक्षणस्य हेतोरस्ति व्यभिचारस्तन्निवृत्त्यर्थमनुत्पन्नपादविहारस्येत्युक्तम् । तदभिमुखदेशसम्बन्धादिति ल्यब्लोपे पञ्चमी । स्वाभिमुखदेशमुद्दिश्यानुत्पन्नः पादविहारो यस्य स तथोक्तः । तमुद्दिश्य खल्वयं पद्भ्यां सञ्चरमाणः प्रासादस्य पृष्ठतो भवतीति भावः । ता. टी ।

एतेन देशान्तरस्याकाशस्थे दिक्स्थे वा तयोरप्रत्यक्षत्वेन प्रत्यक्षाप्रत्यक्षसंयोगस्याप्रत्यक्षतया साध्या सदादित्यसंयोगस्याप्रत्यक्षत्वेन देशान्तरप्राप्तेरसिद्धतया कथं तया गत्यनुमानमिति निरस्तम् । उक्तरीत्या अनुमितया प्राप्त्या गत्यनुमानादिति दिक् ।

* पूर्ववत्पदे वतिप्रत्ययो न तु मतुबिति भावः । साध्यतावच्छेदकहेतुतावच्छेदकरूपपुरस्कारेण यत्र व्याप्तिग्रहस्तत् पूर्ववदनुमानम् । पर्वते पक्षे धूमेन हेतुना वन्हौ साध्ये धूमत्ववन्हित्वपुरस्कारेणैव रसवत्यादौ व्याप्तेर्गृहीतत्वात् । साध्यतावच्छेदकहेतुतावच्छेदकरूपव्यापकधर्मपुरस्कारेण व्याप्तिग्रहे तु सामान्यतोदृष्टम् । यथेच्छादिभिरात्मनि साध्ये इच्छात्वात्मत्वव्यापकाभ्यां गुणत्वद्रव्यत्वाभ्यां व्याप्तिग्रहः । शेषवदनुमानं तु प्रसिद्धे पक्षे ऽसिद्धस्येतरभेदस्य साधकमनुमानमिति दिक् ।

† सदनित्यमेवमिति ५ । ४ । २ । ३ पाठः

‡ इदं तु परिशेषस्योदाहरणं नादरणीयम् । व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति । एष पुनरन्वयव्यतिरेकी । द्रव्यकर्मान्यत्वे सति सदाद्यभेदस्य सपक्षे रूपादौ सत्त्वाद्विपक्षे सामान्यादावभावात् । तस्मादात्मतन्त्रतासाधनमिच्छादीनां परिशेषोदाहरणं द्रष्टव्यमिति । ता. टी ।

§ इच्छादीनां गुणत्वेन पारतन्त्र्यसाधनं सामान्यतोदृष्टानुमानेन । आत्मपरतन्त्रता तु शेषवदनुमानादिति वार्तिकम् ।

|| त्रिविधमिति नियमार्थमनेकधा भिन्नस्यानुमानस्य त्रिविधेन पूर्ववदादिना संग्रह इति नियमं दर्शयति । कथमनेकधा भिन्नमिति । अन्वयव्यतिरेकि द्विधा सजातीये सदेव सदसच्च । अन्वय्यपि द्विधैव । एवं व्यतिरेक्येकरूपं सपक्षाभावात् । तदिदं पञ्चधा भिन्नमनुमानं कालभेदेन पञ्चदशधा भवति । तदपि पुनः पुरुषभेदानुविधानात् षष्टिभेदं भवति तस्य त्वान्तर्गणिको ऽनन्तभेदः

तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनं चाभिसम्बध्यते । लिङ्गलिङ्गिनोः संबद्धयोर्दर्शनेन लिङ्गस्मृतिरभिसम्बध्यते । स्मृत्या लिङ्गदर्शनेन चाऽप्रत्यक्षोऽर्थोऽनुमीयते । पूर्ववदिति यत्र कारणेन कार्यमनुमीयते* यथा मेघोन्नत्या भविष्यति वृष्टिरिति । शेषवत्तद् यत्र कार्येण कारणमनुमीयते । पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति । सामान्यतोदृष्टं व्रज्यापूर्वकमन्यत्र दृष्टस्याऽन्यत्र दर्शनमिति । तथा चादित्यस्य तस्मादस्त्यप्रत्यक्षाऽप्यादित्यस्य व्रज्येति† अथ वा पूर्व-

---

कृत्वा शेषवदित्येका विधा । सामान्यतोऽदृष्टमिति द्वितीया । शेषवत् सामान्यतोदृष्टमिति तृतीया । तदेव त्रिविधमनुमानं तत्र चतुर्लक्षणं द्वयम् एकं पञ्चलक्षणमिति तात्पर्यटीका । प्रत्यक्षागमाविरुद्धं चेति चकारेणासत्प्रतिपक्षत्वमपि दर्शितमिति तत्रैव । तेनाबाधितविषयमसत्प्रतिपक्षं साध्यव्यापकमिति विशेषणत्रयं लभ्यते । तत्र शेषवदिति सामान्यतोऽदृष्टं चेत्यनयोः पृथग्योजने चतुर्लक्षणं द्वयम् । उभयोर्मेलनेन सम्बन्धे पञ्चलक्षणं तृतीयमिति बोध्यम् ।

* कारणज्ञानेन कार्यानुमानं कारणसामानाधिकरण्येन वा कार्यानुमानं न विवक्षितं कारणज्ञानमात्रेणाव्यापककार्यज्ञानासम्भवात् तयोर्व्यधिकरणत्वाच्च । किं तु कार्यं कारणविशेषणत्वेनोपयुक्तं गुणभूतमनुमीयते इति सूत्रार्थः । एवं शेषवदित्यत्रापि कार्यदर्शनेन कारणं कार्यस्याङ्गभूतमनुमीयत इति बोध्यम् । भाष्योक्तोदाहरणयोः प्रयोगाकारश्च वृष्टिमन्त एते मेघाः गम्भीरध्वानवत्त्वे सति बहुबलाकावत्त्वे सति अचिरप्रभावत्त्वे सति उन्नतिमत्त्वाद् वृष्टिमन्मेघवदिति । उपरिवृष्टिमद्देशसम्बन्धिनी नदी स्रोतःशीघ्रत्वे सति पूर्णफलकाष्ठादिवहनवत्त्वे सति पूर्णत्वात् पूर्णवृष्टिमन्नदीवदिति । भविष्यति भूता वेति कालस्याविवक्षितत्वादन्यः कोऽपि काल उपादेय इति न्या० वा०

† देशान्तरप्राप्तिमानादित्यः द्रव्यत्वे सति तत्प्रवृत्तिमत्त्वाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसम्बन्धादनुत्पन्नपादविहारस्य पश्चिमस्य तत्प्रत्यक्षविषयत्वात् मण्यादिवदिति व्याख्याकारः । न्या० वा० तत्प्रत्यक्षविषयत्वादित्युच्यमाने पुरःस्थितेन स्थाणुना व्यभिचारः सोऽपि हि प्रत्यभिज्ञानविषयो भवति तत्रैव स्थितस्तद्विशेषणार्थं परिवृत्येत्युक्तम् । तथाऽपि गुणादिभिर्व्यभिचारस्तद्विवृत्त्यर्थं द्रव्यत्वे सतीति । तथापि प्रदीपप्रभाभिर्व्यभिचारस्तन्निवृत्त्यर्थं तत्प्रवृत्तिमत्त्वाविषयत्वे सतीति । तथापि पृष्ठतोऽवस्थितया स्थूणया व्यभिचारस्तन्निवृत्त्यर्थं प्राङ्मुखोपलभ्यत्वे सतीति । उपलभ्यता चोपलब्धिकर्मता सा चेहातीता विवक्षिता अन्यथा पूर्वापरजलधिवेलाऽवगाहिना तुहिनशैलेन व्यभिचारः । यद्यप्ययमपि परावृत्त्य तत्प्रत्ययवतोऽतिपतितोपलब्धिकर्मभावस्तथाऽपि तदा नरान्तरस्योपलभ्यो मार्तण्डमण्डलं त्वस्तचूडावलम्बि न प्राच्यां कस्य चिदुपलम्भगोचर इति वैधर्म्यम् । तथापि यदि दृष्ट्वैव पुरोऽवस्थितस्य पश्चिमाभिमुखस्य

वदिति यत्र यथापूर्वं* प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानं यथा धूमेनाग्निरिति । शेषवन्नाम परिशेषः स च प्रसक्तप्रतिषेधे ऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः यथा सदनित्यमेवमादिना† द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन्द्रव्यकर्मगुणसंशये न द्रव्यमेकद्रव्यत्वात् । न कर्म शब्दान्तरहेतुत्वात् । यस्तु शिष्यते सो ऽयमिति शब्दस्य गुणत्वप्रतिपत्तिः । सामान्यतोदृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केन चिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते यथेच्छादिभिरात्मा । इच्छादयो गुणाः गुणाश्च द्रव्यसंस्थानाः तद्यदेषां स्थानं स आत्मेति § । विभागवचनादेव त्रिविधमिति सिद्धे त्रिविधवचनं ||

---

प्रासादस्य स्वयमुपनिपत्य पृष्ठतो भवति तदोक्तलक्षणस्य हेतोरस्ति व्यभिचारस्तन्निवृत्त्यर्थमनुत्पन्नपादविहारस्येत्युक्तम् । तदभिमुखदेशसम्बन्धादिति ल्यब्लोपे पञ्चमी । स्वाभिमुखदेशमुद्दिश्यानुत्पन्नः पादविहारो यस्य स तथोक्तः । तमुद्दिश्य खल्वयं पङ्क्त्या सञ्चरमाणः प्रासादस्य पृष्ठतो भवतीति भावः । ता० टी० ।

एतेन देशान्तरस्याकाशत्वे दिक्त्वे वा तयोरप्रत्यक्षत्वेन प्रत्यक्षाप्रत्यक्षयोर्गत्याप्रत्यक्षतया साध्या सहादित्यसंयोगस्याप्रत्यक्षत्वेन देशान्तरप्राप्तेरसिद्धतया कथं तया गत्यनुमानमिति निरस्तम् । उक्तरीत्या अनुमितया प्राप्त्या गत्यनुमानादिति दिक् ।

* पूर्ववत्पदे वतिप्रत्ययो न तु मतुबिति भावः । साध्यतावच्छेदकहेतुतावच्छेदकरूपपुरस्कारेण यत्र व्याप्तिग्रहस्तत् पूर्ववदनुमानम् । पर्वते पक्षे धूमेन हेतुना वह्नौ साध्ये धूमत्ववह्नित्वपुरस्कारेणैव रसवत्यादौ व्याप्तेर्गृहीतत्वात् । साध्यतावच्छेदकहेतुतावच्छेदकरूपव्यापकधर्मपुरस्कारेण व्याप्तिग्रहे तु सामान्यतोदृष्टम् । यथेच्छादिभिरात्मनि साध्ये इच्छात्वात्मत्वव्यापकाभ्यां गुणत्वद्रव्यत्वाभ्यां व्याप्तिग्रहः । शेषवदनुमानं तु प्रसिद्धे पक्षे असिद्धस्येतरभेदस्य साधकमनुमानमिति दिक् ।

† सदनित्यमेवमिति ५ । ४ । २ । ३ पाठः

‡ इदं तु परिशेषस्योदाहरणं नादरणीयम् । व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति । एष पुनरन्वयव्यतिरेकी । द्रव्यकर्मान्यत्वे सति सदात्मभेदस्य सपक्षे रूपादौ सत्त्वाद्विपक्षे सामान्यादावभावात् । तस्मादात्मतन्त्रतासाधनमिच्छादीनां परिशेषोदाहरणं द्रष्टव्यमिति । ता० टी० ।

§ इच्छादीनां गुणत्वेन पारतन्त्र्यसाधनं सामान्यतोदृष्टानुमानेन । आत्मपरतन्त्रता तु शेषवदनुमानादिति वार्त्तिकम् ।

|| त्रिविधमिति नियमार्थमनेकधा भिन्नस्यानुमानस्य त्रिविधेन पूर्ववदादिना संग्रह इति नियमं दर्शयति । कथमनेकधा भिन्नमिति । अन्वयव्यतिरेकि द्विधा सजातीये सदेव सदसच्च । अन्वय्यपि द्विधैव । एवं व्यतिरेक्येकरूपं सपक्षाभावात् । तदिदं पञ्चधा भिन्नमनुमानं कालभेदेन पञ्चदशधा भवति । तदपि पुनः पुरुषभेदानुविधानात् षष्टिभेदं भवति तस्य त्वान्तर्गणिको ऽनन्तभेदः

महतो महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात्परं वाक्यलाघवं मन्यमानस्यान्यस्मिन् वाक्यलाघवे ऽनादरः । तथा चायमित्थंभूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते छले शब्दादिषु च बहुलं समाचारः शास्त्रे इति । सद्विषयं* च प्रत्यक्षं सदसद्विषयं चानुमानम् । कस्मात् । त्रैकाल्यग्रहणात् त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते भविष्यतीत्यनुमीयते भवतीति चाभूदिति च असच्च खल्वतीतमनागतं चेति ।

अथोपमानम् ।

## प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्† ॥ ६ ॥

---

इति वार्त्तिकम् । अनित्यः शब्दः कृतकत्वादिति सपक्षे सदेव । अनित्यः शब्दः प्रयत्नादिप्रयत्नानन्तरीयकत्वादिति सपक्षे ऽसदेव । यथा परमाण्वादयः कस्य चित्नित्यताः प्रमेयत्वाद् घटादिवदिति तथा सपक्षे सदसत् । तथा तत्रैव साध्ये सत्त्वाद् घटादिवदिति । कालभेदस्त्रैकाल्यम् । प्रतिपक्षो ऽप्रतिपक्षः सन्दिग्धो विपर्यस्तश्चेति पुरुषभेदः । ता॰ टी॰ ।

* सदिति वर्त्तमानम् । असदित्यतीतानागते । प्रत्यक्षं हि लौकिकं वर्तमानविषयमेव । अनुमानं तु त्रैकाल्यविषयम् । यद्यपि प्रत्यक्षमप्यतीतानागतयोः संप्रति निषेध्ययोर्निषेधे वर्तमानमसद्विषयं तथापि न निषेध्ययोः प्रवर्तत इत्येतावतैव सद्विषयत्वमुक्तम् । अनुमानं तु तयोरपि प्रवर्तत इत्येतावत ऽसद्विषयत्वमुक्तम् । ता॰ टी॰ ।

† अत्रापि यत इत्यध्याहार्यम् । सिद्धिः साधनम् । ता॰ टी॰ यतः प्रमाणात् साध्यस्य संज्ञासंज्ञिसम्बन्धस्य साधनं सिद्धिर्निश्चय इति यावत् । तदुपमानं प्रमाणम् । तत्र हेतुः प्रसिद्धसाधर्म्यादिति । प्रसिद्धस्य पूर्वदृष्टस्य गवादेः साधर्म्यस्य सादृश्यस्य ज्ञानादित्यर्थः । प्रमाणविशेषलक्षणत्वसिद्धये यत इत्यध्याहारः ।

साध्यसाधनमित्युच्यमाने प्रत्यक्षादिसाधने सुखादिसाधने घटे प्रसङ्गः अत उक्तं प्रसिद्धसाधर्म्यादिति । यद्यपि प्रसिद्धसाधर्म्यमुपमानमित्युच्यमाने प्रमाणविशेषाभिधाय्युपमानपदसामानाधिकरण्यात् कारकत्वलाभस्तथापि सदाभासनिराकरणाय साध्यसाधनपदोपादानम् । ता॰ टी॰ ।

प्रसिद्धसाधर्म्यादित्यत्र प्रसिद्धिरुभयी श्रुतिमयी प्रत्यक्षमयी च । श्रुतिमयी यथा गौरेवं गवय इति । प्रत्यक्षमयी च यथा गोसादृश्यविशिष्टो ऽयमीदृशः पिण्ड इति । तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्यपेक्षा समाख्यासम्बन्धप्रतिपत्तिहेतुः । यद्यपि यथा गौरेवं गवय इत्येतस्मादपि गोसदृशस्य गवयः समाख्येति शक्यमवगन्तुं न खलु प्रत्यक्ष एव समाख्याकर्म समानकालोपव्यवच्छिन्ने हि तद् भवति तच्च यदि मानान्तरेणापि तथा ऽवगम्यते कस्तत्र संज्ञाकर्म

प्रज्ञातेन सामान्यात्प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति । यथा गौरेवं गवय इति । किं पुनरत्रोपमानेन क्रियते । यदा खल्वयं गवा समानधर्मं प्रतिपद्यते तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यतइति । समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इत्याह । यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्ममर्थमिन्द्रियार्थसन्निकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं

---

निवारयेत् । गोसादृश्येन चोपलक्षितः पिण्डो य इति सर्वनाम्ना परामृष्टः शक्यो घटादिभ्योऽसमानजातीयेभ्यो महिषादिभ्यश्च समानजातीयेभ्यो व्यवच्छिद्यो ऽवगन्तु गवयस्तथापि यावदयमसौ गवय इति साक्षात् प्रतीते सम्बन्धिनि संज्ञा न निवेशयति तावदयं परिप्लुतमतिः प्रमाता क्व चित् खलु द्रक्ष्यामि तादृशं पिण्डं यत्र गवयसंज्ञां प्रतिपत्स्यइति प्रमोत्सुक एवोदीक्षेत । न चासौ वाक्यमात्रसहायोऽप्रत्यक्षीकृतगोसदृशपिण्डोऽयमसौ गवयाख्य इति प्रतिपत्तुमर्हति । न च वाक्यं विना प्रत्यक्षमात्रात् । तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयम् । ननु यदोदीच्येन क्रमेलकं निन्दतोक्तं धिक्करभमतिदीर्घग्रीवं लम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामिति तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ करभ इत्यवैति तत्कतमदेतेषु प्रमाणं न तावदुपमानं साधर्म्याभावाच्चापि पञ्चमं प्रमाणमुपगम्यते । यद्युच्येत निन्दापरं वाक्यं करभस्य तादृशत्वे न प्रमाणं न ह्यन्यपराच्छब्दादन्यस्यावगम इति यत्र तर्हि तादृक्त्वे पर्यवस्यति वाक्यं तत्र का गतिः । अथ तत्रापि तादृक्करभ आगमावगतः प्रत्यक्षेण प्रत्यभिज्ञायते करभशब्दवाच्यता च तस्य तत्परत्वे तादृक्करभपरत्वेऽप्यागमस्य प्रयोगमात्रादवगतानुमानात् । यो हि यत्र प्रयुज्यते शब्दोऽसति वृत्त्यन्तरे स तस्य वाचको यथा गोशब्दो गोत्वे प्रयुक्तश्चायं तादृशे तस्मात्तस्य वाचक इति यदिदं प्रागेव प्रयोगानुमितवाचकत्वमस्य प्रत्यक्षसमये केवलं स्मर्यतइति समानमेतदुपमानवाक्येऽपि । तत्रापि वाक्यादवगतसाधर्म्यवान् पिण्डः प्रत्यक्षेण प्रत्यभिज्ञायते प्रयोगानुमितं च गवयशब्दवाच्यत्वं स्मर्यतइति न फलान्तरमवशिष्यते यत्रोपमानं प्रमाणान्तरमिति । अत्रोच्यते । न तावदाकाशादिशब्दवदेष गवयशब्दः साक्षात् पिण्डस्य वाचकः किं तु गवयत्वं निमित्तीकृत्य पिण्डे वर्ततइति परमार्थः । न च यथा गौरेवं गवय इति वाक्याद् गवयत्वमवगतं न ह्यनवगतसम्बन्धं गवयपदमवधारयति । ततस्तदवगमात् सम्बन्धवेदने परस्पराश्रयप्रसङ्गः । न च गोसादृश्येनोपलक्ष्यते । न खल्वनुपलब्धचरेण गवयत्वेन गोसादृश्यं सबद्धं दृष्टम् । न चादृष्टसम्बन्धमुपलक्षकम् । न हि पुरुषेणादृष्टसम्बन्धो दण्डः पुरुषमुपलक्षयति । तस्मात् सम्बन्धिनो गवयत्वस्य सर्वथाऽनुपपत्तेः कुतो वाक्याद्वाऽनुमानाद्वा वाच्यवाचकसम्बन्धावगमः कुतस्तरां च सम्बन्धस्मृतिः ।

प्रतिपद्यतइति । यथा मुद्गस्तथा मुद्गपर्णी यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते उपमानात्संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाहरति । एवमन्यो ऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति ।

अथ शब्दः ।

## आप्तोपदेशः शब्दः ॥ ७ ॥

आप्तः खलु साक्षात्कृतधर्मा* यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा । साक्षात्करणमर्थस्याप्तिस्तया प्रवर्ततइत्याप्तः । ऋष्यार्यम्लेच्छानां समानं लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्तइति । एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते नातो ऽन्यथेति ।

## स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥

---

गवयत्वसामान्यविशेष्यतेति च पिण्डे प्रत्यक्षे युक्तः सम्बन्धावगमः सम्बन्धिनो गवयत्वस्य प्रत्यक्षत्वात् । तथापि किं गवयत्वजातिमान् पिण्डो वाच्य उत गोसादृश्यवानिति कुतो विनिगमनेति चेत् । वाक्यार्थस्मरणसहकारिगवयत्वजातिमतः पिण्डस्य गोसादृश्यदर्शनमेव तर्कसहायं गवयत्वाभिधाने प्रमाणं तर्कश्च गोसादृश्यविशिष्टपिण्डाभिधाने कल्पनागौरवप्रसङ्गः । तथा हि । सादृश्यविशिष्टपिण्डाभिधाने नाप्रतीतं सादृश्यं पिण्डं विशिनष्टीति तत्प्रतिपत्तव्यम् । न च शब्दादन्यतस्तदवगम इति शब्दस्य तत्र वाचकत्वं कल्पनीयम् । न चाविशिष्टं सादृश्यं पिण्डविशेषणं गवयपदमवस्थापयितुमर्हति यस्य कस्य चित् येन केन चित् सादृश्यादिति तदपि गवा विशेषणीयम् । न चान्यतो गोत्वस्यापि प्रतीतिरिति तदपि गवयपदेनाभिधातव्यमिति कल्पनागौरवम् । गवयत्वजातिमत्पिण्डाभिधाने तु लाघवमिति तदनुजानाति । साधर्म्यग्रहणं च धर्ममात्रोपलक्षणमिति करभसंज्ञाप्रतिपत्तिरप्युपमानफलमिति नाव्याप्तिर्नापि पञ्चमप्रमाणाभ्युपगमः । अत एव बहून्युदाहरणान्युक्त्वा ऽप्याह स्म भगवान् भाष्यकार एवमन्यो ऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति तस्मात् सर्वं चतुरस्रम् । ता॰ टी ।

* सुदृढेन प्रमाणेनावधारिता अर्था येन स साक्षात्कृतधर्मा । यथादृष्टस्येति मत्सरितया विपरीतोपदेशो निवारितः । चिख्यापयिषयेत्यनुकम्पा ऽलसकारिते इति । प्रयुक्त उत्पादितप्रयत्न इत्यलसत्वम् । तथापि स्थानकरणपाटवाभावेन वर्णनिष्पादनासामर्थ्येनाप्तः प्रसज्येतेत्यत आह । उपदेष्टा स्थानकरणपाटववानित्यर्थः । ता॰ टी॰ । शब्दादुत्पन्नज्ञानस्य पुरुषस्य प्रवृत्तौ सत्यासत्योपलम्भे सत्यर्थसत्यत्वनिश्चयेन बोधेऽपि तु राप्तस्यानिश्चयस्तस्मिन् सति प्रतीतप्रामाण्याप्तपुरुषवचनजनितबुद्धेः प्रामाण्यप्रत्ययेन प्रवृत्तिरित्यन्योन्याश्रयो न प्रसङ्गः वाक्यस्य वाक्यार्थज्ञानजननमात्रे सामर्थ्यात् । प्रमाणपदस्य प्रमात्रोऽपि विरोधादिति दिक् ।

यस्येह दृश्यते ऽर्थः स दृष्टार्थो यस्यामुत्र प्रतीयते सो ऽदृष्टार्थः एवमृषिलौकिकवाक्यानां विभाग इति*। किमर्थं पुनरिदमुच्यते। स न मन्येत दृष्टार्थ एवाप्तोपदेशः प्रमाणमर्थस्यावधारणादिति। अदृष्टार्थो ऽपि प्रमाणमर्थस्यानुमानादिति। इति प्रमाणभाष्यम्॥

किं पुनरनेन प्रमाणेना†र्थजातं प्रमातव्यमिति तदुच्यते।

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु‡ प्रमेयम्॥ ९॥**

तत्रात्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता§ सर्वज्ञः सर्वानुभावी। तस्य भोगायतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोक्तव्या इन्द्रियार्थाः। भोगो बुद्धिः। सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषयमन्तःकरणं मनः। शरीरेन्द्रियार्थबुद्धिसुखवेदनानां निर्वृत्तिकारणं प्रवृत्तिः दोषाश्च। नास्येदं शरीरमपूर्वमनुत्तरं च‖। पूर्वशरीराणामादिर्नास्ति उत्तरेषामपवर्गो¶न्त इति प्रेत्यभावः। ससाधनसुखदुःखोपभोगः फलम्। दुःखमिति नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानं किं तर्हि जन्मन एवेदं ससुखसाधनस्य दुःखानुषङ्गाद् दुःखेनाविप्रयोगाद्विविधबाधनायोगाद्दुःखमिति समाधिभावनमुपदि-

* यद्वा प्रत्यक्षीकृतस्यार्थस्य प्रतिपादकस्तेनानुमितस्य वा ऽर्थस्य प्रतिपादक इति द्विविध एवेत्यर्थः।

† जात्यभिप्रायमेकवचनं प्रकृते प्रमेये यथायथं प्रमाणानामुपयोगात्। ता टी।

‡ सूत्रे तुशब्दो यथार्थक आत्मादय एव प्रमेया आत्मादय प्रमेया एवेति चार्थः। अत्र प्रमेयपदं न प्रमेयमात्रे वर्तते किं तु यत्तत्त्वतो ज्ञायमानमपवर्गसाधनं तस्मिन् तच्चात्मादीत्येवेति युक्तो ऽन्ययोगव्यवच्छेदः। अथ वा मुमुक्षुणा ऽऽत्मादि प्रमेयमेव बोध्यमेव तज्ज्ञानेनैव वैराग्योत्पादसम्भवादित्यर्थः।

§ सर्वस्य द्रष्टा सर्वस्य भोक्तेत्यत्रोभयत्रापि सुखस्य दुःखस्य चेत्यादिः। अप्राप्तस्य भावाभावेन सर्वज्ञस्यानुपपत्तेरत्र सर्वानुभावी। अनुभवः प्राप्तिः। आत्मन्यय विशेषो यदनेन रूपेण हेयः केवलेन चोपादेयः शरीरादीनि तु हेयान्येव। अपवर्ग उपादेय एवेति। इत्यर्थः। ता टी।

‖ अविद्यमानं पूर्वं शरीरं यस्य तदपूर्वं शरीरं तन्निषेधात् नास्येति। प्रमेयतत्त्वमवित्तुष आत्मनः। अविद्यमानमुत्तरं शरीरं यस्य तदनुत्तरं शरीरं तदपि निषिद्धं चेत्यनुकर्षणात्। ता टी।

¶ अपवर्गोन्त इति ४ पु पाठः।

श्यते समाहितो भावयति भावयन्निर्विद्यते निर्विण्णस्य वैराग्यं विरक्तस्यापवर्ग इति* जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणमपवर्ग इति। अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम् । तद्भेदेन चापरिसंख्येयम् । अस्य तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्संसार इत्यत एतदुपदिष्टं विशेषेणेति ।

तत्रात्मा तावत्प्रत्यक्षतो न गृह्यते† स किमाप्तोपदेशमात्रादेव प्रतिपद्यते इति । नेत्युच्यते । अनुमानाच्च प्रतिपत्तव्य‡ इति । कथम् ।

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥ १० ॥**

§यज्जातीयस्याऽर्थस्य सन्निकर्षात्सुखमात्मोपलब्धवान् तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति सेयमादा||तुमिच्छा एकस्यानेका¶र्थदर्शिनो दर्शनप्रतिसन्धानाद्भवन्ती लिङ्गमात्मनः । नियतविषये हि बुद्धिभेदमात्रे** न सम्भवति देहान्तरवदिति । एवमेकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद् दुःखहेतौ द्वेषः । यज्जातीयोऽस्यार्थः सुखहेतुः प्रसिद्धस्तज्जातीयमर्थं पश्यन्नादातुं प्रयतते सोऽयं प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारमन्तरेण न स्यात् । नियतविषये बुद्धिभावे न सम्भवति देहान्तरवदिति । एतेन दुःखहेतौ प्रयत्नो

---

* सूत्रे सुखानुक्तिर्न तदभावेनापि । तस्य तु यत्नेन भावनायामनभिरतिलक्षणवैराग्य सिद्ध्यतीति भाव ।

† अहमिति ज्ञानं गौराद्याकारशरीरावभासं न शक्यं घटादिवद्रागात्मनि प्रमापयितुमिति भावः । परदेहवर्त्यात्माभिप्रायं वा । ता॰ टी ।

‡ अनुमानेनावधारितस्यागमेन प्रतीतौ संवादलाभेनागमे ऽप्रामाण्यशङ्का निवर्तत इति भाव ।

§ यज्जातीयस्येति व्याप्तिस्मृतिकथनं तज्जातीयं पश्यन्निति पक्षधर्मोपनयः । तस्मादयं सुखहेतुरित्यनुमायादातुमिच्छति । सेयमिच्छेतीयं व्याप्तिग्रहणतत्स्मरणपक्षधर्मताग्रहणानुमानेच्छानामेककर्तृकत्वं सूचयति । भेदे प्रतिसन्धानाभावेन तदनुपपत्तेः । यश्चासावेको ऽनुभविता च स्मर्ता चानुमाता चेषिता स चात्मा । न च शरीरमेवं भवितुमर्हति । तस्य बाल्यकौमारयौवनवार्धकभेदेनान्यत्वात् । नेन्द्रियमिन्द्रियान्तरगृहीते इन्द्रियान्तरेण प्रतिसन्धानप्रसङ्गात् । नापि मनः । तस्य करणत्वेनैवानुमानात् । ता टी ।

|| सेयमुपादातुमिच्छा इति प पाठः ।

¶ अनेकदर्शिन इति प पाठः ।

** मात्रग्रहणेन च सन्तान सन्तानिव्यतिरिक्तमपाकरोति । तदभ्युपगमे वा स एवात्मेति सिद्धं नः समीहितमिति । ता टी॰ । भेदमात्रेण सम्भवति इति । पु॰ पाठ ।

व्याख्यातः । सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते सुखदुःखे वेदयते पूर्वोक्त एव हेतुः । बुभुत्समानः खल्वयं विमृशति किं स्विदिति विमृशंश्च जानीते इदमिति । तदिदं ज्ञानं बुभुत्साविमर्शाभ्यामभिन्नकर्तृकं गृह्यमाणमात्मलिङ्गं पूर्वोक्त एव हेतुरिति । तत्र देहान्तरवदिति विभज्यते । यथा ऽनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसन्धीयन्ते तथैकदेहविषया अपि न प्रतिसन्धीयेरन् अविशेषात् । सो ऽयमेकसत्त्वस्य समाचारः स्वयं दृष्टस्य स्मरणं नान्यदृष्टस्य नादृष्टस्येति* । एवं खलु नानासत्त्वानां समाचारो ऽन्यदृष्टमन्यो न स्मरतीति । तदेतदुभयमशक्यमनात्मवादिना व्यवस्थापयितुमिति एवमुपपन्नमस्त्यात्मेति† ।

तस्य भोगाधिष्ठानम्‡ ।

## चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥

कथं चेष्टाश्रयः । ईप्सितं जिहासितं वा ऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा सा यत्र वर्तते तच्छरीरम् । कथमिन्द्रियाश्रयः । यस्यानुग्रहेणानुगृहीतानि उपघाते चोपहतानि स्वविषयेषु साध्वसाधुषु वर्तन्ते स एषामाश्रयः तच्छरीरम्§ । कथमर्थाश्रयः । यस्मि-

---

* नादृष्टस्येति ५ । ४ । ३ पु नास्ति ।

† अथ वा ऽन्यथैनान्यः सूत्रार्थो ऽभिधीयतइति । रूपरसस्पर्शप्रत्ययाः एकानेकनिमित्तकाः स्मृत्या सह मयेति प्रतिसन्धानात् कृतसङ्केतानां दृष्टानामेकस्मिन् नर्तकीभ्रूक्षेपे युगपदनेकप्रत्ययवत् । यथा नानाकर्तृकाणां कृतसङ्केतानां नानाभूताः प्रत्यया निमित्तस्य भ्रूक्षेपस्यैकत्वात् प्रतीयन्ते तथेहापि नानाविषया निमित्तस्यैकत्वात् प्रतिसन्धास्यन्ते यन्निमित्तं स आत्मेति । अथ वा गुणा इच्छादयः गुणाः परतन्त्रा भवन्तीति न्यायः । गुणत्वं पारिशेष्यात् । न सामान्यविशेषसमवाया अनित्यत्वात् । न द्रव्यं कर्म वा व्यापकद्रव्यसमवायात् शब्दवदित्यादिसामान्यतोदृष्टमित्येतस्मिन्ननुमाने द्रष्टव्यम् । एतेनानित्यत्वात् पारतन्त्र्यमिच्छादीनां कार्यत्वाच्च रूपादिवदित्युक्तम् । यावद्द्रव्यभावित्वेन शरीरगुणत्वप्रतिषेधः तत्प्रतिषेधाच्चात्मगुणत्वमिति परिशेषात् सिद्ध आत्मेति । न्या वा ।

‡ आत्मनो दुःखनिदानानामिन्द्रियादीनां सर्वेषां साक्षात्पारम्पर्येण वा शरीरमाश्रित्य तन्निदानत्वमिति तदेवास्य दुःखमूलकारणमित्यनन्तरं शरीरं लक्षयितुं सूत्रं चेष्टेत्यादि । ता टी ।

§ कार्यभूतानां रूपादीनां स्वावयवाश्रितत्वाच्छेषमनर्थाश्च नित्यत्वेनानाश्रितत्वादिन्द्रियाश्रयस्य आत्मनः कथमित्याशङ्क्य शरीरानुविधानादिन्द्रियाश्रयत्वं शरीरानुग्रहेणानुग्रहात्

न्नायतने* इन्द्रियार्थसन्निकर्षादुत्पन्नयोः सुखदुःखयोः प्रवर्त्तते स एषामाश्रयः प्रतिसंवेदनं तच्छरीरमिति ।

भोगसाधनानि पुनः ।

## घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः† ॥ १२ ॥

जिघ्रत्यनेन घ्राणं गन्धं गृह्णातीति । रसयत्यनेनेति रसनं रसं गृह्णातीति । चष्टे ऽनेनेति चक्षुः रूपं पश्यतीति । त्वक्स्थानमिन्द्रियं त्वक् तदुपचारः स्थानादिति । शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति । एवं समाख्यानिर्वचनसामर्थ्याद्बोध्यं स्वविषयग्रहणलक्षणानीन्द्रियाणीति‡ । भूतेभ्य इति प्रकृतीना§मेषां सतां विषयनियमो नैकप्रकृतीनां सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवतीति । कानि पुनरिन्द्रियकारणानि ।

## पृथिव्यापस्तेजो वायुराकाशमिति भूतानि‖ ॥ १३ ॥

संज्ञाशब्दैः पृथगुपदेशो भूतानां विभक्तानां सुवचं कार्यं भविष्यतीति ।

इमे तु खलु ।

---

इन्द्रियाणि तदुपघाते चोपहन्यन्त इति शरीराश्रितानीत्युच्यन्त इति वार्त्तिकम् । एवमेवार्थाश्रयत्वमप्युपपादनीयम् । गन्धाद्युपलम्भनिमित्तकसुखादेः शरीरे सति भावादसति चाभावात् । अत्र चेष्टायाः हिताहितप्राप्तिपरिहारफलकत्वं मूर्त्तान्तराप्रयोज्यत्वं च विशेषणं देयं तेन वृक्षे वाक्यन्त्रे च नातिव्याप्तिरिति । ता॰ टी॰ । अतएव चेष्टादीनां व्यस्तानामेव लक्षणत्वमुपपद्यते । चेष्टायां विशेषणमविवेच्य केवलाया अतिव्यापकत्वादिन्द्रियाश्रयत्वस्यैकस्मिन्नेव लक्षणे प्रवेशने ऽपि वृक्षादाविन्द्रियसंयोगित्वेनातिव्याप्तितादवस्थ्यादर्थाश्रयत्वनिवेशेऽपि कदाचित्कथयताया वृक्षादौ प्रसिद्धत्वेनातिप्रसङ्गवारणाय पूर्वोक्तरीत्या चेष्टाश्रयत्वादेः परिष्कारे व्यस्तानामेव लक्षणत्वोपपत्तेः ।

* यस्मिन्नायतनेन्द्रियार्थसन्निकर्षादुत्पन्नयोरिति ३ पु॰ पाठः ।

† अत्र च कर्णशष्कुलीसंयोगोपाधिना श्रोत्रस्य नभसः कथं सिद्धेदं विवक्षित्वा भूतेभ्य इति पञ्चम्यर्थो व्याख्यातव्यः । ता॰ टी॰ । एतानि च प्रायःटिप्पटेषु येनार्थान्वयेन पञ्च लक्षणसूत्राणि एकसूत्रत्वेन पठितानि । भूतेभ्य इति च गन्धादिग्रहणनियमप्रदर्शनाय । घ्राणेन्द्रियं पार्थिवं रूपादिषु पञ्चसु मध्ये गन्धस्यैवाभिव्यञ्जकत्वादित्यादिरूपानुमानाकारः । तेन च साङ्ख्याभिमतमाहङ्कारिकत्वं निराकृतं भवति । इन्द्रियप्रकृतित्वं भूतलक्षणं वेदितव्यमिति । ता॰ टी॰ ।

‡ स्वविषयलक्षणानीन्द्रियाणीति इति ३ पु॰ पाठः ।

§ नानाप्रकृतीनामिति १ । ४ । ५ पु पाठः ।

‖ कानि पुनरिन्द्रियकारणानि इति प्रश्नस्योत्तरत्वं पृथिव्यापस्तेजोवायुराकाशमिति भूतानीति भाष्यमेव न सूत्रम् । प्रमाणादिष्वनुक्रान्तेषु प्रमाणलक्षणविभागसद्विशेषलक्षणसूत्राणि प्रणीय प्रमेयानात्मशरीरेन्द्रियार्थादीनभिधाय तत्रोद्दिष्टानामात्मशरीरेन्द्रियाणां लक्षणेऽभिहिते ऽर्थस्वरूपज्ञापनस्यैव क्रमप्राप्तत्वाद् वार्त्तिके तात्पर्यटीकायां वा पूर्वसूत्रेषु सूत्रमिदमित्यभिधानवदस्य सूत्रत्वेनानभिधानात् गन्धरसेत्यादेरेव वार्त्तिके सूत्रत्वेनोक्तेः । मुद्रितपुस्तकानुसारेण विश्वनाथपञ्चाननकृतगौतमसूत्रवृत्त्यनुसारेण च सूत्रत्वेन मुद्रितमिति बोध्यम् । सूत्रमेवेत्यन्ये ।

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणा*स्तदर्थाः ॥ १४ ॥**

पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रममर्था विषया इति ।

अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः चेतनस्याकर्तुरुपलब्धिरिति युक्तिविरुद्धमर्थं प्रत्याचक्षाण इवेदमाह ।

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्† ॥ १५ ॥**

नाचेतनस्य करणस्य बुद्धेर्ज्ञानं भवितुमर्हति । तद्धि चेतनं स्यात् एकश्चायं चेतनो देहेन्द्रियसंघातव्यतिरिक्त इति । प्रमेयलक्षणार्थस्य वाक्यस्यान्यार्थप्रकाशनमुपपत्तिसामर्थ्यादिति‡ ।

स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि । तेषु सत्स्वियमपि ।

---

* अत्र पृथिव्यादयश्च गुणाश्चेति द्वन्द्वसमासः । तेन पृथिव्यादीनामपि चक्षुरादीन्द्रियविषयत्वकथं तदर्थत्वं सङ्गृहीतं भवति । षष्ठीतत्पुरुषाश्रयणे तु न सङ्गृह्येत । विशेषणार्थत्वे च गन्धादीनामन्यगुणत्वाभावेन व्यावर्त्त्यासम्भवात् । पृथिव्यादिग्रहणेन पृथिव्यप्तेजांसि बाह्यकरणग्राह्याण्यपदिश्यन्ते । गुणग्रहणेन च सर्वे आश्रिता गुणा इति संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रववेगकर्मसामान्यविशेषा अनाश्रितश्च समवायस्तद्धर्मत्वाद् गुण इति । गन्धरसरूपस्पर्शशब्दानां पृथगभिधानमिन्द्रियविशेषनियमज्ञापनार्थम् । इन्द्रियाणि गन्धरसरूपस्पर्शशब्देषु तत्सामान्येषु नियतान्यन्यत्रानियतानि । तत्र पृथिव्यप्तेजांसि द्वीन्द्रियग्राह्याणि शेषश्च गुणराशिः सत्ता गुणत्वे च सर्वेन्द्रियग्राह्ये समवायो ऽभावश्च । न्या० वा० । अत्र विशेषो रेखोपरेखादिर्न त्वन्त्यस्तस्यातीन्द्रियत्वात् । ता० टी० ।

† पर्यायशब्दाभिधानाद् बुद्धिवृत्तेर्निराकरणम् । यदाहुर्बुद्धेर्ज्ञानं वृत्तिरात्मन उपलब्धिर्वृत्तिरिति । तन्निराकरणार्थं समानार्था एते शब्दा इति बुद्धिवृत्तिः पृथङ् निराकृता भवति । का पुनरत्रोपपत्तिर्भवति । आत्मोपलभते बुद्धिर्जानीते इति ब्रुवाणस्तयोश्चैतन्यं प्रतिपद्यते । उभयचैतन्ये च प्रत्ययव्यवस्थाऽनुमानं स्यात् । यदि बुद्धिश्चेतना आत्मा च चेतनो न बुद्ध्यवगतानर्थानात्मोपलभेत । चेतनोपलब्धानां चेतनान्तरस्याप्रतिपत्ते । अस्ति च प्रतिपत्तिस्तस्मादेकश्चेतन इति । न्या० वा० । चेतनमात्रोपलभ्यानामित्यर्थः, न तावद् बुद्धेरात्मच्छायापत्तिरिन्दाविव मार्तण्डतेजःसङ्क्रान्तिः पारमार्थिकी । चितेरपरिणामितया सङ्क्रमणायोगात् । तस्माद् भ्रान्तिः सा च न बुद्धेस्तस्या अचेतनत्वान्नाप्यात्मनस्तस्यापरिणामित्वात् तथात्वे वा परिणामापत्तेः । तस्माद् बुद्धेः स्वाभाविकं चैतन्यमास्थेयं तथा चोभयचैतन्ये दूषणमुक्तम् । ता० टी० ।

‡ प्रमेयलक्षणपठितस्यापि बुद्धेर्विभक्त्यर्थप्रकाशनोऽपि विवक्षितस्यानुपपत्त्या सिद्धमित्यर्थः ।

## युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्* ॥ १६ ॥

अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति । युगपच्च खलु घ्राणादीनां गन्धादीनां च सन्निकर्षेषु सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते († तेनानुमीयते अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरम् अव्यापि यस्यासन्निधेर्नोत्पद्यते ज्ञानं सन्निधेश्चोत्पद्यत इति) । मनःसंयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति ।

क्रमप्राप्ता तु ।

## प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥

मनोऽत्र बुद्धिरित्यभिप्रेतं बुध्यतेऽनेनेति बुद्धिः सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः‡ । तदेतत्कृतभाष्यं द्वितीयसूत्र इति ।

## प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥

प्रवर्त्तना प्रवृत्तिहेतुत्वं ज्ञातारं हि रागादयः प्रवर्त्तयन्ति पुण्ये पापे

---

* युगपज्ज्ञानानुत्पत्तिरित्यत्र मनोऽधर्मत्वात् कथं मनसोऽणुमात्रिकेत्याशङ्क्य न्यायवार्त्तिककारो वार्त्तिके दर्शितः । रूपादिज्ञानानि चक्षुरादिव्यतिरिक्ताधिष्ठायकान्तरापेक्षाणि । अयुगपदुत्पत्तेः । यथा ऽनेकशिल्पपर्यवदातस्यानेक वास्यादि सन्निधानेनोपस्थित हस्ताधिष्ठायकापेक्ष न युगपदनेकवास्यादिक्रिया निर्वर्तयति तथा चक्षुरादि न युगपदनेकं ज्ञानं करोति तस्मात्तदप्यधिष्ठायकान्तरमपेक्षत इति । इन्द्रियाणि वा पक्षीकृत्य वक्तव्यम् । चक्षुरादीन्द्रियमात्मप्रवृत्तावधिष्ठायकान्तरापेक्षम् अयुगपत्प्रवृत्ते । वास्यादिवद्विति । मन्वेवमकैकेन्द्रियग्राह्याणां नीलपीतादीनां कुतो न युगपज्ज्ञानद्वयं मनःसन्निधानस्य तत्र सत्त्वात् । न च सम्बन्धिभेदादेकदा विषयेन्द्रियसन्निकर्षद्वयकारणाभावेन निर्वाह । चक्षुः संयुक्तगवादिगतगुणक्रिययोरेकदा ज्ञानद्वयापत्तेर्वारयितुमशक्यत्वात् । क्रमप्रत्ययज्ञानेच्छाया सहकारित्वमावश्यकमभावाच्च ज्ञानद्वयं तत्सत्त्वे तु समूहालम्बनात्मकस्यैकस्यैव ज्ञानस्योत्पत्तेर्नैवमुपपत्तिरिति चेत्र । मनसोऽसिद्धिप्रसङ्गात् । बुभुत्साभावेनैव भिन्नेन्द्रियग्राह्याणामपि युगपज्ज्ञानद्वयापत्तेर्वारयितुं शक्यत्वादिति चेन्नैवम् । करणत्वेनैव हेतुना युगपदनेकक्रियाकारित्वाभावसिद्धे । वास्यादौ युगपदनेकक्रियाकारित्वाभावस्य दृष्टत्वादिति । आत्मनोऽधिष्ठातृत्वेऽपि तस्य विभुतया सर्वेन्द्रियसम्बन्धस्य सर्वदा सत्त्वेन मनःस्वीकारं विना ऽनुपपत्तिपरिहारासम्भवादिति वार्त्तिकम् ।

† ( ) एतच्चिह्नमध्यस्थं ४ पु नास्ति ।

‡ कायेन परित्राणं परिचरणं दानमिति । वाचा सत्यं हितं प्रियं स्वाध्यायश्च । मनसा दया ऽस्पृहा श्रद्धा चेति । विपर्ययेण पापं दशविधम् । न्या वा । प्रवृत्तिजनितयोर्धर्माधर्मयोर्जन्महेतुत्वात्प्रवृत्तेर्जन्महेतुत्वमुपचर्यत इति भावः ।

वा यत्र मिथ्याज्ञानं* तत्र रागद्वेषाविति । प्रत्यात्मवेदनीया† ह्यीमे दोषाः कस्माल्लक्षणतो निर्दिश्यन्तइति । कर्मलक्षणाः खलु रक्तद्विष्टमूढा रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते‡ तथा द्विष्टस्तथा मूढ इति रागद्वेषमोहा इत्युच्यमाने बहुनोक्तं भवतीति ।

## पुनरुत्पत्तिः प्रेत्यभावः§ ॥ १९ ॥

उत्पन्नस्य क्व चित्सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः उत्पन्नस्य सम्बद्धस्य । सम्बन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः । पुनरुत्पत्तिः ||पुनर्देहादिभिः सम्बन्धः । पुनरित्यभ्यासाभिधानं यत्र क्व चित्प्राणभृन्निकाये वर्तमानः पूर्वोपात्तान्देहादीन् जहाति तत्प्रैति । यत्तत्रान्यत्र वा देहादीनन्यानुपादत्ते तद्भवति । प्रेत्यभावो मृत्वा पुनर्जन्म । सो ऽयं जन्ममरणप्रबन्धाभ्यासो ऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति ।

## प्रवृत्तिदोषजनितो ऽर्थः फलम्¶ ॥ २० ॥

सुखदुःखसंवेदनं फलम् । सुखविपाकं कर्म दुःखविपाकं च । तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम् । तथा हि प्रवृत्तिदोषजनितो ऽर्थः फलमेतत्सर्वं भवति तदेतत्फलमुपात्तमुपात्तं हेय

---

* तत्त्व मिथ्याज्ञानमिति ३ पु पाठ ।

† स्वशरीरावच्छिन्नात्मनि प्रत्यक्षा परशरीरे तु प्रवृत्त्या नुमेया । प्रवर्तना च मोहेकार्थसमवायः । तावद्धाय रागादिवशः स्पन्दते यावदस्य मोहो वर्ततइति । ता टी ।

‡ भजतइति ५ । ४ । ३ पु पाठ ।

§ पुनर्ग्रहणं संसारानादित्वज्ञापनार्थम् । न्या वा । दुःखादीनां मिथ्याज्ञानपर्यन्तानामविच्छेदेन कार्यकारणभावरूपः संसारो ह्यनादिः । न हि शरीरसम्बन्धमन्तरेण दुःखं सम्भवति । न च शरीरसम्बन्धो धर्माधर्मौ विना । न च धर्माधर्मौ रागद्वेषावृते । न च रागद्वेषावज्ञानं विहाय । न चाज्ञानं शरीरं परित्यज्यैति तत्रैव तदुपपादनं च । स चायं संसारः क्रियामधिकृत्य मनस उपभोगमधिकृत्यात्मनः । संसारकारणीभूताज्ञाने मनसः साधारणकारणत्वादात्मनश्च तज्जनितदुःखरूपफलोपभोक्तृत्वात् ।

|| पुनर्नेति २ पु पा ।

¶ प्रवृत्तिजनित इति वक्तव्ये दोषग्रहणं न केवलं प्रवृत्तिं प्रति दोषाणां हेतुभावो ऽपि तु प्रवृत्तिकार्यं सुखदुःखे अपि प्रतीतिदर्शनार्थम् । दोषसलिलावसिक्तायां खल्वात्मभूमौ धर्माधर्मबीजे सुखदुःखे जनयतो नान्यथा न ह्यस्ति सम्भवो न तत्र तुष्यति न च तत्र द्वेष्टि तच्च तस्य सुखं दुःखमिति । अर्थग्रहणं गौणमुख्यफलावरोधार्थम् । ता टी ।

त्यक्तं त्यक्तमुपादेयमिति ( *नास्य हानोपादानयोर्निष्ठा† पर्य्यवसानं वास्ति स खल्वयं‡ फलस्य हानोपादानस्रोतसोह्यते लोक इति । प्रत्येतदेव ) ।

बाधनालक्षणं दुःखम्§ ॥ २१ ॥

बाधना पीडा ताप इति तया ऽनुविद्धमनुषक्तमविनिर्भागेन वर्त्तमानं दुःखयोगाद् दुःखमिति । सो ऽयं सर्वं दुःखेनानुविद्धं‖मिति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते निर्विण्णो विरज्यते विरक्तो विमुच्यते ।

यत्र तु निष्ठा यत्र तु पर्य्यवसानं सो ऽयम् ।

तदत्यन्तविमोक्षो ऽपवर्गः ॥ २२ ॥

तेन दुःखेन जन्मना¶ ऽत्यन्त**विमुक्तिरपवर्गः कथमुपात्तस्य जन्मनो हानम् अन्यस्य चानुपादानम् । एतामवस्थामपर्यन्ता††मपवर्गं वेदयन्ते ऽपवर्गविदः । तदभयमजरममृत्युपदं‡‡ ब्रह्म क्षेमप्राप्तिरिति । नित्यं सुख-

---

* ( ) एतच्चिह्नमध्यस्थः पाठः ४ । ५ पुस्तकयोर्नास्ति ।

† निष्ठा समाप्तिः सा च प्रलये ऽप्यस्तीत्यत उक्तं पर्य्यवसानमिति । पर्य्यवसानमात्रमस्ति न पुनः पतितः पुनरपि सर्गोपादानयोर्भावादित्यर्थः । ता टी ।

‡ न खल्वयमिति ३ । पु पाठः ।

§ अत्र इतिशब्दसहितः क्वचित् सूत्रपाठः । वार्तिके तात्पर्यटीकायां चेतिशब्दरहित एव दृश्यते । इतिशब्दस्याप्यनुपयोगाच्च । मुद्रितपुस्तके तु भ्रमात्सूत्रे निवेशः । शरीरादेर्बाधनानुषङ्गेण गौणं दुःखस्य प्रतिकूलवेदनीये भावे तु मुख्यम् । शरीरे तु तन्निमित्तत्वादिन्द्रियविषयबुद्धीनां तत्साधनत्वात् सुखे च दुःखाविनाभावात् । न च सुखं दुःखाभावमात्रमिति युक्तम् । प्रत्यक्षसिद्धस्य तस्यानपह्नवनीयत्वात् । प्रवृत्तिद्वैविध्यदर्शनाच्च । कश्चित्सुखार्थे प्रयतते कश्चिद् दुःखपरिहारार्थमेवेति । दुःखे ऽपि सुखाभावमात्रत्वस्यापि वक्तुं शक्यत्वेन विनिगमनाविरहादुभयसिद्धेश्चेति बोध्यम् ।

‖ अत्र कलिकाता मुद्रितपुस्तके विविक्तं दुःखमितीति पाठः ।

¶ तदित्यनन्तरं गौणमुख्यभेदभिन्नं दुःखं परामृशति । मुख्यमेव दुःखमिति भ्रमो मा भूदित्यत उक्तं जन्मनेति । अनेन जायमाना दुःखशब्देन सर्वे शरीरादय उच्यन्ते इत्युक्तं भवति । ता टी ।

** अत्यन्तपदं प्रलयावस्थानिवृत्त्यर्थम् ।

†† अवधिशून्याम् ।

‡‡ अभयमिति पुनः संसारभयाभावमाह । अभयं वै ब्रह्मेत्यसकृदभयश्रुतेः । ये तु ब्रह्मैव नामरूपप्रपञ्चात्मना परिणमतइत्याहुस्तान् प्रत्याह । अजरमिति । सर्वात्मना परिणामे सर्वात्मना ब्रह्मणो ऽन्यथात्वाद्विनाशप्रसङ्गः । एकदेशपरिणामे तु सावयवत्वेन घटादिवदनित्यत्वप्रसङ्गः । वैनाशिकाः प्राहुः प्रदीपस्येव निर्वाणं मोक्षस्तस्य चेतस इति । तान्प्रत्याह । अमृत्युपदमिति । ता टी ।

मात्मनो महत्त्ववन्मोक्षे व्यज्यते तेनाभिव्यक्तेनात्यन्तं विमुक्तः* सुखी भवतीति केचिन्मन्यन्ते । तेषां प्रमाणाभावादनुपपत्तिः । न प्रत्यक्षं नानुमानं नागमो वा विद्यते नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यतइति ।

**नित्यस्याभिव्यक्तिः संवेदनं तस्य हेतुवचनम् ।** नित्यस्याभिव्यक्तिः संवेदनम् ज्ञानमिति तस्य हेतुर्वाच्यो यतस्तदुत्पद्यतइति ।

**सुखवन्नित्यमिति चेत् संसारस्थस्य मुक्तेनाविशेषः ।** यथा मुक्तः सुखेन तत्संवेदनेन च सन्नित्येनोपपन्न†स्तथा संसारस्थोऽपि प्रसज्यतइति उभयस्य नित्यत्वात् ।

**अभ्यनुज्ञाने च धर्माधर्मफलेन साहचर्यं यौगपद्यं गृह्येत ।** यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं वा संवेद्यते पर्यायेण तस्य च नित्य‡स्वसंवेदनस्य च सहभावो यौगपद्यं गृह्येत न सुखाभावो नानभिव्यक्तिरस्ति§ उभयस्य नित्यत्वात्|| ।

**अनित्यत्वे¶ हेतुवचनम् ।** अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यं यत उत्पद्यते स हेतुर्वाच्यः ।

**आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम् ।** आत्ममनःसंयोगो हेतुरिति चेद् एवमपि तस्य सहकारि निमित्तान्तरं वचनीयमिति ।

**धर्मस्य कारणवचनम् ।** यदि धर्मो निमित्तान्तरं तस्य हेतुर्वाच्यो यत उत्पद्यतइति** ।

---

* विमुक्त इति ४ । २ । ३ पाठः ।

† सन्नित्येनोपपन्न इति ३ । पाठः ।

‡ नित्यसंवेदनस्येति ५ । ४ । २ । ३ पाठः ।

§ नाभिव्यक्तिरस्तीति ३ । पाठः ।

|| सुखस्य तद्विषयकज्ञानस्य च नित्यत्वे संसारदशायामपि मोक्षादविशेषप्रसङ्गः । दृष्टा यतो तु धर्माधर्माभ्यां जनितयोः सुखदुःखयोरुपलब्धिकालेऽपि नित्यसुखस्य तज्ज्ञानस्य सर्वदा सत्त्वेन यौगपद्यप्रसङ्गः ।

¶ अनित्ये हेतुवचनमिति ५ । ४ । २ । ३ पाठः ।

** संसारावस्थायां तावदयमात्ममनःसंयोगो धर्मं निमित्तमपेक्षमाणः सुखज्ञानमकार्षीत् । यदि तु मुक्तावस्थायां तदनपेक्ष एव सुखज्ञानं करोति हन्त रूपादिज्ञानेष्विन्द्रियाण्यपि नापेक्षेतेति भावः । ता० टी० ।

**योगसमाधिजस्य कार्यावसायविरोधात्प्रलये* संवेदननिवृत्तिः†** । यदि योगसमाधिजो धर्मो हेतुस्तस्य कार्यावसायविरोधात्प्रलये संवेदनमत्यन्तं निवर्त्तयति‡ ।

**असंवेदने चाविद्यमानेनाविशेषः** । यदि धर्मक्षयात्संवेदनोपरमो नित्यं सुखं न संवेद्यतइति । किं विद्यमानं न संवेद्यते ऽथाविद्यमानमिति नानुमानं विशिष्टं ऽस्तीति ।

**अप्रक्षयश्च धर्मस्य निरनुमानमुत्पत्तिधर्मकत्वात्** । योगसमाधिजो धर्मो न क्षीयतइति नास्त्यनुमानमुत्पत्तिधर्मकमनित्यमिति । विपर्ययस्य त्वनुमानं यस्य तु संवेदनोपरमो नास्ति तेन संवेदनहेतुर्नित्य इत्यनुमेयम् । नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम् । यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च§ संवेदनस्य तूपरमो नास्ति कारणस्य नित्यत्वात् तथा संसारस्थस्यापीति । एवं च सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्यं गृह्येतेति ।

**शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेद् न शरीरादीनामुपभोगार्थत्वाद् विपर्ययस्य चाननुमानात्** । स्यान्मतं संसारावस्थस्य शरीरादिसम्बन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकस्तेनाविशेषो नास्तीति । एतच्चायुक्तम् । शरीरादय उपभोगार्थास्ते भोगप्रतिबन्धं करिष्यन्तीत्यनुपपन्नम्|| । न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति ।

**इष्टाऽधिगमार्था¶ प्रवृत्तिरिति चेद् न अनिष्टोपरमार्थत्वात्** । इदमनुमानम् इष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणा नोभय-

---

* प्रलये इति ५।४।२।३ पाठ ।

† योगसमाधिजस्य धर्मस्य कार्यत्वेन समाप्तौ नाशे सति तज्जनिताया संवेदनाया कारणाभावे कार्यस्थित्यङ्गीकारे ऽनुभवविरोधाद् निवृत्तिरभाव प्राप्नोति । तथा च मोक्षदशाया सर्वदा सुखानुभवाभ्युपगमो न सिध्यतीति भाव ।

‡ निवर्त्तते इति ५।४।२।१ पाठ ।

§ अत्र हेतुपद कारणस्य नित्यत्वादित्यत्र कारणपद च प्रयोजकपरम् । नित्ययोः कार्यकारणभावासम्भवात् । प्रयोज्यप्रयोजकभावस्य च धूमाभाववह्न्यभावयोरिवाभ्युपगमसम्भवात् ।

|| उपभोगार्थमेवारब्धाना शरीरादीनामुपभोगप्रतिबन्धकत्वमुपपत्तिविरुद्धमित्यर्थः । सुखाद्युपभोग प्रति शरीरादेः प्रयोजकत्वस्य लोके दृष्टत्वेन दृष्टानुसारित्वाच्च कल्पनाया मुक्तावपि शरीराद्यङ्गीकारे मोक्षस्य त्वनुपपत्तिरनङ्गीकारे च सुखानुभवानुपपत्तिर्योगसमाधिजनितशरीरस्य नित्यत्वाभ्युपगमश्च यज्जन्य तदनित्यमित्यनुमानविरुद्ध इति भाव ।

¶ इष्टाधिगमार्थेति १ पाठ ।

मनर्थकमिति । एतच्चायुक्तम् अनिष्टोपरमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामिति । नेष्टमनिष्टेनाननुविद्धं सम्भवतीति इष्टमप्यनिष्टं सम्पद्यते अनिष्टहानाय घटमान इष्टमपि जहाति । विवेकहानस्याशक्यत्वादिति ।

**दृष्टातिक्रमश्च देहादिषु तुल्यः** । यथा दृष्टमनित्यं सुखं परित्यज्य नित्यसुखं कामयते एवं देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः.* साधीयश्चैवं मुक्तस्य चैकात्म्यं कल्पितं भवतीति ।

**उपपत्तिविरुद्धमिति चेत् समानम्** । देहादीनां नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति समानं सुखस्यापि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति ।

**आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमे ऽपि सत्यविरोधः†** । यद्यपि कश्चिदागमः स्यात् मुक्तस्यात्यन्तिकं सुखमिति । सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते दृष्टो हि दुःखादेरभावे‡ सुखप्रयोगो§ बहुलं लोकइति|| ।

**नित्यसुखरागस्य प्रहाणे मोक्षाधिगमाभावो रागस्य बन्धनसमाज्ञानात्** । यद्ययं मोक्षे नित्यं सुखमभिव्यज्यतइति नित्यसुखरागेण मोक्षाय घटमानो न मोक्षमधिगच्छेन्नाधिगन्तुमर्हतीति बन्धनसमाज्ञातो हि रागः न च बन्धने सत्यपि कश्चिन्मुक्त इति उपपद्यतइति¶ ।

**प्रहीण**** **नित्यसुखरागस्याप्रतिकूलत्वम्** । अथास्य नित्यसुखरागः†† प्रहीयते तस्मिन्प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवति‡‡ यद्येवं

---

* कल्पितव्या इति ५ । ४ । २ पाठः । † आगमेपि सत्यविरोध इति ३ । पु ।
‡ दुःखाभावे इति ५ । ४ । २ । ३ पाठः । § सुखशब्दप्रयोग इति ५ । ४ । २ । ३ पाठः ।
|| ज्वरादौ निवृत्ते सुखी संवृत्तो ऽहमिति प्रसिद्धो हि लोकानुभव इति भावः ।
¶ नित्यसुखे रागान्मुमुक्षूणां तत्र प्रवृत्तौ रागस्यानिवृत्त्या हेत्वभावेन मोक्षानुपपत्तिश्च स्यात् । अत्र मोक्षाय घटमान इत्यनन्तरं भवेदित्यध्याहृत्य वाक्यं समापनीयं न मोक्षमधिगच्छेदिति तत्र दूषणं तस्यैव विवरणमेवं इति बोध्यम् ।
** प्रहाणेति ४ । २ । ३ पाठः । †† अथास्यानित्यसुखरागः इति ३ पु ।
‡‡ यद्यपि द्वेषात् प्रवर्तते दुःखं हास्यामीति तथा ऽपि न मुच्येत द्वेषस्य बन्धनसमाज्ञानादिति रागद्वेषौ हि बन्धनमिति । नाप्रतिकूलत्वात् । अप्रतिकूलं दुःखहानं भवति न पुनरयं दुःखं द्वेष्टि अद्विषतश्च प्रवर्तमानो ऽप्रतिकूलं दुःखहानमधिगच्छति । न्या वा ।

मुक्तस्य नित्यं सुखं भवति अथापि न भवति नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्पत इति ।

स्थानवत * एव तर्हि संशयस्य लक्षणं वाच्यमिति तदुच्यते ।

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः† संशयः ॥ २३ ॥**

समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति । स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन्पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किं स्विदित्यन्यतरं नावधारयति तदनवधारणं ज्ञानं संशयः समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभ इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्तिका वर्तते तेन विशेषापेक्षो विमर्शः संशयः । अनेकधर्मोपपत्तेरिति समानजातीयमसमानजातीयं चानेकं तस्यानेकस्य धर्मोपपत्तेर्विशेषस्योभयथा दृष्टत्वात् समानजातीयेभ्यो ऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते गन्धवत्त्वात्‡ पृथि-

---

* प्रमेयानन्तरमुद्दिष्टस्य प्रमेयलक्षणानन्तरं स्थाने क्रमे लक्षणस्य वक्तव्यस्येत्यर्थः । ता॰ टी॰ क्रमप्राप्तस्येति यावत् ।

† अत्र च विमर्शः संशय इति संशयसामान्यलक्षणम् । तत्र संशय इति लक्ष्यनिर्देशो विमर्श इति लक्षणपदम् । एकस्मिन् धर्मिणि विरोधिनानार्थावमर्शो विमर्शः । समानेत्यादीनि तु त्रीणि विशेषलक्षणानि । तेषु विमर्शः संशय इत्यनुवर्तनीयम् । अत्र विशिष्टो ऽवमर्शो विमर्शः । विशिष्टसंशयो लक्ष्यपदम् । समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेरिति त्रीणि प्रत्येकं शेषैः पदैरुपेतानि लक्षणानीति । एतेन ये पञ्चविधं संशयमाचक्षते ते निराकृताः । ता॰ टी॰ । अयं भावः । समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इत्येकं लक्षणम् । अत्राव्यवस्थापदमारोपपादाने कृते ऽयमिति विशेषनिश्चये सत्यपि पुरुषगतसमानधर्मस्य महत्त्वादेरुपलब्धिरस्तीति संशयः स्यात् । अत उपलब्ध्यनुपलब्ध्यव्यवस्थातेरिति वक्तव्यम् । एकतरधर्मप्रकारकनिश्चयहेत्वभावे धर्मान्तराभावप्रकारकनिश्चयहेत्वभावे च सतीति तस्यार्थः । ततश्च वृक्षत्वप्रकारकनिश्चयहेतोः पुरुषत्वाभावप्रकारकनिश्चयहेतोश्चाभावो ऽपेक्षित । प्रकृते च स नास्तीति न संशयः । तावन्मात्रोक्तौ च अनुगतधर्मज्ञानाभावे ऽपि विशेषनिश्चयहेत्वभावमात्रेण संशयः स्यादतः समानपदम् । एवमपि नौकया गच्छतो वृक्षपरिच्छादयन्तं पदार्थमात्रं पश्यन् वृक्ष इति निश्चायकं न गज इति निश्चायकं च हेतुमनुपलभमानो ऽपि अनुपादित्सिते ऽजिहासिते चोदासीने वस्तुनि न संदिग्धे बुभुत्साविरहात् । बुभुत्समानस्तु संदिग्धे तत्र बुभुत्साभावे ऽपि संशयो मा भूदिति विशेषापेक्ष इति निवेशनीयम् । विशेषं बुभुत्समानस्येति तस्यार्थः । तदेवं पदचयं मिलितं लक्षणं भवति । एवमनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति लक्षणद्वये ऽपि उपलब्ध्यनुपलब्ध्यव्यवस्थात इति विशेषापेक्ष इति च पदद्वयं निवेशनीयं तत्सार्थक्यं च पूर्ववद् बोध्यम् ।

‡ गन्धवत्त्वादिति संशयस्य प्रत्युदाहरणम् । अस्ति चेत्याद्युदाहरणम् । शब्दे सत्तासम्बन्धेन सामान्यविशेषसमवायाभावेभ्यो भेदेन ज्ञाते विभागजत्वं द्रव्ये शब्दातिरिक्ते गुणे कर्मणि चादृष्टमुपलभमानं द्रव्यत्वादिविशेषनिश्चायकहेत्वभावेन संशायकं भवतीति भावः । ननु

व्यादिभ्यो विशिष्यते गुणकर्मभ्यश्च । अस्ति च शब्दे विभागजत्वं विशेषः । तस्मिन्द्रव्यं गुणः कर्म वेति संदेहः । विशेषस्योभयथा दृष्टत्वात् । किं द्रव्यस्य सतो गुणकर्मभ्यो विशेष आहो स्विद् गुणस्य सत इति अथ कर्मणः सत इति । विशेषापेक्षा अन्यतमस्य व्यवस्थापकं धर्मं नोपलभ इति बुद्धिरिति । विप्रतिपत्तेरिति व्याहतमेकार्थदर्शनं विप्रतिपत्तिः व्याघातो विरोधो ऽसहभाव इति । अस्त्यात्मेत्येकं दर्शनं नास्त्यात्मेत्यपरम् । न च सद्भावासद्भावौ सहैकत्र संभवतः । न चान्यतरसाधको हेतुरुपलभ्यते । तत्र तत्त्वानवधारणं संशय इति । उपलब्ध्यव्यवस्थातः खल्वपि* सच्चोदकमुपलभ्यते तडागादिषु मरीचिषु चाविद्यमानमुदकमिति अतः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यते ऽथासदिति संशयो भवति । अनुपलब्ध्यव्यवस्थातः सच्च नोपलभ्यते मूलकीलकोदकादि असच्चानुत्पन्नं निरुद्धं वा ततः (क्वचिदनुपलभ्यमाने संशयः किं सन्नोपलभ्यते उतासन्निति संशयो भवति । विशेषापेक्षा पूर्ववत् पूर्वः समानो ऽनेकश्च धर्मो ज्ञेयस्थः) उपलब्ध्यनुपलब्धी पुनर्ज्ञातृगते एतावता विशेषेण पुनर्वचनम् । समानधर्माधिगमात्समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति ।

स्थानवता लक्षणमिति समानम् ।

**यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥**

---

विभागे गुणे विभागजस्य दृष्टः शब्दे प्रतीयमानं गुणत्वं निश्चाययिष्यति । शब्दो गुणः विभागजत्वाद्विभागवदिति । नैवम् । विभागजविभागानङ्गीकारात् । विभागजविभागासमवायिकारणकत्वस्य शब्दमात्रवृत्तेः संशयहेतुत्वाच्च । अत्र च समानधर्मोपलब्धेः संशयकारणत्वे दूरादारोहपरिणाहवद्वस्तुदर्शनमुदाहरणम् । तत्र स्थाणुपुरुषयोरारोहपरिणाहौ सकलसाधारणौ गम्यमानौ संशयहेतू । अनेकधर्मोपलब्धेस्तु शब्दे विभागजत्वमुपलभ्यमानं संशयकारणमित्युदाहरणम् । तत्र हि विभागजत्वं द्रव्यादित्रये नास्त्येव शब्दादन्यत्र दृष्टम् । ततश्च समानत्वाभावाच्च पूर्वेण गतार्थता । अनेकधर्मोपपत्तेरित्यस्यासाधारणधर्मोपलब्धेरित्यर्थः । अनेकस्माद्विशेषको धर्मो ऽनेकधर्म इति तस्यार्थः । साधारणधर्मस्यासाधारणधर्मस्य वा गृह्यमाणव्यभिचारस्य ज्ञानं संशयकारणम् । गृह्यमाणाव्यभिचारस्य च तस्य ज्ञानं निर्णयहेतुः । समानधर्मोपपत्तेरित्यनेन विधीयमानव्यभिचार उपदिश्यते विभागजत्वादित्यनेन प्रतिषिध्यमानव्यभिचार इत्येतावता पृथगभिधानम् । एवं चेदं द्वयं ज्ञानं संशयकारणम् । विप्रतिपत्तिस्तु यत्नतः संशयकारणमिति पूर्वेणोक्तं । एतत्सर्वं वार्त्तिके व्यक्तम् ।

* उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च पृथक् संशयकारणत्वं वार्त्तिके दूषितम् । तत्र दोषः पूर्वोक्तमदत्त्वार्थं पर्यवसानं च पूर्वमुक्तम् ।

( ) एतच्चिह्नमध्यस्थः पाठः ४ । ३ । ३ नास्ति ।

यमर्थ*माप्तव्यं हातव्यं वा ऽध्यवसाय तदाप्तिहानोपायमनुतिष्ठति प्रयोजनं तद्वेदितव्यम् । प्रवृत्तिहेतुत्वादिममर्थमाप्स्यामि हास्यामि वेति व्यवसायो ऽर्थस्याधिकारः एवं व्यवसीयमानो ऽर्थो ऽधिक्रियतइति ।

**लौकिकपरीक्षकाणां† यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥**

लोकसाम्य‡मनतीता लौकिका नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः § तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि सो ऽर्थो दृष्टान्तः । दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति । अवयवेषु चोदाहरणाय कल्प्यतइति‖ ।

अथ सिद्धान्तः¶ इदमित्थंभूतं चेत्यभ्यनुज्ञायमानमर्थजातं सिद्धं सिद्धस्य संस्थितिः** सिद्धान्तः संस्थितिरित्थंभावव्यवस्था धर्मनियमः । स खल्वयम् ।

**तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥**

---

* अत्रार्थशब्दो गौणमुख्यफलावरोधार्थः । तत्र मुख्यं सुखदुःखप्राप्तिपरिहारौ । गौणं तु तत्साधनम् । ता॰ टी॰ ।

† लौकिकानां परीक्षकाणां चेति पृथक्कोटी । तेनालौकिकस्याकाशादेरपि दृष्टान्तत्वसिद्धिरिति भाव्यम् ।

‡ लोकसामान्यमिति ५ । ४ । २ ३ पाठः । § बुद्ध्यतिशयमप्राप्तस्यादिति ३ पु ।

‖ सो ऽयं दृष्टान्तः सारूप्यव्युत्पत्त्यर्थो वा स्यादसिद्धसाधनार्थो वा । यदि तावत् सारूप्यव्युत्पत्त्यर्थस्तदा नोपमानाद्भिद्यते । अथासिद्धसाधनार्थो नोदाहरणाद् भिद्यते । यदुपमानं प्रमाणे ऽन्तर्भाव्य अथोदाहरणमवयव इति न पृथग् दृष्टान्तो ऽस्तीति । इदं तूत्तरमप्रतिसमाधेयमिति पश्यामः । कस्मात् । अथ स्थाप्यपरिज्ञानात् । सारूप्यव्युत्पत्त्यर्थे तावदुपमानं न भवतीति वर्णितम् । दृष्टान्तः सारूप्यव्युत्पत्त्यर्थं असिद्धसाधनार्थो वेति दृष्टान्तो न भवति । तदुदाहरणं वर्णयन्तो वक्ष्याम इति । न्या॰ वा॰ । न खल्वसिद्धं साध्येन साधनस्याविनाभावो दृष्टान्तेन साध्यतइत्यर्थः । ता॰ टी॰ ।

¶ अत्र भाष्यकारः सिद्धान्तसामान्यलक्षणसूत्रमपठित्वैव तात्पर्यं व्याचष्टे अथ सिद्धान्त इत्यादिनेति तात्पर्यटीकायां दृश्यते तत्र सामान्यलक्षणसूत्रं किमप्यासीदथवास्ते [illegible] क्वाप्युपलभ्यत इति भाव्यम् ।

** सामान्योपक्रमस्याभ्युपगमस्य प्रमाणतो विशेषपर्यन्तता परिसमाप्तिः संस्थितिरित्यर्थः । ता॰ टी॰ ।

तन्त्रार्थसंस्थितिः तन्त्रसंस्थितिः तन्त्र*मितरेतराभिसम्बद्धस्यार्थसमूहस्योपदेशः शास्त्रम्। अधिकरणानुषक्ता†र्था संस्थितिरधिकरणसंस्थितिः अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः। तन्त्रभेदात्तु खलु स चतुर्विधः‡।

सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥

सर्वतन्त्राश्चतस्रः संस्थितयोऽर्थान्तरभूताः। तासाम्।

सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥

यथा घ्राणादीनीन्द्रियाणि§ गन्धादय इन्द्रियार्थाः पृथिव्यादीनि भूतानि प्रमाणैरर्थस्य ग्रहणमिति।

---

* तन्त्रग्रहणेन च सर्वतन्त्रप्रतितन्त्रयोरुपादानमुभयोरपि तन्त्रत्वात्। ता टी।

† अनुषक्तार्थसंस्थितिरिति ५।२।४ पाठः।

‡ किं पुनरिदं सूत्रं लक्षणार्थमाहो विभागार्थमिति। किं चातः। यदि लक्षणार्थं तन्त्राधिकरणग्रहणं न कर्तव्यम् एतावदस्त्वभ्युपगमव्यवस्था सिद्धान्त इति। अथ विभागार्थं सर्वतन्त्रप्रतितन्त्रग्रहणं कर्तव्यं प्रतिज्ञादिवत्। लक्षणार्थं च सूत्रान्तरं वक्तव्यम्। सर्वतन्त्रप्रतितन्त्राभ्युपगमसंस्थित्यर्थान्तरभावादिति सूत्रस्यान्योऽर्थो वक्तव्यः। अथेदं विभागार्थं तथापि पूर्वसूत्रं परित्यज्यताम्। अथ विभक्तानां पुनर्विभागः। त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरिति व्याहन्येत। विभागश्च नियमार्थः। विभक्तानां विभागः किमर्थं। यदि नियमार्थः। वाक्येन सूत्रेण कृतत्वान्न प्रयोजनमस्तीति। तस्मात्पूर्वमुत्तरं वा सूत्रमनर्थकमिति। नानर्थकम्। आद्यस्य लक्षणार्थत्वादुत्तरस्य विभागार्थत्वादिति। विभागश्च नियमार्थ इत्युक्तम्। एतेनानेकधा भिन्नस्य सिद्धान्तस्य चतुर्धा सत्त्व इति नियमं दर्शयति। कथमत्र सूत्रं कथं लक्षणार्थमिति। तन्त्राधिकरणानामर्थानामभ्युपगम इति सूत्रार्थः। तन्त्रमधिकरणं येषामर्थानां भवति ते तन्त्राधिकरणाः। तेषामभ्युपगमसंस्थितिरित्यभ्युपगमव्यवस्था धर्मनियमः सिद्धान्तो भवतीति। किमुक्तं भवति। योऽर्थो न सूत्रितस्तस्याभ्युपगमो न सिद्धान्त इति। न्या वा।

§ यद्यपि घ्राणादिषु भौतिकत्वादयो विप्रतिपत्तयस्तथापीन्द्रियत्वे नास्ति विप्रतिपत्तिरिति। ता टी। न दृष्टान्तात् सर्वतन्त्रसिद्धान्तो भिद्यते न चापि विप्रतिपत्तिरिहापीति। भिद्यत इत्याह। दृष्टान्तो हि वादिप्रतिवादिभ्यामेव

## समान*तन्त्रासिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥

यथा नासत आत्मलाभः न सत आत्महानं निरतिशयाश्चेतनाः देहेन्द्रियमनःसु विषयेषु† तत्तत्कारणे च विशेष इति सांख्यानां पुरुषकर्मादिनिमित्तो भूतसर्गः‡ कर्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते उत्पन्नं निरुध्यत इति योगानाम् ।

## यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥

यस्यार्थस्य सिद्धा§वन्ये ऽर्था अनुषज्यन्ते न तैर्विना सोऽर्थः सिध्यति तेऽर्था यदधिष्ठानाः सोऽधिकरणसिद्धान्तः । यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिभिः । अत्रानुषङ्गिणोऽर्था इन्द्रियनानात्वं नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि गन्धादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणमनियतविषयाश्चेतना इति पूर्वार्थसिद्धावेतेऽर्थाः सिध्यन्ति न तैर्विना सोऽर्थः सम्भवतीति ।

---

निश्चितो न पुनरेव सर्वतन्त्रसिद्धान्त इति । अनुमानागमयोराश्रयो दृष्टान्तो नैव सर्वतन्त्रसिद्धान्त इति । न्या वा ।

* समानशब्द एकपर्याय । निरतिशया अपरिणामिनो न केन चिद्धर्मेणोपजननापायधर्मेणा युज्यन्ते । प्राकृतेषु च तत्कारणेषु महदहङ्कारपञ्चतन्मात्रभूतसूक्ष्मेषु विशेषोऽतिशय इत्यर्थः । ता टी ।

† मन स्वविषयेष्विति ३ पु पाठ ।

‡ पुरुषनिमित्तभूतसर्ग इति ३ पु पाठः ।

§ यस्यार्थस्य साध्यस्य हेतोर्वा सिद्धाविति विषयसप्तमी । न निमित्तसप्तमी । द्वयोर्ज्ञायमानयोर्निमित्तनैमित्तिकभावायोगात् । तेन यस्मिन्नर्थे ज्ञायमाने तदनुषङ्गिणोऽर्थास्तदन्तर्भाविनो गम्यन्ते सोऽर्थः साक्षादधिक्रियमाणस्तदनुषङ्गिणां चाधारस्तदाश्रयत्वात् । तत्सिद्ध साध्यो वा भवतु हेतुर्वा अनेन रूपेणाधिकरणसिद्धान्तः । यतस्तावद्भूम्यादाध्यासितमुपलब्धिमत्कारणमुत्पत्तिमत्त्वाद्वस्त्रवदिति । अत्र हि पृथिव्यादिगतेनोत्पत्तिमत्त्वेनोपलब्धिमत्पूर्वकत्वं तद्गतं साध्यमानं स्वसिद्ध्यन्तर्गतानुषङ्गिसर्वज्ञत्वाद्युपेतमेव सिध्यति । नान्यथेहोपलब्धिमत्पूर्वकत्वस्य सिद्धिरिति । भाष्ये हेतुप्रतिसन्धान सिध्यत्स्वानुषङ्ग्यर्थान्तराण्यपि सिध्यतीत्युदाहृतम् । ता टी ।

अपरीक्षिता*ऽभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥

यत्र किंचिदर्थजातमपरीक्षितमभ्युपगम्यते अस्तु द्रव्यं शब्दः स तु नित्योऽथानित्य इति द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेषः परीक्ष्यते सोऽभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च† प्रवर्त्तत इति ।

अथावयवाः ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः‡ ॥ ३२ ॥

दशावयवानेके नैयायिका वाक्ये संचक्षते जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति । ते कस्मान्नोच्यन्त इति । तत्राप्रतीयमानेऽर्थे प्रत्ययार्थस्य प्रवर्तिका जिज्ञासा अप्रतीयमानमर्थं कस्माज्जिज्ञासते तं तत्त्वतो ज्ञातं हास्यामि वोपादास्ये उपेक्षिष्ये वेति ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थस्तदर्थमयं जिज्ञासते सा खल्वियमसाधनमस्येति जिज्ञासाधिष्ठानं संशयश्च व्याहतधर्मोपसंघातात्तत्त्वज्ञाने§ प्रत्यासन्नः व्याहतयोर्हि धर्मयोरन्यतरत्तत्त्वं भवितुमर्हतीति । स पृथगुपदिष्टोऽप्यसाधनमर्थ-

---

* अपरीक्षितोऽसूत्रित । न्या० वा० । सूत्रितस्य प्रमेयतया परीक्षासम्बन्धात् । मनसो हीन्द्रियत्वेनासूत्रितस्यापीन्द्रियत्वाभ्युपगमो यतः प्रमाणाधिकरणस्तस्मादयमभ्युपगमसिद्धान्त इति । सूत्रं त्वेवं योजनीयम् । असूत्रिताभ्युपगमाद्धेतोर्यत्तद्विशेषपरीक्षणं भवति तस्माद्विशेषपरीक्षणाज्ज्ञायते ऽसूत्रितमभ्युपगतं सूत्रकारेण सोऽयमभ्युपगमसिद्धान्त इति । ता० टी० । भाष्ये त्वन्यथा व्याख्यातम् ।

† परबुद्ध्यवज्ञानार्थेति १ पु० पाठः ।

‡ दशावयवा इति के चिन्नैयायिकाः । त्रयोऽवयवा इति मीमांसकाः । तन्निराकरणार्थं सूत्रम् । परप्रतिपादका ये वाक्ये सम्भूयेतरेतरमन्वयितेनार्थेनार्थवन्तो वाक्याङ्गतामुपयान्ति तेऽवयवाः । वाक्याङ्गत्वमवयवार्थः । वाक्याङ्गत्वमवयवत्वम् । किं पुनर्वाक्यम् । यस्य प्रतिज्ञादिभिरुपस्कृतस्य विशेषास्थापनमर्थः तद्वाक्यम् । वाक्यार्थं संहत्यैते निष्पादयन्तीत्यवयवा इत्युच्यन्ते । न पुनर्जिज्ञासादयः परप्रतिपादका इत्यतो न वाक्यस्यावयवा इति । निश्चितत्वाच्च । निश्चितश्च साधयिता भवति न तस्य जिज्ञासासंशयौ स्तः । प्रयोजनमपि साधनादेव गम्यते शक्यप्राप्तिश्चेति । न ह्यशक्यमप्रयोजनं वा कश्चित्साधयति । तस्मात् प्रयोजनशक्यप्राप्ती अपि न वाक्यावयवौ । न्या० वा० ।

§ धर्मोपसंघातात्तत्त्वज्ञाने इति ३ पु० पाठः । संघातात तत्त्वज्ञाने इति ४ । ५ पु पा० ।

स्येति। प्रमातुः प्रमाणानि प्रमेयाधिगमार्थानि सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञादिवदिति। प्रयोजनं तत्त्वावधारणमर्थसाधकस्य वाक्यस्य फलं नैकदेश इति। संशयव्युदासः प्रतिपक्षोपवर्णनं तत्प्रतिषेधे तत्त्वाभ्यनुज्ञानार्थं न त्वयं (*साधकवाक्यैकदेश इति प्रकरणे† तु जिज्ञासादयः समर्था अवधारणीयार्थोपकारात् तत्त्वसाधकभावात्तु प्रतिज्ञादयः) साधकवाक्यस्य भागा एकदेशा अवयवा इति।

तेषां तु यथाविभक्तानाम्।

**साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥**

प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा‡ प्रतिज्ञा साध्यनिर्देशः अनित्यः शब्द इति।

**उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः§ ॥ ३४ ॥**

---

* ( ) एतच्चिह्नाङ्कितः पाठः ४। ३ नास्ति।

† प्रकरणमेते तथोपकुर्वन्तीति। न हि जिज्ञासादीनन्तरेण प्रकरणस्योत्थानमस्तीति प्रकरणोत्थापका नावयवा जिज्ञासादय इति। परप्रतिपादकस्य तु प्रतिज्ञादीनामधिकार इति तउपदिश्यन्ते। व्यवयवमपि वाक्यं तथा न भवति तथोपनयनिगमनयोरर्थान्तरभावं यथावन्तो वक्ष्यामः। न्या॰ वा॰।

‡ परिगृह्यते ऽनेनेति परिग्रहः स च वचनं चेति परिग्रहवचनम्। ता॰ टी॰। विवादविषयीकृतस्यार्थस्य वचनमित्यर्थः।

§ श्रुत्यर्थाभ्यामुभयलक्षणसूचनात्सूत्रम्। अत्र हेतुरिति लक्ष्यनिर्देशः स च विभागोद्दिष्टो वाक्यावयव इति वचनरूपः। तस्य सामान्यलक्षणं साध्यसाधनं साध्यते ऽनेनेति व्युत्पत्त्या यद्यपि पाराशर्यपदं कृतकत्वादिकमर्थमाह तथापि तस्य वचनात्मकहेतुसामानाधिकरण्यानुपपत्तेर्विपर्यये कृतकत्वादित्यादिकं वचनमुपलक्षयति। यदि तु वचनं हेतुरित्युच्यते तत्साध्येन समभिव्याहृतं प्रतिज्ञा स्यात्। अथ वचनमित्येतावदुच्येत तदा अतिव्याप्तिः। उपचारे तु न च चित्प्रसङ्गः। उपनयादपि साधनं न पराङ्गतया गम्यते। किं तु प्रातिपदिकार्थप्रधानतया स्वनिष्ठमिति न तत्रापि प्रसङ्गः। हेत्वाभासाश्च न साधनमिति साधनपदेनैव निराकृताः। न्यायवाक्यावयवत्वेन च नान्यशब्दे प्रसङ्गः। इदं चार्थे श्रौतं तु विशेषलक्षणं हेतुरिति यद्यपि सामान्यपदं तथापि प्रकरणादन्वयव्यतिरेकिहेतुविशेषपरं द्रष्टव्यम्। तेन हेतुरिति लक्ष्यनिर्देशः परिशिष्टं तु लक्षणम्। साधर्म्यपदव्याख्यानं सामान्यादिति। साध्यसाधनपदव्याख्यानं साध्यस्य धर्मस्येति। साध्यस्येति धर्मिमात्रे बुद्धिर्मा भूदत उक्तं धर्मस्येति। धर्मसहितस्य धर्मिण इत्यर्थः। तदेव स्फुटयति प्रतिमन्वायेति। उदाहरणसाधर्म्यात् साध्यस्य

उदाहरणेन सामान्यात्साध्यस्य धर्मस्य* साधनं प्रज्ञापनं† हेतुः साध्ये प्रतिसंधाय‡ धर्ममुदाहरणे च प्रतिसंधाय तस्य साधनतावचनं हेतुः उत्पत्तिधर्मकत्वादिति । उत्पत्तिधर्मकमनित्यं दृष्टमिति ।

किमेतावद्धेतुलक्षणमिति । नेत्युच्यते किं तर्हि ।

## तथा वैधर्म्यात् ॥ ३५ ॥

उदाहरणवैधर्म्याच्च§ साध्यसाधनं हेतुः । कथम् अनित्यः शब्दः उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यं यथा आत्मादिद्रव्यमिति‖ ।

## साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्¶ ॥ ३६ ॥

साध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्या**त्कारणात्तद्धर्मभावी दृष्टान्त इति । तस्य धर्मस्तद्धर्मः । तस्य साध्यस्य । साध्यं च द्विविधं धर्मिविशिष्टो वा धर्मः शब्दस्यानित्यत्वं धर्मविशिष्टो वा धर्मी अनित्यः शब्द इति । इहोत्तरं तद्ग्रहणेन गृह्यतइति कस्मात्पृथग्धर्मवचनात् । तस्य धर्मस्तद्धर्मस्तस्य†† भावस्तद्धर्मभावः स यस्मिन् दृष्टान्ते वर्तते स दृष्टान्तः साध्यसा-

---

त्यनेनान्वयपक्षधर्मत्वे अन्वयव्यतिरेकपक्षधर्मत्वानि च दर्शितानि । साध्यसाधनमित्यत्र च साध्यग्रहणेनाबाधितविषयत्वासत्प्रतिपक्षितत्वे तद्विपरीतस्य साधनानर्हत्वात् । ता टी ।

* धर्मस्येति ४ । ५ नास्ति । † प्रतिज्ञानमिति ४ । ३ प्रज्ञापनमिति २ । ५ पाठ ।

‡ प्रतिसंधायेति ४ । २ । ३ पाठ ।

§ अत्र यदि वैधर्म्यादित्युच्यते ततः सकलकेसरादिमत्पदार्थपक्षीकरणेनाश्वस्य यदि विषाणेन साध्यते तदा ऽस्ति पक्षवैधर्म्यमिति हेतुः स्यादित्यत उदाहरणेन वैधर्म्यमिति । विपक्षेणेत्यर्थः । ता टी ।

‖ *अत्रेदमुदाहृत्य पूर्वोक्तोदाहरणाद्वैलक्षण्याभावेन दूषयित्वा नेदं निरात्मकं जीवच्छरीरम* प्राणादिमत्त्वप्रसङ्गादिति वार्तिके उदाहरणान्तरं दत्तम् । अन्ययुदाहरणं च पूर्वसूत्रे केवलव्यतिरेक्युदाहरणं वार्त्तेति वैलक्षण्यं च प्रदर्शितम् ।

¶ साध्येन धर्मिणा शब्देन साधर्म्यं दृष्टान्तस्य स्थाल्यादेः कृतकत्वं हेतुः तदनित्यत्वेन साध्ये शब्दे दृष्टान्ते च स्थाल्यादौ समानम् । तस्मात्कारणात्स यो ऽसावतद्धर्मभावी तस्यैव साध्यस्य शब्दस्य धर्मः धर्मान्तरं येन विशिष्टः शब्दः सिषाधयिषितो ऽनित्यत्वेन तदनित्यत्वं तद्धर्मः स एव भावस्तद्धर्मभावः सो ऽस्यास्तीति तद्धर्मभावी स्थाल्यादिरनित्यत्वधर्मवानिति यावत् । तेन तादृशा दृष्टान्तेन उपलक्षितं तद्विषयं वचनमुदाहरणमिति । ता टी ।

** साध्येन साधर्म्यात् समानधर्मत्वादिति ५ । ४ । २ । ३ पाठः ।

†† तद्धर्मस्य भाव इति ५ । ४ । २ । ३ पाठ ।

स्येति । प्रमातुः प्रमाणानि प्रमेयाधिगमार्थानि सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञादिवदिति । प्रयोजनं तत्त्वावधारणमर्थसाधकस्य वाक्यस्य फलं नैकदेश इति । संशयव्युदासः प्रतिपक्षोपवर्णनं तत्प्रतिषेधे तत्त्वाभ्यनुज्ञानार्थं न त्वयं ( *साधकवाक्यैकदेश इति प्रकरणे† तु जिज्ञासादयः समर्था अवधारणीयार्थोपकारात् तत्त्वसाधकभावात्तु प्रतिज्ञादयः ) साधकवाक्यस्य भागा एकदेशा अवयवा इति ।

तेषां तु यथाविभक्तानाम् ।

## साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥

प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा‡ प्रतिज्ञा साध्यनिर्देशः अनित्यः शब्द इति ।

## उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः§ ॥ ३४ ॥

---

* ( ) एतच्चिह्नाङ्कितः पाठः ४ । ३ नास्ति ।

† प्रकरणमेते तथोपकुर्वन्तीति । न हि जिज्ञासादीनन्तरेण प्रकरणस्योत्थानमस्तीति प्रकरणोत्थापका नावयवा जिज्ञासादय इति । परप्रतिपादकत्वात्तु प्रतिज्ञादीनामधिकार इति तदुपदिश्यन्ते । त्र्यवयवमपि वाक्यं तथा न भवति तथोपनयनिगमनयोरर्थान्तरभावं वर्णयन्तो वक्ष्यामः । न्या॰ वा॰ ।

‡ परिगृह्यते ऽनेनेति परिग्रहः स च वचनं चेति परिग्रहवचनम् । ता॰ टी॰ । विधर्यविवक्षितस्यार्थस्य वचनमित्यर्थः ।

§ श्रुत्यर्थाभ्यामुभयलक्षणसूचनात्सूत्रम् । अत्र हेतुरिति लक्ष्यनिर्देशः स च विभागोद्दिष्टो वाक्यावयव इति वचनरूपः । तस्य सामान्यलक्षणं साध्यसाधनं साध्यते ऽनेनेति व्युत्पत्त्या यद्यपि पारार्थ्यापन्नं कृतकत्वादिकमर्थमाह तथापि तस्य वचनात्मकहेतुसामानाधिकरण्यानुपपत्तेर्विषयि कृतकत्वादित्यादिकं वचनमुपलक्षयति । यदि तु वचनं हेतुरित्युच्यते तत्साध्येन समभिव्याहृतं प्रतिज्ञा स्यात् । अथ वचनमित्येतावदुच्येत तदा अतिव्याप्तिः । उपचारे तु न क्व चित्प्रसङ्गः । उपनयादपि साधनं न पराङ्गतया गम्यते । किं तु प्रातिपदिकार्थप्रधानतया स्वनिष्ठमिति न तत्रापि प्रसङ्गः । हेत्वाभासाश्च न साधनमिति साधनपदेनैव निरस्ताः । न्यायवाक्यावयवत्वेन च नान्यशब्दे प्रसङ्गः । इदं चार्थेऽतं तु विशेषलक्षणं हेतुरिति यद्यपि सामान्यपदं तथापि प्रकरणादन्वयव्यतिरेकिहेतुविशेषपरं द्रष्टव्यम् । तेन हेतुरिति लक्ष्यनिर्देशः परिशिष्टं तु लक्षणम् । साधर्म्यपदव्याख्यानं सामान्यादिति । साध्यसाधनपदव्याख्यानं साध्यस्य धर्मस्येति । साध्यस्येति धर्मिमात्रे बुद्धिर्मा भूदत उक्तं धर्मस्येति । धर्मसहितस्य धर्मिण इत्यर्थः । तदेव स्फुटयति प्रतिसन्धायेति । उदाहरणसाधर्म्यात् साध्यस्ये-

उदाहरणेन सामान्यात्साध्यस्य धर्मस्य* साधनं प्रज्ञापनं† हेतुः साध्ये प्रतिसंधाय‡ धर्ममुदाहरणे च प्रतिसंधाय तस्य साधनतावचनं हेतुः उत्पत्तिधर्मकत्वादिति । उत्पत्तिधर्मकमनित्यं दृष्टमिति ।

किमेतावद्धेतुलक्षणमिति । नेत्युच्यते किं तर्हि ।

## तथा वैधर्म्यात् ॥ ३५ ॥

उदाहरणवैधर्म्याच्च§ साध्यसाधनं हेतुः । कथम् अनित्यः शब्दः उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यं यथा आत्मादिद्रव्यमिति‖ ।

## साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्¶ ॥ ३६ ॥

साध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्यं** त्कारणात्तद्धर्मभावी दृष्टान्त इति । तस्य धर्मस्तद्धर्मः । तस्य साध्यस्य । साध्यं च द्विविध धर्मिविशिष्टो वा धर्मः शब्दस्यानित्यत्वं धर्मविशिष्टो वा धर्मी अनित्यः शब्द इति । इहोत्तर तद्ग्रहणेन गृह्यतइति कस्मात्पृथग्धर्मवचनात् । तस्य धर्मस्तद्धर्मस्तस्य†† भावस्तद्धर्मभावः स यस्मिन् दृष्टान्ते वर्तते स दृष्टान्तः साध्यसा-

---

त्यनेनान्वयपक्षधर्मत्वे अन्वयव्यतिरेकपक्षधर्मत्वानि च दर्शितानि । साध्यसाधनमित्यत्र च साध्यग्रहणेनाबाधितविषयत्वासत्प्रतिपक्षितत्वे तद्विपरीतस्य साधनानर्हत्वात् । ता० टी० ।

* धर्मस्येति ४ । ३ नास्ति । † प्रतिज्ञानमिति ४ । ३ प्रज्ञानमिति २ । ५ पाठ ।

‡ प्रतिसन्धायेति ४ । २ । ३ पु पाठ ।

§ अत्र यदि वैधर्म्यादित्युच्यते ततः सकलकेसरादिमत्पदार्थपक्षीकरणेनाश्वस्य यदि विषाणेन साध्यते तदा ऽस्ति पक्षवैधर्म्यमिति हेतुः स्यादित्यत उदाहरणेन वैधर्म्यमिति । विपक्षेणेत्यर्थः । ता० टी० ।

‖ अत्रेदमुदाहर्णं पूर्वोक्तोदाहरणाद्विलक्षणाभावेन दूषयित्वा नेदं निरात्मकं जीवच्छरीरम् प्राणादिमत्त्वप्रसङ्गादिति वार्तिके उदाहरणान्तरं दत्तम् । अन्वय्युदाहरणं च पूर्वसूत्रे केवलव्यतिरेक्युदाहरणं चात्रेति येनक्रमेण च प्रदर्शितम् ।

¶ साध्येन धर्मिणा शब्देन साधर्म्यं दृष्टान्तस्य स्थाल्यादेः कृतकत्व हेतुः तदनित्यत्वेन साध्ये शब्दे दृष्टान्ते च स्थाल्यादौ समानम् । तस्मात्कारणात्प्रयोजकात्तद्धर्मभावी तस्यैव साध्यस्य शब्दस्य धर्मः धर्मान्तर येन विशिष्टः शब्दः सिषाधयिषितो ऽनित्यत्वेन तदनित्यत्वं तद्धर्मः स एव भावस्तद्धर्मभावः सो ऽस्यास्तीति तद्धर्मभावी स्थाल्यादिरनित्यत्वधर्मवानिति यावत् । तेन तादृशा दृष्टान्तेन उपलक्षितं तद्विषय वचनमुदाहरणमिति । ता० टी० ।

** साध्येन साधर्म्यात् समानधर्मत्वादिति ५ । ४ । २ । ३ पाठ० ।

†† तद्धर्मस्य भाव इति ५ । ४ । २ । ३ पाठ ।

धर्म्योतद्धर्मभावी भवति स चोदाहरणमिष्यते* तत्र यदुत्पद्यते तदुत्पत्तिधर्मकम् । तच्च भूत्वा न भवति आत्मानं जहाति †निरुध्यतइत्यनित्यम् । एवमुत्पत्तिधर्मकत्वं साधनमनित्यत्वं साध्यं सो ऽयमेकस्मिन्द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते तं दृष्टान्ते उपलभमानः शब्दे ऽप्यनुमिनोति शब्दो ऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदित्युदाह्रियते तेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम् ।

## तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥

दृष्टान्त उदाहरणमिति प्रकृतं साध्यवैधर्म्यात्‡तदतद्धर्मभावी दृष्टान्त उदाहरणमिति । अनित्यः शब्द उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यमात्मादि सो ऽयमात्मादिर्दृष्टान्तः साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी यो ऽसौ साध्यस्य धर्मो नित्यत्वं स तस्मिन्न भवतीति । अत्रात्मादौ दृष्टान्ते उत्पत्तिधर्मकत्वस्य भावादनित्यत्वं न भवतीति उपलभमानः

---

* अत्र साध्यसाधर्म्यग्रहणेन साधनविकलमनुदाहरणं भवतीत्युक्तं भवति । यथा नित्यः शब्दो ऽमूर्तत्वात्परमाणुवदिति । तद्धर्मभावीत्यनेन च साध्यविकलं परास्तम् । यथा नित्यः शब्दो ऽमूर्तत्वात् कर्मवदिति । एतेनोभयविकलमपि परास्तं यथा नित्यः शब्दो ऽमूर्तत्वाद् घटवदिति । पञ्चम्युपादानेन च यत्र वचने साध्यसाधर्म्यप्रयुक्तं तद्धर्मभावित्वं प्रदर्श्यते तदेवोदाहरणं नान्यदिति दर्शितं भवति । प्रयोजकत्वं च साध्यसाधर्म्यस्य हेतोः स्वाभाविकः सम्बन्धो व्याप्यत्वमिति यावत् । प्रयोज्यत्वं च साध्यधर्मस्य व्यापकत्वमेव । तेनाप्रदर्शितान्वयविपरीतप्रदर्शितान्वययोरनुदाहरणत्वमुक्तं भवति । तद्यथा अनित्यः शब्द उत्पत्तिमत्त्वाद् घटवदिति । यो यो ऽनित्यः स स उत्पत्तिमान् यथा घट इति । समाख्यानिर्वचनसामर्थ्यात्सामान्यलक्षणमनेन सूचितमित्याशयवता भाष्यकृता समाख्यानिरुक्तिः कृता उदाह्रियते ऽनेनेति । ता॰ टी॰ ।

† विरुध्यतइति ९ पाठः ।

‡ सात्मकतया साध्येन जीवच्छरीरेण वैधर्म्याद् घटादेर्दृष्टान्तस्य सात्मकत्वसाधर्म्यविरहादिति यावत् । तस्य साध्यस्य जीवच्छरीरस्य धर्मः प्राणादिमत्त्वं तद्धर्मः स एव भावस्तद्धर्मभावः सो ऽस्यास्तीति तद्धर्मभावी न तद्धर्मभावी अतद्धर्मभावी प्राणादिरहितो घटादिरिति यावत् । एतदुक्तं भवति । यत्र घटादौ साध्यधर्माभावप्रयुक्तसाधनधर्माभावः स घटादिर्वैधर्म्यदृष्टान्तः तद्विषयः शब्द उदाहरणमिति । सूत्रस्थश्च वाशब्दः समुच्चये वेदितव्यः । व्यतिरेकविषयत्वाद्वैधर्म्योदाहरणस्येति । ता॰ टी॰ । एतच्च भाष्योदाहरणमन्वयव्यतिरेकिरूपतया पूर्ववदेव गतार्थमिति मत्वा केवलव्यतिरेकी हेतुस्तदुदाहरणं चास्य सूत्रस्येति वार्त्तिकम् ।

शब्दे विपर्ययमनुमिनोति उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति । साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् । वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त* उदाहरणम् । पूर्वस्मिन् दृष्टान्ते यौ तौ धर्मौ† साध्यसाधनभूतौ पश्यति साध्ये ऽपि तयोः साध्यसाधनभावमनुमिनोति उत्तरस्मिन् दृष्टान्ते ययोर्धर्मयोरेकस्याभावादितरस्याभावं पश्यति तयोरेकस्याभावादितरस्याभावं साध्ये ऽनुमिनोतीति तदेतद्धेत्वाभासेषु न संभवतीत्यहेतवो हेत्वाभासाः । तदिदं हेतूदाहरणयोः सामर्थ्यं परमसूक्ष्मं दुःखबोधं पण्डितरूप‡वेदनीयमिति ।

## उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥

उदाहरणापेक्षः उदाहरणतन्त्रः उदाहरणवशः । वशः सामर्थ्यम् । साध्यसाधर्म्ययुक्ते उदाहरणे स्थाल्यादि द्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टं तथा शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योऽत्पत्तिधर्मकत्वमुपसंह्रियते साध्यवैधर्म्ययुक्ते पुनरुदाहरणे आत्मादि द्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टं न च तथा शब्द इति अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते । तदिदमुपसंहारद्वैतमुदाहरणद्वैताद्भवति । उपसंह्रियते ऽनेनेति चोपसंहारो वेदितव्य इति । द्विविधस्य पुनर्हेतोर्द्विविधस्य चोदाहरणस्योपसंहारद्वैत॥ च समानम् ।

---

* साध्यवैधर्म्यादतद्भावी दृष्टान्त इति ३ पु पाठः ।

† धर्मीति २ । ३ पु पाठः ।

‡ पण्डितरूपवेदनीयं यथास्तपण्डितवेदनीयमित्यर्थः । ता॰ टी॰ ।

§ ननु हेतोरुपसंहार उपनयो न साध्यस्य तथा चानुपपन्नः साध्यस्योपसंहार इत्यत उक्तं साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमिति । उदाहरणसिद्धव्याप्तिकहेतुमत्तया साध्यमुपसंह्रियते न स्वरूपेणेत्यर्थः । अत्राप्युदाहरणापेक्ष उपसंहार उपनय इति सामान्यलक्षणं तथा न तथेति च सामान्यलक्षणापेक्षे विशेषलक्षणे इति योज्यम् । ता॰ टी॰ ।

॥ द्वैतमिति ५ पाठः

*हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ३९ ॥

साधर्म्योक्ते वा वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम् । निगम्यन्ते अनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनं निगम्यन्ते समर्थ्यन्ते संबध्यन्ते । तत्र साधर्म्योक्ते तावद्धेतौ वाक्यमनित्यः शब्द इति प्रतिज्ञा । उत्पत्तिधर्मकत्वादिति हेतुः । उत्पत्तिधर्मकं स्थाल्यादि द्रव्यमनित्यमित्युदाहरणम् । तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः । तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम् । वैधर्म्योक्ते ऽपि अनित्यः शब्द उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टं न च तथा ऽनुत्पत्तिधर्मकः शब्दः तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति । अवयवसमुदाये च वाक्ये‡ संभूयेतरेतराभिसंबन्धात्प्रमाणान्यर्थं साधयन्तीति । संभवस्तावच्छब्दविषया प्रतिज्ञा आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसंधानादनृषेश्च स्वातन्त्र्यानुपपत्तेः अनुमानं हेतुः उदाहरणे सादृश्यप्रतिपत्तेः §तच्चोदाहरणं भाष्ये व्याख्यातम् । प्रत्यक्षविषयमुदाहरणं दृष्टेनादृष्टसिद्धेः । उपमानमुपनयः तथेत्युपसंहारात् न च तथेति चोपमानधर्मप्रतिषेधे‖ विपरीतधर्मोपसंहारसिद्धेः । सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति । इतरेतराभिसंबन्धो¶ ऽप्यसत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्तेरन् । असति हेतौ कस्य साधनभावः प्रदर्श्येत । उदाहरणे साध्ये च कस्योपसंहारः स्यात्कस्य चापदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनं स्यादिति । असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत कस्य वा साधर्म्यवशादुपसंहारः प्रवर्तेत । उपनयं चान्तरेण साध्ये ऽनुपसंहृतः साधको धर्मो नार्थं साधयेत् निगमनाभावे** नाभिव्यक्तसंबन्धानां प्रतिज्ञादीनामेकार्थेन प्रवर्तनं तथेति प्रतिपादनं कस्येति†† ।

---

* आप्तोपदेशादिति ४ पाठः ।

† यद्यपि च सिद्धनिर्देशो निगमनं साध्यनिर्देशश्च प्रतिज्ञा तथापि यस्यैव प्रतिज्ञाया साध्यत्वमासीत्तस्यैव निगमने सिद्धत्वमित्यवस्थाभेदमेकमाश्रित्य समानविषयतया निगमनं प्रतिज्ञेत्युपचर्यते तथा च पुनर्वचनमुपपन्नमिति । व्याप्तिप्रदर्शनविषयो दृष्टान्तः दृष्टव्याप्तिकस्य हेतोः साध्यधर्मिण्युपसंहार उपनयः । ता॰ टी॰ ।

‡ समुदायेति ४ । २ । ३ पाठः ।

§ सदृश्येति ४ । २ । ३ पाठः ।

‖ न तथेति चोपमानप्रतिषेधे इति ३ पु पाठः ।

¶ संबन्धे इति ५ पाठः ।

** निगमनाभावे चेति ५ । ४ । २ पाठः ।

†† एकार्थेन प्रतीयेतार्थप्रतिपादकत्वमिति इति ३ पु पाठः ।

अथावयवार्थः । साध्यस्य धर्मस्य धर्मिणा संबन्धोपादानं प्रतिज्ञार्थः । उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य धर्मस्य साधकभाववचनं हेत्वर्थः । धर्मयोः साध्यसाधनभावप्रदर्शनमेकत्रोदाहरणार्थः । साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनमुपनयार्थः । उदाहरणस्थयोर्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रतिषेधार्थं * निगमनम् । न चैतस्यां हेतूदाहरणपरिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिनिग्रहस्थानबहुत्वं प्रक्रमते । अव्यवस्थाप्य खलु धर्मयोः साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठते । व्यवस्थिते तु खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य धर्मस्य हेतुत्वेनोपादानं न साधर्म्यमात्रस्य न वैधर्म्यमात्रस्य वे†ति ।

अत ऊर्ध्वं तर्को लक्षणीयस्तर्कः‡ इति । अथेदमुच्यते ।

**अविज्ञाततत्त्वेऽर्थे§ कारणोपपत्तित-**
**स्तत्त्वज्ञानार्थमूहस्तर्कः॥ ॥ ४० ॥**

---

* साधने प्रतिपन्ने वा साध्यविपरीतप्रसङ्गः स्यादिति सोऽयं प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणमूलावयवोपपत्तौ सत्यां प्रतिज्ञेयार्थस्य सिद्धतया पुनर्वचनेन निगमनेन प्रतिषिध्यते । न च प्रतिज्ञावचनादेव तत्सिद्धं तस्य साध्यपरत्वात् । न चान्यपरादप्याक्षेपात्सिद्धिः । हेत्वादिप्रयोगवैयर्थ्यप्रसङ्गात् । प्रतिज्ञात एव सर्वाक्षेपात् । तस्माद्रूपद्वयप्रतिपादनार्थं निगमनम् । एतेन निगमनं प्रतिज्ञायाः समानाभिधेयत्वेऽपि प्रतिज्ञात्वेन प्रत्युक्तम् । प्रतिज्ञायाः साध्यपरत्वात् निगमनस्य च विपरीतशङ्कानिवृत्तिपरत्वादिति । ता· टी· ।

† वेति ४ । २ । ३ पाठः ।

‡ अत्र भाष्यकारेणैकस्मिन्नन्वयव्यतिरेकिण्येव वीतावीतवाक्ये उदाहृते इति कदा चित् भ्रान्तिः स्यादेकोदाहरणतया द्वे अपि वाक्ये परस्परापेक्षे एवेति तन्निराकरणावतारपरमत ऊर्ध्वमिति । ता· टी· । अवयवनिरूपणोत्तरं क्रमप्राप्तत्वाच्च ।

§ कारणोपपत्तितस्तत्त्वज्ञानार्थमिति ४ पाठः ।

॥ यद्यूहस्तर्क इत्येतावदुच्यते यदि वा तत्त्वज्ञानार्थमूहस्तर्क इत्येतावन्मात्रं ततो विज्ञाततत्त्वेऽपि यदोहः पूर्वानुभवपरिच्छेदात्मा जायते पुनस्तत्त्वज्ञानार्थं सोऽपि तर्कः स्यात्तस्मादविज्ञाततत्त्व इति वक्तव्यमित्यर्थः । यद्यपि कारणोपपत्तित इत्येतस्मादप्ययमर्थो गम्यत एव तथापि कारणोपपत्तेरेवंरूपत्वं नाविज्ञाततत्त्वग्रहणमन्तरेण भवति । तथा हि । अधिगतपरिच्छेदात्मा ऽप्यूहः कारणस्योपपत्त्या सम्भवेन जायते । कारणासम्भवे कार्यस्यासम्भवात् न स्वभावाविज्ञाततत्त्व इति

अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते जानीयेम*मिति। अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति† किं स्विदित्थमाहोस्विन्नेद‡मिति। विमृश्यमानयोर्धर्मयोरेकं कारणोपपत्त्याऽनुजानाति सम्भवत्यस्मिन् कारणं प्रमाणं हेतुरिति। कारणोपपत्त्या§ स्यादेवमेतन्नेतरदिति|| तत्र निदर्शनं योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते तं च भो¶ जानीयेति जिज्ञासा। स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्शः। विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति। यद्ययमनुत्पत्तिधर्मकः ततः स्व** कृतस्य कर्मणः फलमनुभवति ज्ञाता दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य†† पूर्वस्य कारणमुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ। उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम्। उत्पन्नः खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभिः संबध्यत इति नास्येदं स्वकृतस्य कर्मणः फलमुत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति तदेवमेकस्यानेकशरीरयोगः शरीरवियोग‡‡श्चात्यन्तं न स्यादिति यत्र कारणमनुप-

---

ततो व्यवच्छेदः। तथा च सति प्रमाणमपि तर्कः स्यादत उक्तं कारणोपपत्तित इति। उक्ते सति प्रयोजनानुसरणं न त्विह लाघवादरः सूत्रकारस्येति मन्तव्यम्। ता॰ टी॰।

* जानीये इममर्थमिति ५ पाठः।

† यद्यपि संशयस्य पश्चादेव जिज्ञासा भवति तथापि जिज्ञासायाः पश्चादपि संशयो भवति स चात्र विवक्षितः। तर्कप्रवृत्त्यङ्गत्वात्तर्कस्य हि प्रसङ्गापरनाम्नो द्वयोः पक्षयोरेकतरनिषेधेनैकतरः प्रमाणविषयतया ऽभ्यनुज्ञातव्य इति विषयप्रत्यासत्त्या तर्कप्रवृत्तिं प्रत्यङ्गता संशयस्येति। ता॰ टी॰।

‡ नैवमिति ५।२ पाठः।

§ कारणोपपत्तिः कारणसम्भवः। अनुज्ञाया आकार एवमेतन्नेतरदिति। एतदुक्तं भवति। यस्मिन्विषये प्रमाणं प्रवर्तितुमुन्मुखं तद्विपर्ययाशङ्कायां न तत्प्रवर्तते यावदनिष्टापत्त्या विपर्ययाशङ्का नापनीयते। तदपनय एव च स्वविषये प्रमाणसम्भव इति चोपपत्तिरित्याख्यायते। तथा प्रमाणस्योपपत्त्या इतिकर्तव्यतया प्रमाणस्याभ्यनुज्ञातस्य विशोधिते विषये प्रमाणमप्रत्यूहं प्रवर्तते। न चोत्पत्तिरेवास्तु निश्चयहेतुः कृतं प्रमाणेनेति वक्तव्यम्। उपपत्तेः स्वतन्त्राया ग्राह्यासिद्धतया स्वतो निश्चयायोगात्। ता॰ टी॰।

|| आहो स्विन्नेदमिति ३ पु॰ पाठः। ¶ सत्यतो जानीयेयमिति ४।२ पाठः।

** ततः स्वकृतस्येति ५।४।२ पाठः। †† पूर्वस्येत्येकमेव ४।२ पुस्तकयोः।

‡‡ शरीरवियोगश्चेति ४।२।१ नास्ति।

प्रसज्यमानं पश्यति तदभ्यनुजानाति सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते। कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति। अनवधारणात् अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या न *त्ववधारयति न व्यवस्यति न निश्चिनोति एवमेवेदमिति। कथं तत्त्वज्ञानार्थ इति तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणानुग्र†हाद्भावितात्प्रसन्ना‡दनन्तरं प्रमाणसामर्थ्यात्तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थ इति। सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादे प्रदिष्ट इति। अविज्ञा§ततत्त्वमनुजानाति यथा सोऽर्थो भवति तस्य यथा भाव||स्तत्त्वमविपर्ययो याथातथ्यम्। एतस्मिंश्च तर्कविषये।

## विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४१ ॥

स्थापना साधनं प्रतिषेध उपालम्भः। तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ¶ व्यतिषक्तावनुबन्धेन प्रवर्त्तमानौ पक्षप्रतिपक्षावित्युच्येते। तयोरन्यतरस्य निवृत्तिः एकतरस्यावस्थानमवश्यं**भावि तस्या††वस्थापनं तस्यावधारणं निर्णयः। नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं सम्भवतीति ‡‡एको हि प्रतिज्ञात§§मर्थं हेतुतः स्थापयति प्रतिषिद्धं चोद्धरतीति। द्वितीयस्य द्वितीयेन स्थापनाहेतुः प्रतिषिध्यते तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते स निवर्तते।

---

* एकतरकारणोपपत्त्येति २ पु पाठः।   † लक्षणादूहादिति ५। ४। २ पाठः।

‡ भावितात् चिन्तितात्। प्रसन्नाद्बाधितादित्यर्थः। प्रमाणसामर्थ्यादित्यनेन तर्कस्य स्वातन्त्र्यमपाकरोति। ता टी।

§ अविज्ञाततत्त्वेऽर्थ इति यथा सोऽर्थो भवतीति २ अविज्ञाततत्त्वेऽर्थे यथासौ भवतीति ४ पाठः।

|| स तस्य तथा भाव इति २ पु पाठः।

¶ प्रतिपक्षोल्लेखेन प्रवृत्त उपालम्भः प्रतिपक्षाश्रय उच्यते।

** एकस्मिन् वस्तुनि विरुद्धधर्मद्वयासम्भवादिति भावः।

†† पक्षावस्थानमिति ५। ४। २ पाठः।

‡‡ एक इत्यादि निर्णय इत्यन्तं नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं सम्भवतीत्यस्योपपादनम्। वादी प्रतिज्ञातमर्थं हेतुतः स्थापयति द्वितीयस्य प्रतिवादिनः प्रतिषिद्धं प्रतिषेधं वाद्युक्तस्य हेतोर्दूषणमिति यावत्। उद्धरति दूषणाभासीकरोति। द्वितीयेन तु प्रतिवादिना वाद्युक्तस्य हेतोः स्थापनहेतुत्वं प्रतिषिध्यते। तस्यैव वादिनः प्रतिवाद्युक्तदूषणप्रतिषेधहेतुश्च प्रतिवादिनैवोद्ध्रियते। स वादिनो वा प्रतिवादिनो वा हेतुश्चोपालम्भश्च निवर्तते। तस्मिन्निवृत्ते योऽवतिष्ठते एकस्तेनार्थनिर्णयो न द्वाभ्यां तस्मादयुक्तं पक्षप्रतिपक्षाभ्यामिति। न तावत्संशयविषये निर्णये वादिप्रतिवादिनोः स्वतस्तयोर्निश्चितयोरेव प्रवृत्तेः। ता टी।

§§ प्रतिज्ञातमिति ४ पाठः।

तस्य निवृत्तौ यो ऽवतिष्ठते तेनार्थावधारणं निर्णयः । *उभाभ्यामेवार्थावधारणमित्याह । कया युक्त्या एकस्य सम्भवो द्वितीयस्यासम्भवः । तावेतौ सम्भवासम्भवौ विमर्शं सह निवर्तयतः, उभयसम्भवे । †उभयासम्भवे त्वनिवृत्तो विमर्श इति । विमृश्येति विमर्शं कृत्वा । सो ऽयं विमर्शः पक्षप्रतिपक्षाववद्योत्य‡ न्यायं प्रवर्तयतीत्युपादीयत इति । एतच्च विरुद्धयोरेकधर्मिस्थयोर्बोद्धव्यम् । यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुतः सम्भवतः तत्र समुच्चयः हेतुतो ऽर्थस्य तथाभावोपपत्तेः । यथा क्रियावद् द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य क्रियायोगो हेतुतः सम्भवति तत् क्रियावत् यस्य न सम्भवति तदक्रियमिति । एकधर्मिस्थयोश्च विरुद्धयोर्धर्मयोरयुगपद्भाविनोः कालविकल्पः यथा तदेव द्रव्यं क्रियायुक्तं क्रियावत् अनुत्पन्नोपरतक्रियं पुनरक्रियमिति । न चायं निर्णये नियमः विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति । किं §त्विन्द्रियार्थसन्निकर्षोत्पन्नप्रत्यक्षे ऽर्थे ऽवधारणं निर्णय इति । परीक्षाविषये विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः शास्त्रे वादे च विमर्शवर्जम् ‖ ।

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य प्रथमाह्निकम् ।

तिस्रः कथा¶ भवन्ति वादो जल्पो वितण्डा चेति । तासाम् ।

---

* अभ्युपेत्य तु परिहरति । उभाभ्यामिति । वादिनः साधनस्य सम्भव प्रतिवादिन उपालम्भस्यासम्भव । एवं प्रतिवादिनः साधनस्य सम्भवो वादिन उपालम्भस्यासम्भव इति । विमृश्येति विमर्शं कृत्वेति । अनुपायो ऽपि विमर्श कार्यत्वात् कृतित्वाप्य उक्त । विमृश्येति पदोपादानस्य प्रयोजनमाह । सो ऽयमिति । अवद्योत्यानियमेन विषयीकृत्येत्यर्थः । ता टी । एकस्मिन्विषये द्वयोरवधारण प्रहेतुत्वे ऽपि विषयभेदेन द्वयोरप्यवधारणहेतुत्व नानुपपन्नमिति भाव ।

† उभयसम्भवइति पूर्वान्वयि । उभयासम्भवे त्वनिवृत्तो विमर्श इति । साधनमात्र निर्देशे प्रतिवाद्युक्तदूषणानुद्धरणे सत्प्रतिपक्षितत्वेन दूषणानुद्भावनेऽपि दूषणसम्भावनामात्रेणापि संशयावस्थितिसम्भवात । परीक्षाया संशयपूर्वकत्वेन संशयकारणतयोपस्थितकोटिद्वयमध्य एकतरकोटेरसाधने प्रतिज्ञामात्रेण संशयानिवृत्तिसम्भवादिति भाव ।

‡ पक्षप्रतिपक्षाववद्योत्येति ५ पाठ । § त्विन्द्रियार्थेति ५ । २ पाठ ।

‖ न हि ज्योतिष्टोमादीनां स्वर्गादिसम्बन्धनिर्णय आगमेन कर्तव्ये विमर्शो ऽस्ति नापि वादजल्पवितण्डासु विमर्शो निश्चितयोरेव वादिप्रतिवादिनोस्तत्र प्रवृत्तेरित्यर्थ । ता टी ।

¶ नानाप्रवक्तृकत्वे सति तद्विचारवस्तुविषया वाक्यसन्दृब्धि कथा । तस्यां कथायामेव नियमस्तिस्र एवेति । इदं च पक्षप्रतिपक्षपरिग्रह इति सूत्रावयवेन सूचितम् । ता टी । तत्र गुर्वादिभि सह वाद । विजिगीषुणा सह जल्पवितण्डे । न्या वा

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः* ॥ १ ॥

एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावादस्त्यात्मा नास्त्यात्मेति । नानाधिकरणौ† विरुद्धौ न पक्षप्रतिपक्षौ यथा नित्य आत्मा अनित्या बुद्धिरिति । परिग्रहो ऽभ्युपगमव्यवस्था । सो ऽयं पक्षप्रतिपक्षपरिग्रहो वादः । तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भ.‡ प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियतइति§ । साधनं स्थापना उपालम्भः प्रतिषेधः । तौ साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ यावदेको निवृत्त एकतरो व्यवस्थित इति निवृत्तस्योपालम्भो व्यवस्थितस्य साधनमिति । जल्पे निग्रहस्थानविनियोगाद्वादे तत्प्रतिषेधः । प्रतिषेधे कस्य चिदभ्यनुज्ञानार्थं सिद्धान्ताविरुद्ध इति वचनम् । सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध‖ इति हेत्वाभासस्य निग्रहस्थानस्याभ्यनुज्ञा वादे । पञ्चावयवोपपन्न इति हीनमन्यतमेनाप्यवयवेन न्यूनम्¶ हेतूदाहरणाधिकमधिक**मिति चैतयोरभ्यनुज्ञानार्थमिति†† । अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम् । ‡‡अन्यथोभावपि पक्षौ स्थापनाहेतुना प्रवृत्तौ वाद इति स्यात् । अन्तरेणापि चावयवसम्बन्धं§§ प्रमाणान्यर्थं साधयन्तीति दृष्टं तेनापि कल्पेन साधनोपालम्भौ वादे भवत इति ज्ञापयति‖‖ । छलजाति-

---

* पक्षपरिग्रहो वाद इति ३ पु पाठः ।

† नानाधिकरणस्थाविति ५ । ४ । २ । ३ पाठः ।

‡ अस्यापि प्रमाणतर्कसाधन प्रमाणतर्कोपालम्भ इति ५ । ४ । २ । ३ पाठक्रमः ।

§ अनेन विशेषणेन जल्पवितण्डयोर्वादलक्षणातिव्याप्तिः । प्रमाणैरेव यत्र साधनं तर्केण च यत्रोपालम्भ इति तस्यार्थः । विजिगीषुकथाया‖ जल्प वितण्डाया च तत्त्वनिर्णयानपेक्षितत्वेन छलादिना ऽपि स्वपक्षस्थापनं परपक्षप्रतिषेधो वा कर्तुं शक्यतइति न तत्रातिव्याप्तिः ।

‖ न्या सू अ १ आ २ सू ४७ ।

¶ न्या सू अ ५ आ २ सू १२ ।

** न्या सू अ ५ आ २ सू १३ ।

†† वादे निग्रहस्थानानां प्रतिषेधे ऽपि विरुद्धस्य हेत्वाभासस्य न्यूनाधिकयोश्चोद्भावना नुमतिप्रदर्शनार्थं सिद्धान्ताविरुद्ध इति पञ्चावयवोपपन्न इति च विशेषणद्वयं ।

‡‡ पञ्चावयवोपपन्न इत्यनेनैव प्रमाणतर्कसाधनोपालम्भलाभे सिद्धे पुनरुपादानं प्रमाणैः साधनमेव कार्यं तर्केणोपालम्भ एव कार्य इति बोधनार्थम् ।

§§ सम्बन्धमिति ५ । ४ । २ । ३ पाठः ।

‖‖ पञ्चावयववाक्यप्रयोगाभावेऽपि प्रत्यक्षादिप्रमाणानामर्थसाधकत्वस्य दृष्टतया तदापि स्या वादे साधनं भवतीत्यर्थः ।

निग्रहस्थानसाधनोपालम्भो जल्प इति वचनाद्विनिग्रहो जल्प इति मा विज्ञायि च्छलजातिनिग्रहस्थानसाधनोपालम्भ एव जल्पः प्रमाणतर्कसाधनोपालम्भो वाद एवेति मा विज्ञायीत्येवमर्थं पृथक् प्रमाणतर्कग्रहणमिति* ।

## यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥

यथोक्तोपपन्न इति प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । छलजातिनिग्रहस्थानसाधनोपालम्भ इति छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन् क्रियत इति एवंविशेषणो जल्पः† । न खलु वै छलजातिनिग्रहस्थानैः साधनं कस्य चिदर्थस्य संभवति प्रतिषेधार्थतैवैषां सामान्यलक्षणे विशेषलक्षणे च श्रूयते । वचनविघातो ऽर्थविकल्पोपपत्त्या छलमिति‡ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः§ विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्॥मिति विशेषलक्षणेष्वपि यथास्वमिति । न चैतद्विजानीयात्प्रतिषेधार्थतयैवार्थं साधयन्तीति छलजातिनिग्रहस्थानोपालम्भो जल्प इत्येवमप्युच्यमाने विज्ञायेतैतदिति¶ । प्रमाणैः साधनोपालम्भयोश्छलजातीना**मङ्गभावो रक्षणार्थत्वात् न स्वतन्त्राणां साधनभावः । यत्तत्प्रमाणैरर्थस्य साधनं तत्र†† छलजातिनिग्रहस्थानानामङ्गभावो रक्षणार्थत्वात् तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षन्ति । तथा चोक्तं तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहरक्षणार्थं कण्टकशाखावरणवदिति‡‡ । यश्चासौ प्रमाणैः प्रतिपक्षस्योपालम्भस्तस्य चैतानि प्रयुज्यमानानि निषे§§धविघातात्सहकारीणि भवन्ति तदेवमङ्गीभूतानां छलादीनामुपादानम् । जल्पे न स्वतन्त्राणां साधनभावः उपालम्भे तु स्वातन्त्र्यमप्यस्तीति॥ ।

---

* प्रमाणतर्कसाधनग्रहणमिति ३ पु० पाठः ।

† जल्पे प्रमाणादीनां प्रयोगे ऽपि प्रमाणैरेव साधनं तर्केणैवोपालम्भ इति नियमाभावात्तल्लक्षणस्य वादे ऽतिव्याप्तिरिति भावः । ‡ न्या० सू० अ० १ आ० २ सू० ५१ ।

§ न्या० सू० अ० १ आ० २ सू० ५९ । ॥ न्या० सू० अ० १ आ० २ सू० ६० ।

¶ तथा च सूत्रे साधनलक्षणयोरनुपपत्तिरिति भावः । न खलु वै इत्यारभ्य एतदितीत्येतत्पर्यन्तं शङ्का प्रमाणैरित्यादिः परिहारः । जल्पकथायां प्रधानेन प्रमाणैः साधने क्रियमाणे परोदितसाधनानां छलादिना ऽपि निरासे स्वपक्षसिद्ध्या तदङ्गत्वेन च प्रतिज्ञादिविरचनानुपपत्तेरेतावन्मात्रेण तेषां साधनहेतुत्वमुच्यत इति भावः ।

** अङ्गभावः स्वपक्षरक्षणार्थत्वादिति १।४।५।३ पाठः । †† तथेति ४।५। ३ नास्ति ।

‡‡ न्या० सू० अ० ४ आ० २ सू० ५० । §§ प्रतिषेधेति ४।५।३ पाठः ।

॥ साधननिरपेक्षेण परोदितसाधनविघातकत्वमित्यर्थः ।

## स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥

स जल्पो वितण्डा भवति किंविशेषणः प्रतिपक्षस्थापनया हीनः । यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ* पक्षावित्युक्तं तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्ततइति । अस्तु तर्हि स प्रतिपक्षहीनो वितण्डा । यद्वै खलु तत्परप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षः न त्वसौ साध्यं† कं चिदर्थं प्रतिज्ञाय स्थापयतीति । तस्माद्यथान्यासमेवा-स्त्विति‡ ।

हेतुलक्षणाभावादहेतवो हेतुसामान्या§द्धेतुवदाभासमानाः । तइमे ।

## सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता‖ हेत्वाभासाः ॥ ४ ॥

तेषाम् ।

## अनैकान्तिकः सव्यभिचारः ॥ ५ ॥

व्यभिचार¶ एकत्राव्यवस्था । **सह व्यभिचारेण वर्तते इति सव्य-भिचारः । निदर्शनं नित्यः शब्दो ऽस्पर्शत्वात् स्पर्शवान् कुम्भो ऽनित्यो दृष्टो न च तथा स्पर्शवान् शब्दस्तस्मादस्पर्शत्वान्नित्यः शब्द इति । दृष्टान्ते स्पर्श-वत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ दृश्येते स्पर्शवांश्चाणुर्नित्यश्चे-

---

* पक्षप्रतिपक्षावित्युक्तमिति ५ । ४ । ३ पाठः ।

† साध्ये इति ४ । ३ पाठः ।

‡ प्रतिपक्षस्य साधयितुः सत्त्वात्तया न शक्यते वक्तुं साधनीयार्थाभावाच्च स्थापनाहीन इत्युक्तो साध्याप्रसिद्धिरिति भावः ।

§ प्रतिज्ञानन्तरं प्रयोगोऽन्यतमलिङ्गधर्मानुविधानं वा सामान्यम् । न्या॰ वा॰ । अन्वयित्वव्यतिरेकित्वान्वयव्यतिरेकित्वरूपधर्मत्रयमध्ये एकधर्मवत्ता ऽऽद्यधर्मद्वयमध्ये एकधर्मवत्ता वा । साधकासाधकत्वं च विशेषः । अत्र हेत्वाभासानामवान्तरभेदा बहवो वार्तिके दर्शितास्ते प्रकृतानुपयोगात्सूत्रोक्तभेदपञ्चकेन संगृहीतत्वाच्च नोद्धृतास्तत एवावगन्तव्याः ।

‖ समातीतकाला इति ५ । ४ । २ । ३ पाठः ।

¶ साध्यतज्जातीयान्यवृत्तित्वं व्यभिचारः । यत् यत्र साध्यतज्जातीयवृत्तित्वे सत्यन्यत्र वर्तते तद्व्यभिचारि तद्वृत्तित्वं व्यभिचारः । सर्वो ऽयं पदार्थभेदो ऽन्तद्वये, ऽवतिष्ठते । अन्यत्र प्रमेयात् नित्यत्वानित्यत्वे व्यापकत्वाव्यापकत्वे इत्येवमादि । तत्र यो हेतुरुपात्त उभावन्तावाश्रित्य प्रवर्तते सो ऽनैकान्तिक इति । न्या॰ वा॰ ।

** सह व्यभिचारेणेति ५ । ३ पुस्तकयोरधिकम् ।

ति* । आत्मादौ च दृष्टान्ते उदाहरणसाधर्म्यात्साध्यसाधन †हेतुरिति अस्पर्शत्वादिति हेतुर्नित्यत्व व्यभिचरति अस्पर्शा बुद्धिरनित्या चेति । एव द्वि‡विधे ऽपि दृष्टान्ते व्यभिचारात्साध्यसाधनभावो नास्तीति लक्षणाभावादहेतुरिति । नित्यत्वमप्येको ऽन्त अनित्यत्वमप्येको ऽन्त एकस्मिन्नन्ते विद्यतइति ऐकान्तिक § उभयत्र|| व्यापकत्वादिति ।

## सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥

त विरुणद्धीति तद्विरोधी अभ्युपेत सिद्धान्त व्याहन्तीति¶ । यथा सो ऽय विकारो व्यक्तेरपैति** नित्यत्वप्रतिषेधात् । अपेतो ऽप्यस्ति विनाशप्रतिषेधात् । न नित्यो विकार उपपद्यते इत्येव हेतुर्व्यक्तेरपेतो†† ऽपि विकारो ऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते । कथम् व्यक्तिरात्मलाभ अपाय प्रच्युति यद्या‡‡त्मलाभात्प्रच्युतो विकारो ऽस्ति नित्यत्वप्रतिषेधो नोपपद्यते यद्व्यक्तेरपेतस्यापि विकारस्यास्तित्व तत्खलु नित्यत्वमिति । नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात्प्रच्युतेरुपपत्ति । यदात्मलाभात्प्रच्यवते तदनित्य दृष्ट यदस्ति न तदात्मलाभात्प्रच्यवते । अस्तित्व चात्मलाभात्प्रच्युतिरिति विरुद्धावेतौ धर्मौ न सह सम्भवत इति । सो ऽय हेतुर्य सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति ।

---

* ननु मा भूदित्यस्य साधर्म्यमस्पर्शत्वमेवास्तु नित्यत्वस्य साध्यमित्यत आह स्पर्शवांश्चाणुर्नित्यश्चेति । न्या वा ।

† साध्यसाधनहेतुरिति ४ । २ पाठ ।

‡ सर्वविधे ऽपीति ४ । २ पाठः ।

§ विपर्ययादनैकान्तिकइति ५ । ४ । २ । ३ अधिक पाठः ।

|| उभयान्तव्यापकत्वादिति ५ । ४ । २ पाठः ।

¶ अभ्युपगतार्थविरोधी विरुद्ध । एव च सर्वानुक्तविरुद्धसग्रह । नन्वेवमेको हेत्वाभासो विरुद्ध प्राप्नोति । सत्यमेक एव हेत्वाभासो विरुद्ध । तस्य सामान्येन विरुद्धत्वेन सङ्गृहीतस्य पञ्चधा ऽपदेशो यथा प्रमेयमित्यनेन षोडश पदार्था इति । पृथगभिधान तर्हि विरुद्धस्य न कर्तव्यम । सामान्यतो ऽधिगतस्य विशेषज्ञापनार्थं यथा प्रमेयस्यैव । तथानैकान्तिकादिर्हेत्वाभासो द्विरूपो ऽनैकान्तिकादिर्विरुद्ध । एतस्मिंस्तु विरुद्धतैवेति वृषोपलादिन्यायेन विरुद्धाभिधानम । तस्मादनैकान्तिकादिषु निमित्तसमावेशात्सञ्ज्ञाद्वयसमावेश । विपर्ययस्तज्जातीयान्यवृत्तित्वेनानैकान्तिकस्य हेतुविषयस्वरूपबाधकत्वेन तु विरुद्ध । न्या वा ।

** व्यक्तेरभ्युपैतीति ३ पु पाठः । †† हेतुरुपपद्यते व्यक्त्यपेतइति ३ पु पाठः ।

‡‡ यद्यति ५ । ४ । २ पाठ ।

**यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥७॥**

विमर्शाधिष्ठानौ पक्षप्रतिपक्षावुभा*वनवसितौ प्रकरणम् । तस्य चिन्ता विमर्शात्प्रभृति प्राङ्निर्णयाद्यत्समीक्षणं सा जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात् प्रकरणमनतिवर्त्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते† । प्रज्ञापनं त्वनित्यः शब्दो‡ नित्यधर्मानुपलब्धेरित्यनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि । यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः सव्यभिचार एव । या तु विमर्शस्य विशेषापेक्षिता उभयपक्षविशेषानुपलब्धिश्च सा प्रकरणं प्रवर्त्तयति । यथा शब्दे नित्यधर्मो नोपलभ्यते एवमनित्यधर्मो ऽपि सेयमुभयपक्षविशेषानुपलब्धिः प्रकरणचिन्तां प्रवर्त्तयति । कथम् । विपर्यये हि प्रकरणनिवृत्तेः यदि नित्यधर्मः शब्दे गृह्यते न स्यात्प्रकरणं यदि वा अनित्यधर्मो गृह्येत एवमपि निवर्त्तेत प्रकरणम् । सो ऽयं हेतुरुभौ पक्षौ प्रवर्त्तयन्नन्यतरस्य निर्णयाय न प्रकल्पते§ ।

**साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥ ८ ॥**

द्रव्यं छायेति साध्यं गतिमत्त्वादिति हेतुः साध्येनाविशिष्टः साधनीयत्वात्साध्यसमः । ||अयमप्यसिद्धत्वात्साध्यवत्प्रज्ञापयितव्यः¶ । साध्यं तावदेतत् किं पुरुषवच्छाया ऽपि गच्छति आहोस्विदावरकद्रव्ये संसर्पति आवरणसन्ताना**दसन्निधिसन्तानो ऽयं तेजसो गृह्यत इति । सर्पता खलु द्रव्येण स्थानाद्†† यो यस्तेजोभाग आव्रियते तस्य तस्यासन्निधिरेवा‡‡वच्छिन्नो गृह्यत इति आवरणं तु प्राप्तिप्रतिषेधः ।

---

* प्रतिपक्षावनवसिताविति ५ । ४ । २ पाठः ।

† संशयविषयीभूतकोटिद्वयमध्ये एकतरकोट्युपस्थापक यत्र यत्र साध्यसाधकत्वेनोपादीयते स प्रकरणसम इत्यर्थः । योऽयं प्रकरणमनतिक्रान्त इत्यनेन दर्शितः । प्रकरणान्तःपाति इति तदर्थः । अयमेव च सत्प्रतिपक्ष इत्युच्यते ।

‡ प्रज्ञापनं नित्यः शब्द इति ३ पु पाठः ।

§ प्रवर्त्तयन्नन्यतरस्य प्रवर्त्तनाय कल्पते इति ३ पु पाठः ।

|| उभयमिति ४ पाठः ।

¶ हेतोरपि धर्मे पक्षेण सम्बन्धो ऽसिद्धत्वात्साधनीय इति साध्यसमः । यत्र हेतोः सम्बन्ध इत्युपलक्षणम् पक्षतावच्छेदकादेरपि । अयमेवासिद्ध इत्युच्यते । सो ऽयमसिद्धस्त्रेधा भवति । प्रज्ञापनीयधर्मसमान आश्रयासिद्धो ऽन्यथासिद्धश्चेति । वार्त्तिकम् ।

** आवरकद्रव्ये संसर्पति आवरणसन्निधानादिति ३ पु ।

†† स्थानादिति ५ । ४ । २ नास्ति ।

‡‡ सन्निधिरविच्छिन्न इति १ । ३ । २ । ३ पाठः ।

## कालात्ययापदिष्टः कालातीतः ॥ ९ ॥

कालात्ययेन युक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः कालातीत इत्युच्यते* । निदर्शनं नित्यः शब्दः संयोगव्यङ्ग्यत्वाद् रूपवत् । प्रागूर्ध्वं च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते तथा च शब्दोऽप्यवस्थितो भेरीदण्डसंयोगेन व्यज्यते दारुपरशुसंयोगेन वा । तस्मात्संयोगव्यङ्ग्यत्वान्नित्यः शब्द इत्ययमहेतुः कालात्ययापदेशात् । व्यञ्जकस्य संयोगस्य काले न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति । सति प्रदीपसंयोगे रूपस्य ग्रहणं भवति निवृत्ते संयोगे रूपं गृह्यते । निवृत्ते दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले । सेयं शब्दस्य व्यक्तिः संयोगकालमत्येतीति न संयोगनिमित्ता भवति । कस्मात्कारणाभावाद्धि कार्याभाव इति । एवमुदाहरणसाधर्म्यस्याभावादसाधन†मयं हेतुर्हेत्वाभास इति । अवयवविपर्यासवचनं

---

* साध्यकाले हेत्वभावयानित्यर्थः । नित्यः शब्दः संयोगव्यङ्ग्यत्वादित्यत्र ह्युपलब्धेः पूर्वं संयोगो नोपलब्धिकाले । सोऽयं संयोगो हेतुविशेषणत्वेनोपात्त उपलब्धिकालमत्येति । यदोपलभ्यते तदा संयोगो नास्ति दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ शब्दोपलब्धिरिति । नन्वयमनैकान्तिक एव संयोगव्यङ्ग्यत्वादिति । अनित्यमपि संयोगेन व्यज्यमानं दृष्टं यथा घट इति । संयोगव्यङ्ग्यत्वेनावस्थानस्य साध्यत्वात् । न ब्रूमो नित्यः शब्द इति अपि त्ववतिष्ठते शब्द इति प्रतिज्ञार्थः । तथा च संयोगव्यङ्ग्यत्वादित्यय हेतुर्नानैकान्तिकः । न ह्यनवस्थितं किं चित्संयोगेन व्यज्यमानं दृष्टमिति । न्या॰ वा॰ । हेतोरपदेशस्य हि साध्यसन्देहविशिष्टः कालः । यथाहुः नानुपलब्धे न निर्णीते ऽर्थे न्यायः प्रवर्तते किं तु सन्दिग्धइति । परेऽप्याहुः । सन्दिग्धे हेतुवचनादिति । अत्र च प्रत्यक्षानुमानागमविरोधो यथाऽनुष्णोऽग्निर्द्रव्यत्वादिति अश्रावणः शब्दो गुणत्वादिति । शुचि नरशिरःकपालं प्राण्यङ्गत्वादिति च । स सर्वः प्रमाणतो विपरीतनिर्णयेन सन्देहविशिष्टकालमतिपततीति । सोऽयङ्कालस्यात्ययेनापदिश्यमानः कालातीत इति । तथा चोदाहृतम् । एवं व्यवस्थिते भाष्यकारः सूत्रं स्वपरमतश्लिष्टं व्याचष्टे । यस्यार्थस्यैकदेशः धर्मविशिष्टो धर्मी हेतोरपदिश्यमानस्यार्थः स ह्यर्थ्यते हेतुना तस्यैकदेशः साध्यधर्मः स हि धर्मिणि बलवता प्रमाणेन तद्विपरीतधर्मनिर्णयं कुर्वता संशयकालमतिपातितस्तादृशो हेतुः कालात्ययापदिष्टः कालातीत इति स्वमतेनार्थः । अत्र च पूर्वमेवोदाहृतमिति पौनरुक्त्यभयान्नोदाहृतम् । परमते तु कालात्ययेन युक्तो यस्य हेतोरर्थरूप एकदेशो विशेषणमिति यावत् । स कालात्ययापदिष्ट इति योजना । परमतेनैव निदर्शनमाह निदर्शनमिति । ता॰ टी॰ ।

† साधर्म्यादिसाधनेति ३ पु॰ पाठः ।

न सूत्रार्थः । कस्मात् । यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् । इत्येतद्वचनाद्विपर्यासेनोक्तो हेतुरुदाहरणसाधर्म्यात्तथा वैधर्म्यात्साधनं* हेतुलक्षणं न जहाति । अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति । अवयवविपर्यासवचनमप्राप्तकालमि†ति निग्रहस्थानमुक्तं तदेवेदं पुनरुच्यत इति । अतस्तन्न सूत्रार्थः‡ ।

अथ छलम् ।

**वचनविघातो ऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥**

न सामान्यलक्षणे छलं शक्यमुदाहर्तुं विभागे तूदाहरणानि । विभागश्च ।

**तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥**

तेषाम् ।

**अविशेषाभिहिते ऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥**

नवकम्बलो ऽयं माणवक इति प्रयोगः । अत्र नवः कम्बलो ऽस्येति वक्तुरभिप्रायः । विग्रहे तु विशेषो न समासे तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थं नव कम्बला अस्येति तावदभिहितं भवतीति कल्पयति कल्पयित्वा चासम्भवेन प्रतिषेधति एको ऽस्य कम्बलः कुतो नव कम्बला इति । तदिदं सामान्यशब्दे वाचि छलं वाक्छलमिति । अस्य प्रत्यवस्थानम्§ सामान्यशब्दस्यानेकार्थत्वे ऽन्यतराभिधानकल्पनायां विशेषवचनम् । नवकम्बल इत्यनेकार्थस्याभिधानं नवः कम्बलो ऽस्य नव कम्बला अस्येति । एतस्मिन्प्रयुक्ते येयं कल्पना नव कम्बला अस्येत्येतद्भवता ऽभिहितं तच्च न सम्भव-

* साध्यसाधनमिति- ५ । ४ । ६ पु० पाठः साध्यसाधनहेतुलक्षणमिति ३ पु० ।

† न्या० सू० अ० ५ आ० २ सू० ११ ।

‡ प्रतिज्ञानन्तरं हेतोरवसरे प्राप्ते तदकथनं पश्चादुदाहरणात्तत्कथनमिति न सूत्रार्थः । यथोक्तमर्थे हेतोर्हेत्वाभावेन तदाभासत्वानुपपत्तेः । कथितं च तस्मिन् हेतुलक्षणापाये हेत्वाभासत्वप्रसङ्गाल्लक्षणानाक्रान्ते चानैकान्तिकाद्यन्यतमत्वात्पृथक् कथनानुपपत्तेः पौनरुक्त्यापातात्स्वेत्यर्थः ।

§ तदेतच्छलं पराजयावस्थायां जल्पे प्रयोक्तव्यमित्युक्तम् । पराजयश्चैव पर्यनुयोगो ऽस्येति चोक्तम् । तत्र यथा पर्यनुयोगस्तथा दर्शयति निष्पादिततया भाष्यकारः अस्य प्रत्यवस्थानमिति । ता० टी० ।

तीति। एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्तव्यः। यस्माद्विशेषोऽर्थविशेषेषु* विज्ञायतेऽयमर्थोऽनेनाभिहित इति। स च विशेषो नास्ति। तस्मान्मिथ्यानियोगमात्रमेतदिति। प्रसिद्धश्च लोके शब्दार्थसम्बन्धोऽभिधानाभिधेयनियमनियोगः। अस्याभिधानस्यायमर्थोऽभिधेय इति समानः। सामान्यशब्दस्य विशेषो विशिष्टशब्दस्य प्रयुक्तपूर्वाश्चेमे शब्दा अर्थे प्रयुज्यन्ते नाप्रयुक्तपूर्वाः। प्रयोगश्चार्थसम्प्रत्ययार्थः अर्थप्रत्ययाच्च व्यवहार इति†। तत्रैवमर्थगत्यर्थे शब्दप्रयोगे सामर्थ्यात्सामान्यशब्दस्य प्रयोगनियमः। अजां ग्रामं नय सर्पिराहर ब्राह्मणं भोजयेति। सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते सामर्थ्याद्यत्रार्थक्रियादेशना सम्भवति तत्र प्रवर्तन्ते नार्थसामान्ये क्रियादेशनाऽसम्भवात्‡। एवमयं सामान्यशब्दो नवकम्बल इति योऽर्थः सम्भवति नवः कम्बलोऽस्येति तत्र प्रवर्तते यस्तु न सम्भवति नव कम्बला अस्येति तत्र न प्रवर्तते। सोऽयमनुपपद्यमानार्थकल्पनया परवाक्योपालम्भस्ते न कल्पत इति§।

**सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥**

अहो खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इत्युक्ते कश्चिदाह सम्भवति ब्राह्मणे विद्याचरणसम्पदिति। अस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्याऽसम्भूतार्थकल्पनया क्रियते। यदि ब्राह्मणे विद्याचरणसम्पत्सम्भवति व्रात्येऽपि सम्भवेत् व्रात्योऽपि ब्राह्मणः सोऽप्यस्तु विद्याचरणसम्पन्न इति। यद्विवक्षितमर्थमाप्नोति चात्येति च तदतिसामान्यम्। यथा ब्राह्मणत्वं विद्याचरणसम्पदं क्व चिदाप्नोति क्व चिदत्येति। सामान्यनिमित्तं छलं सामा

---

* अर्थविशेषेष्विति ४।२।३ नास्ति।

† एतदुक्तं भवति। न सङ्केतकरणावस्थायां वृद्धव्यवहारे वा कश्चिच्छब्दः कं चिदर्थं सङ्कुचाह्निकया बोधयति। अपि तु सामान्यद्वारेणार्थप्रकरणादिसहकारी विशेषे वर्तते। तस्माच्चैव प्रतिपादयितुरपराधो यदविशेषशब्दैर्विशेषान्तरं प्रतिपादयति। किं [redacted] सङ्केतस्यापराधो यो विशेषमपहाय सामान्ये शब्दानां वर्तते। तस्माद्यथासङ्केतं बोधयतामपराध्यः प्रयोक्तेति सिद्धम्। ता॰ टी॰।

‡ क्रियादेशना सम्भवेदिति ४।२।३ पाठः।

§ परवाक्योपालम्भो [redacted] कल्पत इति ३ पु॰ पाठः।

न्यच्छलमिति । अस्य च प्रत्यवस्थानम् । अविवक्षितहेतुकस्य विषयानुवादः प्रशंसार्थत्वाद् वाक्यस्य* तदत्रासम्भूतार्थकल्पनानुपपत्तिः यथा सम्भवन्त्यस्मिन्क्षेत्रे शालय इति । अनिराकृतमविवक्षितं च बीजजन्म प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते । सो ऽयं क्षेत्रानुवादो नास्मिन् शालयो विधीयन्त†-इति बीजात्तु शालिनिर्वृत्तिः सती न विवक्षिता । एवं सम्भवति ब्राह्मणे विद्याचरणसम्पदिति सम्पद्विषयो ब्राह्मणत्वं न सम्पद्धेतुः । न चात्र हेतुर्विवक्षितः विषयानुवादस्त्वयं प्रशंसार्थत्वाद् वाक्यस्य । सति ब्राह्मणत्वे सम्पद्धेतुः समर्थ इति विषयं च प्रशंसता वाक्येन यथाहेतुतः फलनिर्वृत्तिर्न प्रत्याख्यायते । तदेवं सति वचनविघातो ऽसम्भूतार्थकल्पनया नोपपद्यत इति ।

## धर्मविकल्पनिर्देशे ऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥

अभिधानस्य धर्मो यथार्थप्रयोगः । धर्मविकल्पो ऽन्यत्र दृष्टस्यान्यत्र प्रयोगः । तस्य निर्देशे धर्मविकल्पनिर्देशे । यथा मञ्चाः क्रोशन्तीति अर्थसद्भावेन प्रतिषेधः । मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्ति । का पुनरत्रार्थविकल्पोपपत्तिः । अन्यथा प्रयुक्तस्यान्यथा ऽर्थकल्पनं भक्त्या प्रयोगे प्राधान्येन कल्पनमुपचारविषयं छलमुपचारच्छलम् । उपचारो नीतार्थः सहचरणादिनिमित्तेनातद्भावे तद्वदभिधानमुपचार इति । अत्र समाधिः । प्रसिद्धे‡ प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरनुज्ञा प्रतिषेधो वा§ न छन्दतः ॥ प्रधानभूतस्य शब्दस्य भाक्तस्य च¶ गुणभूतस्य प्रयोग** उभयोर्लोकसिद्धः । सिद्धे प्रयोगे यथा वक्तुरभिप्रायस्तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा न छन्दतः । यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते यथाभूतस्याभ्यनुज्ञा प्रतिषेधो वा न

---

* विषयानुवादकः प्रशंसार्थत्वाद्वाक्यस्येति ३ पु० ।

† विदध्मो इति ४ । २ । ३ पाठः ।

‡ सिद्धे इति मु० पु० पा०        § वेति ४ । २ । ३ नास्ति ।

|| छलत इति ४ । ३ पाठः ।

¶ भाक्तस्येत्यिसारयति वक्तव्ये प्रधानग्रहणं सिद्धान्ततया दृष्टान्तलाभाय । लोकसिद्ध एषोपचारः कर्तव्यो नापूर्वो विना प्रयोजनं लोकसिद्धश्चायमुपचारो मञ्चाः क्रोशन्तीत्यर्थः । ता० टी० ।

** भाक्तस्य च प्रयोग इति ३ पु० पाठः ।

च्छन्दतः* । अथ गुणभूतं तदा गुणभूतस्य । यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति स्वमनीषया प्रतिषेधोऽसौ भवति न परोपालम्भ इति ।

वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥

न वाक्छलादुपचारच्छलं भिद्यते तस्याप्यर्थान्तरकल्पनाया अविशेषात् । इहापि स्थान्यर्थो गुणशब्दः प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यतइति ।

न †तदर्थान्तरभावात् ॥ १६ ॥

न ‡वाक्छलमेवोपचारच्छलं तस्यार्थसद्भावप्रतिषेधस्यार्थान्तरभावात् । कुतः । अर्थान्तरकल्पनातः । अन्या ह्यर्थान्तरकल्पना अन्योऽर्थसद्भावप्रतिषेध इति§ ।

अविशेषे वा किञ्चित्साधर्म्यादेकच्छल॥प्रसङ्गः ॥ १७ ॥

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते किञ्चित्साधर्म्यात् । यथा चायं हेतुस्त्रित्वं प्रतिषेधति तथा द्वित्वमप्यभ्यनुज्ञातं प्रतिषेधति । विद्यते हि किञ्चित्साधर्म्यं द्वयोरपीति । अथ द्वित्वं किञ्चित्साधर्म्यान्न निवर्तते त्रित्वमपि न निवर्त्स्यतीति ।

अत ऊर्द्ध्वम् ।

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥

प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते स जातिः¶ । स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति । उदाहरणसाधर्म्यात्सा-

* छलत इति ४ । ३ पाठः । † नैतदर्थान्तरभावादिति ४ । २ । ३ पाठः । अत्र ४ पुस्तके द्वितीयाध्यायप्रथमाह्निके ६ सू० ४० ५२ प० १४ धर्मशब्दनैत्यारभ्य ५५ पं १३ पर्यन्तेत्यन्तं प्रमादलिखितम् । ‡ न वाक्छलं तस्येति २ । ३ पाठः ।

§ एकत्र वस्तुसद्भावः प्रतिषिध्यते नैव क्रोष्टारो सन्त्वा इति । एकत्र वस्त्वभ्यनुज्ञाय कम्बलयोगमभ्युपगम्य कम्बलस्यानेकता धर्मः प्रतिषिध्यतइति । एकत्र धर्मः प्रतिषिध्यतेऽन्यत्र धर्मी सोऽयमतिमहान् विशेषः । न्या० वा० ।

|| छलस्येति १ पाठः ।

¶ न च छले साधर्म्यवैधर्म्ये स्तः । न च सम्यग्दूषणं साधर्म्यवैधर्म्याभावात् । अपि तु प्रयोगादित्तात प्रयुक्ते हेतौ तदाभासे वा यः प्रसङ्गो जायते सा जातिरिति । जल्पे हि वेदप्रामाण्यविद्वास प्रति कुहेतुना यदा नास्तिकैरधिवि-

ध्यसाधनं हेतुरित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम् । उदाहरणवैधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणसाधर्म्येण* प्रत्यवस्थानं प्रत्यनीकभावाज्जायमानो ऽर्थो जातिरिति ।

## विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः । विप्रतिपद्यमानः पराजयं प्राप्नोति निग्रहस्थानं खलु पराजयप्राप्तिः । अप्रतिपत्तिस्त्वारम्भविषये ऽप्यारम्भः । परेण स्थापितं वा न प्रतिषेधति प्रतिषेधं वा नोद्धरति । असमासाच्च नैते एव निग्रहस्थाने इति । किं पुनर्दृष्टान्तवत्†ज्जातिनिग्रहस्थानयोरभेदो ऽथ सिद्धान्तवद्भेद इत्यत आह ।

## तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वं ‡तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम् । नानाकल्पो विकल्पः विविधो वा कल्पो विकल्पः । तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम् । शेषस्तु विप्रतिपत्तिरिति ।

इमे प्रमाणादयः पदार्था उद्दिष्टा यथोद्देशं लक्षिता यथालक्षणं परीक्षिष्यन्त इति त्रिविधा ऽस्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमो ऽध्यायः ।

—o—

एते सदुत्तरं चास्य यद्वा सहसा न स्फुरति तदैतज्जातीनां सत्प्रतिपक्षाणां मा भूद्देशामामायपुर्तिरिति जात्यापि प्रत्यवस्थेयम् । क्व चित्पुनरसदुत्तरमेव हेतो हेत्वाभासे वा जातिप्रयोगः सम्भवतीति । जायमानो ऽर्थ इति पदद्वयमुत्पत्तिनिमित्ति दर्शितम् । ता० टी० ।

* उदाहरणवैधर्म्येणेति ३ पाठः ।

† यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेदस्तथापि तद्दयाभेदाभिप्रायेणाभेद उक्तः । ता० टी० ।

‡ जातिविकल्पाज्जातिबहुत्वमिति ३ पु० ।

च्छन्दतः* । अथ गुणभूतं तदा गुणभूतस्य । यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति स्वमनीषया प्रतिषेधो ऽसौ भवति न परोपालम्भ इति ।

**वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥**

न वाक्छलादुपचारच्छलं भिद्यते तस्याप्यर्थान्तरकल्पनाया अविशेषात् । इहापि स्थान्यर्थो गुणशब्दः प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यतइति ।

**न †तदर्थान्तरभावात् ॥ १६ ॥**

न ‡वाक्छलमेवोपचारच्छलं तस्यार्थसद्भावप्रतिषेधस्यार्थान्तरभावात् । कुतः । अर्थान्तरकल्पनात् । अन्या ह्यर्थान्तरकल्पना अन्यो ऽर्थसद्भावप्रतिषेध इति§ ।

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छल||प्रसङ्गः ॥ १७ ॥**

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते किञ्चित्साधर्म्यात् । यथा चायं हेतुस्त्रित्वं प्रतिषेधति तथा द्वित्वमप्यभ्यनुज्ञातं प्रतिषेधति । विद्यते हि किञ्चित्साधर्म्यं द्वयोरपीति । अथ द्वित्वं किञ्चित्साधर्म्यान्न निवर्तते त्रित्वमपि न निवर्त्स्यतीति ।

अत ऊर्द्ध्वम् ।

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥**

प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते स जातिः¶ । स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति । उदाहरणसाधर्म्यात्सा-

---

* छलत इति ४ । ३ पाठः ।  † नैतदर्थान्तरभावादिति १ । २ । ३ पाठः । अत्र ४ पुस्तके द्वितीयाध्यायप्रथमाह्निके ६ सू० पृ० ५३ प० १४ धर्मशब्देनेत्यारभ्य ५५ पृ० १३ पङ्क्त्यन्तं प्रमादाल्लिखितम् ।  ‡ न वाक्छलं तस्येति २ । ३ पाठः ।

§ एकत्र वस्तुसद्भावः प्रतिषिध्यते नैव क्रोष्टारो मञ्चा इति । एकत्र वस्त्वभ्यनुज्ञाय कम्बलयोगमभ्युपगम्य कम्बलस्यानेकता धर्मः प्रतिषिध्यतइति । एकत्र धर्मः प्रतिषिध्यते ऽन्यत्र धर्मी सो ऽयमतिमहान् विशेषः । न्या० वा० ।

|| छलस्येति १ पाठः ।

¶ न च छले साधर्म्यवैधर्म्ये स्तः । न च सम्यग्दूषणं साधर्म्यवैधर्म्यमात्रात् । अपि तु प्रयोगादौ प्रयुक्ते हेतौ तदाभासे वा यः प्रसङ्गो जायते सा जातिरिति । जल्पे हि वेदप्रामाण्यविदुषः प्रति कुहेतुना यदा नास्तिकैरभिधि-

ध्यसाधनं हेतुरित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम् । उदाहरणवैधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणसाधर्म्येण* प्रत्यवस्थानं प्रत्यनीकभावाज्जायमानो ऽर्थो जातिरिति ।

## विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः । विप्रतिपद्यमानः पराजयं प्राप्नोति निग्रहस्थानं खलु पराजयप्राप्तिः । अप्रतिपत्तिस्त्वारम्भविषये ऽप्यनारम्भः । परेण स्थापितं वा न प्रतिषेधति प्रतिषेधं वा नोद्धरति । असमासाच्च नैते एव निग्रहस्थाने इति । किं पुनर्दृष्टान्तव†ज्जातिनिग्रहस्थानयोरभेदो ऽथ सिद्धान्तवद्भेद इत्यत आह ।

## तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वं ‡तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम् । नानाकल्पो विकल्पः विविधो वा कल्पो विकल्पः । तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम् । शेषस्तु विप्रतिपत्तिरिति ।

इमे प्रमाणादयः पदार्था उद्दिष्टा यथोद्देशं लक्षिता यथालक्षणं परीक्षिष्यन्त इति त्रिविधा ऽस्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमो ऽध्यायः ।

—o—

एते सदुत्तरं वास्य यदा सहसा न स्फुरति तदेतराणां जनाधाराणां मा भूद्वेदाप्रामाण्यबुद्धिरिति ज्ञात्वापि प्रत्यवस्थेयम् । क्वचित्पुनरसदुत्तरं दूषणमेव हेतौ हेत्वाभासे वा जातिप्रयोगः सम्भवतीति । जायमानो ऽर्थ इति पदव्युत्पत्तिनिमित्तं दर्शितम् । ता० टी० ।

* उदाहरणवैधर्म्येणेति २ पाठः ।

† यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेदस्तथापि लक्षणाभेदाभिप्रायेणाभेद उक्तः । ता० टी० ।

‡ जातिविकल्पाज्जातिबहुत्वमिति २ पु ।

अत ऊर्ध्वं प्रमाणादिपरीक्षा सा च विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इत्यग्रे *विमर्श एव परीक्ष्यते ।

**समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ॥ १ ॥**

समानस्य धर्मस्याध्यवसायात्संशयो न धर्ममात्रात्† । अथ वा समानमनयोर्धर्ममुपलभ‡ इति धर्मधर्मिग्रहणे संशयाभाव§ इति । अथ वा समान‖धर्माध्यवसायादर्थान्तरभूते धर्मिणि संशयो ऽनुपपन्नः न जातु रूपस्यार्थान्तरभूतस्याध्यवसायादर्थान्तरभूते स्पर्शे संशय इति । अथ वा नाध्यवसायादर्थावधारणादनवधारणज्ञानं संशय उपपद्यते कार्यकारणयोः सारूप्याभावादिति । एतेनानेकधर्माध्यवसायादिति व्याख्यातम् । अन्यतरधर्माध्यवसायाच्च संशयो न भवति । ततो ह्यन्यतरावधारणमेवेति ।

**विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ २ ॥**

न विप्रतिपत्तिमात्रादव्यवस्थामात्राद्वा संशयः किं तर्हि विप्रतिपत्तिमुपलभमानस्य¶ संशय एवमव्यवस्थायामपीति । अथ वा ऽस्त्या**त्मेत्येके नास्त्यात्मेत्यपरे मन्यन्त इत्युपलब्धः†† कथं संशयः स्यादिति । अथो‡‡पलब्धि-

---

* उद्देशलक्षणयोरनन्तरं परीक्षावसरे प्रमाणपरीक्षायाः पाठक्रमेण प्राप्तावसरत्वेऽपि प्रमाणानां निर्णय प्रत्ययोगित्वात्संशयस्य तत्र पूर्वभावित्वात्तदर्थक्रमेण पूर्वोपस्थितः संशय एव परीक्ष्यत इत्यर्थः । यद्यपि निर्णयमात्रस्य न संशयपूर्वकत्वमिति भाष्ये प्रतिपादितं तथापि शास्त्रार्थनिर्णयस्य विचारपूर्वकत्वाद् विचारस्य च संशयपूर्वकत्वनियमादुक्त संशयपरीक्षायाः प्राधान्यमिति वार्तिकम् ।

† अज्ञायमानस्य धर्ममात्रस्य संशयं प्रत्यहेतुत्वात्तदवधारणे निश्चयस्य संशयविरोधित्वस्वाभाव्येन संशयहेतुत्वानुपपत्तिरिति भावः ।

‡ उपलभ्य इति ५ । ३ पाठः ।

§ धर्मस्योभयानुगतस्यैकान्तपक्षे वस्तुत उभयानुगतधर्मग्रहणेऽपि संशयानुत्पत्तेरुभयानुगतस्य धर्मस्य विशेषणतया धर्मिणो ऽध्यवधृतत्वात्तद्विषये संशयो ऽनुपपन्न इति भावः ।

‖ समानधर्मस्य कनककलशस्य शब्दे ऽध्यवसाये ऽपि तत्समानाधिकरणघटत्वादिप्रकारकसंशयानुत्पत्तेः समानधर्मानध्यवसाये ऽपि प्रकारान्तरेण विरुद्धाव्यभिचारिधर्मसन्निपाते तस्यानुपलब्धेः संशयोत्पत्त्या ऽव्यापकत्वात्समानधर्मोपलब्धेः संशयं प्रति न हेतुत्वमिति वार्तिकम् ।

¶ स्वरूपतः विप्रतिपत्तेः संशयाहेतुत्वात्तदध्यवसायस्य च प्रागुक्तरीत्या संशयहेतुत्वाभाव इति भावः ।

** अस्त्यात्मेत्येके परे नास्त्यात्मेति ५ । ७ । ८ । ३ पाठः ।

†† उपलब्धेरिति ५ । ७ पाठः ।

‡‡ तथेति ५ । २ । ४ पाठः ।

रव्यवस्थिता अनुपलब्धिश्चाव्यवस्थितेति विभागेनाध्यवसिते* संशयो नोपपद्यतइति ।

## विप्रतिपत्तौ च संप्रतिपत्तेः† ॥ ३ ॥

यां च विप्रतिपत्तिं भवान् संशयहेतुं मन्यते सा संप्रतिपत्तिः सा हि द्वयोः प्रत्यनीकधर्मविषया । तत्र यदि विप्रतिपत्तेः संशयः संप्रतिपत्तेरेव संशय इति ।

## अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः‡ ॥ ४ ॥

न संशयः । यदि तावदियमव्यवस्था§ आत्मन्येव व्यवस्थिता‖ व्यवस्थानादव्यवस्था न भवतीत्यनुपपन्नः संशयः अथ व्यवस्था ऽऽत्मनि न व्यवस्थिता एवमतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति ।

## तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः¶ ॥ ५ ॥

येन कल्पेन भवान् समानधर्मोपपत्तेः संशय इति मन्यते** तेन खल्वत्यन्तसंशयः प्रसज्यते समानधर्मोपपत्तेरनुच्छेदात्संशयानुच्छेदः । न ह्ययमतद्धर्मा धर्मी विमृश्यमानो गृह्यते†† सततं तु तद्धर्मा भवतीति । अस्य प्रतिषेधप्रपञ्चस्य संक्षेपेणोद्धारः ।

## यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा‡‡ ॥ ६ ॥

न संशयानुत्पत्तिः§§ संशयानुच्छेद एव‖‖ प्रसज्यते । कथं यत्तावत् समानधर्माध्यवसायः संशयहेतुः न समानधर्ममात्रमिति एवमेतत्कस्मा-

* विभागेनाध्यवसिते इति १ पा० ।

† न विप्रतिपत्तिरस्तीति सूत्रार्थः । न्या० वा० । प्रत्येकं वादिनोः सिद्धान्तव्यवस्थानादिति भावः ।

‡ नाव्यवस्था सिद्ध्यतइति सूत्रार्थः । न्या० वा० ।

§ अव्यवस्थाऽऽत्मनि व्यवस्थानादव्यवस्था न भवतीति २ । ४ पा० ।

‖ आत्मनि व्यवस्थानादिति ४ पा० ।

¶ समानधर्मादीनां सातत्यान्नित्यसंशय इति सूत्रार्थः । न्या० वा० ।

** मन्यते तेन खल्वत्यन्तसंशयः तथात्यन्तसंशयः प्रसज्यतइति २ । ४ पा० ।

†† विमृश्यमानो भवते इति ५ । ३ पा० ।

‡‡ न सूत्रार्थापरिज्ञानादिति सूत्रार्थः । न्या० वा० ।

§§ संशयानुपपत्तिरिति ५ पा० ।

‖‖ चेति ५ । ४ । २ । ३ पा० ।

देशं नोच्यते इति विशेषापेक्ष इति वचनात्सिद्धेः। विशेषस्यापेक्षा ऽऽकाङ्क्षा सा चानुपलभ्यमाने विशेषे समर्था। न चोक्तं समानधर्मापेक्ष इति समाने च धर्मे कथमाकाङ्क्षा न भवेद् यद्ययं प्रत्यक्षः स्यात्। एतेन सामर्थ्येन विज्ञायते समानधर्माध्यवसायादिति।

उपपत्तिवचनाद्वा। समानधर्मोपपत्तेरित्युच्यते न चान्या सद्भावसंवेदनादृते समानधर्मोपपत्तिरस्ति। अनुपलभ्यमानसद्भावो हि समानो धर्मो ऽविद्यमानवद्भवतीति। विषयशब्देन वा विषयिणः प्रत्ययस्याभिधानं यथा लोके धूमेनाग्निरनुमीयत इत्युक्ते धूमदर्शनेनाग्निरनुमीयत इति ज्ञायते कथ दृष्ट्वा हि धूममथाग्निमनुमिनोति नादृष्ट्वा न च वाक्ये दर्शनशब्दः श्रूयते अनुजानाति च वाक्यस्यार्थप्रत्यायकत्वं तेन मन्यामहे विषयशब्देन विषयिणः प्रत्ययस्याभिधानं बोद्धा ऽनुजानात्येवमिहापि समानधर्मशब्देन समानधर्माध्यवसायमाहेति यथोहित्वा समानमनयो*र्धर्ममुपलभत इति। धर्मधर्मिग्रहणे संशयाभाव इति पूर्वदृष्टविषयमेतत्। यावहमर्थौ पूर्वमद्राक्षं तयोः समानं धर्ममुपलभे विशेषं नोपलभ इति कथं नु विशेषं पश्येयं येनान्यतरमवधारयेयमिति। न चैतत् समानधर्मोपलब्धौ धर्मधर्मिग्रहणमात्रेण निवर्तत इति। †यच्चोक्तं नार्थान्तराध्यवसायादन्यत्र संशय इति यो ह्यर्थान्तराध्यवसायमात्रं संशयहेतुमुपाददीत स एवं वाच्य‡ इति। यत्पुनरेतत्कार्यकारणयोः सारूप्याभावादिति कारणस्य भावाभावयोः कार्यस्य भावाभावौ कार्यकारणयोः §सारूप्यम्। यस्योत्पादाद्यदुत्पद्यते यस्य चानुत्पादाद्यन्नोत्पद्यते

---

* अनयोरिति ४। ७ पाठः।  † यच्चोक्तमिति ५। ४। ३ पाठः।

‡ न ह्यर्थान्तरभावमात्रं मया संशयहेतुत्वेनोपादीयत इति किं त्वर्थान्तरविशेषः। कः पुनरयं विशेषः धर्मधर्मिभावः। धर्मेऽप्यलब्धे धर्मिणि संशय इति परिहारं मन्यन्ते न पुना रूपस्पर्शयोर्धर्मधर्मिभाव इति। अयं च परिहारो न युक्त इति पश्यामः। किं कारणम्। अर्थान्तरभावस्यानिवृत्तेः। यथैव रूपस्पर्शयोरर्थान्तरभावस्तथा धर्मधर्मिणोरपीति न युक्तो ऽर्थान्तरदर्शनादर्थान्तरे संशयः। अत्रापि तदेवोत्तरं नानभ्युपगमादिति। न ब्रूमो ऽर्थान्तरदर्शनादर्थान्तरे धर्मिणि सन्देहः अपि तु समानधर्मादिविशिष्टधर्मिदर्शनाद्विशेषवति धर्मिण्येव संशय इति। न्या० वा०।

§ विशेषानवधारणमुभयोः सारूप्यम्। यथैव समानधर्मदर्शनेन विशेषो नावधार्यते तथा संशयेनापीति। कारणसद्भावात्कार्यसद्भाव इति न सारूप्यनिर्दे-

तत्कारणं कार्यमितरदित्येतत्साधर्म्यमस्ति च संशयकारणं संशये चैतदिति । एतेनानेकधर्माध्यवसायादिति प्रतिषेधः परिहृत इति । यत्पुनरेतदुक्तं विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च न संशय इति । पृथक्प्रवादयोर्व्याहतमर्थमुपलभे विशेषं च न जानामि नोपलभे येनान्यतरमवधारयेयं तत्को ऽत्र विशेषः स्याद्येनैकतरमवधारयेयमिति संशयो विप्रतिपत्तिजनितो ऽयं न शक्यो विप्रतिपत्तिसंशयमात्रेण* निवर्तयितुमिति । एवमुपलब्ध्यनुपलब्ध्यव्यवस्थाकृते संशये वेदितव्यमिति । यत्पुनरेतद्विप्रतिपत्तौ† संप्रतिपत्तेरिति विप्रतिपत्तिशब्दस्यार्थः‡ । तदध्यवसायो विशेषापेक्षः संशयहेतुस्तस्य च समाख्यान्तरेण न निवृत्तिः समाने ऽधिकरणे व्याहतार्थौ प्रवादौ विप्रतिपत्तिशब्दस्यार्थः तदध्यवसायो§ विशेषापेक्षः संशयहेतुः न चास्य समाख्यान्तरे योज्यमाने संशयहेतुत्वं निवर्तते तदिदमकृतबुद्धि||संमोहनमिति¶ । यत्पुनरव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया** इति संशयहेतोरर्थस्याप्रतिषेधादव्यवस्थाभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दान्तरकल्पना । व्यर्था शब्दान्तरकल्पना व्यवस्था खलु व्यवस्था†† न भवत्यव्यवस्थात्मनि व्यवस्थितत्वादिति । नानये उपलब्ध्यनुपलब्ध्योः सदसद्विषयत्वं विशेषापेक्षः‡‡ संशयहेतुर्न भवतीति प्रतिषेध्यते यावता चाव्यवस्थात्मनि व्यवस्थिता न तावता ऽऽत्मानं जहाति तावता ह्यनुज्ञाता व्यवस्था

---

षो ऽयमपि तु कार्यकारणधर्मनिर्देशः तथा च कार्यान्तरेष्वपि तदस्तीति । न हि किं चित्कार्यं कारणसद्भावमन्तरेण सम्भवतीति । न्या॰ वा॰ । यत्तु समानधर्मस्य कृतकत्वस्य शब्दे दर्शने ऽपि संशयानुत्पत्तेः हेतुत्वं तस्येति तत्र समानार्थापरिज्ञानात् हि कृतकत्वं समानो धर्मो ऽन्यथा समानधर्मस्याभिधानात् । समानो धर्म इति विवक्षिततज्ज्ञातोपान्त्यवृत्तिर्यः स समानो न पुनः कृतकत्वमेवम् । विरुद्धाव्यभिचारिधर्माध्यवसायस्य च संशयहेतुत्वानुपगमात्संशयहेतुतायाः समानधर्माध्यवसानमात्रे ऽनङ्गीकाराच्च न व्यभिचारशङ्का ।

* विप्रतिपत्तिसंप्रतिपत्तिमात्रेणेति । मु॰ ३ पा॰ ।

† तद्विप्रतिपत्तौ चेति ५ । २ । ३ पाठः ।

‡ शब्दस्य चार्थ इति ५ । २ । ३ पा॰ ।

§ तदध्यवसायश्चेति ५ । २ । ३ पा॰ ।

|| अकृतबुद्धिमिति ५ । २ । ३ पाठः ।

¶ विप्रतिपत्तेः प्रत्येकं वादिद्वयस्य संप्रतिपत्तिरूपत्वे ऽपि चेतुमस्तदवस्थे ऽभयथाने संशयोत्पत्तेः विप्रतिपत्तिशब्दव्याख्यतामात्रेण दूषणापत्त्यासत्वानौचित्यादिति भावः ।

** व्यवस्थितत्वाच्चाव्यवस्थाया इति ५ । २ । ३ पा॰ ।

†† व्यवस्थेति ५ । २ पुस्तकयोर्नास्ति ।

‡‡ विशेषापेक्षमिति ५ । २ । ३ पाठः ।

एवमियं क्रियमाणापि शब्दान्तरकल्पना नार्थान्तरं साधयतीति*। यत्पुनरेतदुक्तमत्यन्तसंशयः तद्धर्मसातत्योपपत्तेरिति नायं समानधर्मादिभ्य एव संशयः किं तर्हि तद्विषयाध्यवसायाद् विशेषस्मृतिसहितादित्यतो नात्यन्तसंशय इति। अन्यतरधर्माध्यवसायाद्वा न संशय इति तन्न युक्तं विशेषापेक्षो विमर्शः संशय इति वचनात्। विशेषश्चान्यतरधर्मो न तस्मिन्नध्यवसीयमाने विशेषापेक्षा सम्भवतीति†।

**यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः‡ ॥ ७ ॥**

यत्र यत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा तत्र§ तत्रैवं संशये परेण प्रतिषिद्धे समाधिर्वाच्य इति। अतः सर्वपरीक्षाव्यापित्वात् प्रथमं संशयः परीक्षित इति। अथ प्रमाणपरीक्षा||।

**¶प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः** ॥ ८ ॥**

प्रत्यक्षादीनां प्रमाणत्वं†† नास्ति त्रैकाल्यासिद्धेः पूर्वापरसहभावानुपपत्तेरिति। अस्य‡‡ सामान्यवचनस्यार्थविभागः।

**पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षोत्पत्तिः ॥ ९ ॥**

गन्धादिविषयं ज्ञानं प्रत्यक्षं तद्यदि पूर्वं पश्चाद्गन्धादीनां सिद्धिः नेदं गन्धादिसंनिकर्षादुत्पद्यत§§ इति।

---

* अव्यवस्थाया आत्मनि व्यवस्थितत्वेन व्यवस्थितपदप्रतिपाद्यत्वेऽपि नाव्यवस्थात्वनिवृत्तिः निमित्तान्तरसमावेशात्तेनास्य शब्दान्तरकरणे ऽपि स्वरूपानपायात्।

† अन्यतरधर्मज्ञानमात्रं संशयहेतुर्न तद्विशेष इति भावः।

‡ कोऽस्य सूत्रस्यार्थः। स्वयं न संशयः प्रतिषेद्धव्यः परेण तु संशये प्रतिषिद्धे एवमुत्तरं वाच्यमिति। न्या० वा०।

§ तत्र तत्रेति ४। २। ३ पा०।

|| किं पुनरेषां परीक्ष्यम्। आदौ तावत्सम्भवः किं प्रमाणानि सन्त्यथ न सन्तीति। मतभेदात् सामान्यात्प्रमेयत्वाद्विशेषादर्शनाच्च संशयः। न्या० वा०।

¶ व्युदस्य संशयं परः पक्षपरिग्रहेणावतिष्ठते। न्या० वा०।

** अस्यार्थः त्रिष्वपि कालेषु प्रमाणानि नार्थं साधयन्तीति। न्या० वा०।

†† प्रामाण्यमिति ४। ४। ३ पा०।  ‡‡ अर्थेति ४। ४। २। ३ पा०।

§§ नेन्द्रियार्थसन्निकर्षापेक्षं ज्ञानमिति सूत्रार्थं व्याघातो दोषः। यदि पूर्वं ज्ञानं नेन्द्रियार्थसन्निकर्षस्य कार्यमिति यदुक्तमिन्द्रियार्थसन्निकर्षोत्पन्नमिति तद् व्याहन्यते। न्या० वा०।

पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः* ॥ १० ॥

असति प्रमाणे केन प्रमीयमाणोऽर्थः प्रमेयः स्यात् प्रमाणेन खलु प्रमीयमाणोऽर्थः प्रमेयमित्येतत्सिध्यति† ।

युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् ॥ ११ ॥

यदि प्रमाणं प्रमेयं च युगपद्भवतः एवमपि गन्धादिष्विन्द्रियार्थेषु ज्ञानानि प्रत्यर्थनियतानि युगपत्सम्भवन्तीति ज्ञानानां प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावः । या इमा बुद्धयः क्रमेणार्थेषु वर्तन्ते तासां क्रमवृत्तित्वं न सम्भवतीति‡ । व्याघातश्च युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति । एतावांश्च प्रमाणप्रमेययोः सद्भावविषयः स चानुपपन्न इति तस्मात्प्रत्यक्षादीनां प्रमाणत्वं न सम्भवतीति ।

अस्य समाधिः । उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद्यथादर्शनं विभागवचनम् । क्वचिदुपलब्धिहेतुः पूर्वं पश्चादुपलब्धिविषयः । यथा|| ऽऽदित्यस्य प्रकाशः । उत्पद्यमानानां क्वचित्पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुः यथावस्थितानां प्रदीपः ।

* यद्यपि स्वरूपं न प्रमाणाधीनं तथाऽपि तस्य प्रमेयत्वं तदधीनं तदपि चेत्प्रमाणात्पूर्वं न प्रमाणयोगनिबन्धनं स्यादित्यर्थः । ता० टी० ।

† न प्रमाणनिमित्ता प्रमेयसंज्ञेति व्याघातः । प्रमाणमन्तरेण न प्रमेयमात्मानं लभत इति न प्रमाणायत्ता प्रमेयसिद्धिः । न्या० वा० ।

‡ इन्द्रियार्थानां बुद्धीनां च सन्निपाते सति युगपद्भाव इति क्रमवृत्तित्वं दृष्टं न स्यादिति व्याघातो दोषः । युगपज्ज्ञानानुत्पत्तिरित्युक्तं सह व्याहन्यते । न्या० वा० ।

§ अस्य वाक्यस्यासिद्धतो हि साधनमर्थः । न्या० वा० । अर्थसाधकत्वस्य भावकानां प्रत्यक्षादीनामर्थसाधकत्वं नेति व्याघातः । प्रामाण्यमात्रप्रतिषेधे च धर्मिणो ऽप्रतिषेधात् स्वरूपेण सिद्धिः प्रत्यक्षादीनाम् । यदि च प्रमाणमनेकान्तधर्मोपेतानां प्रत्यक्षादीनां प्रामाण्ये निषिद्धे कुतः स्वरूपसिद्धिरित्युच्यते तर्हि साधकस्यापि प्रमाणत्वानुपपत्तेरप्रमाणेनाप्रामाण्यसाधनासम्भवः । साधकस्य प्रामाण्याभ्युपगमे च बाध- । प्रत्यक्षादीनां प्रामाण्यप्रतिषेधाप्रामाण्येषां प्रामाण्याभ्युपगमनाभावेनो व्याघातः तत्साधकप्रमाणविशेषोपन्यासे तेनाभ्युपगतप्रामाण्येनानुमानादिना बाध- । स्वयुक्तेनैव हेतुना स्वपूर्वपक्षस्यासाधकस्य साधनस्याप्रमाणतापत्त्याप्रमाणे साध्यासिद्धिश्च । प्रामाण्यस्य धर्मस्य धर्मिणो भेदाभ्युपगमेन धर्मप्रतिषेधे धर्मिणो ऽपि प्रतिषेध इत्युक्तौ च प्रत्यक्षादीनामिति षष्ठ्यर्थानुपपत्तिः प्रामाण्यमिति भावप्रत्ययानुपपत्तिश्च । हेतुत्वेनोपन्यस्तायाः त्रैकाल्यासिद्धेस्त्रैकाल्यानिषेधस्य साध्यैकाधिकरण्यादसाधकत्वम् । कालत्रये स्वरूपमात्रस्याभावस्य सदर्थत्वं साध्यादविशेष इति वार्तिकम् ।

|| यथा ऽऽदित्यप्रकाशे ५ । १ । ३ वा० ।

क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह भवतः यथा धूमेनाग्नेर्ग्रहणमिति । उपलब्धिहेतुश्च प्रमाणं प्रमेयं तूपलब्धिविषयः । एवं प्रमाणप्रमेययोः पूर्वापरसहभावे ऽनियते यथा ऽर्थो दृश्यते तथा विभज्य वचनीय इति । तत्रैकान्तेन प्रतिषेधानुपपत्तिः । सामान्येन खलु विभज्य प्रतिषेध उक्त इति ।

**समाख्याहेतोस्त्रैकाल्ययोगात्तथाभूता समाख्या ।** यत्पुनरिदं पश्चात्सिद्धौ* च सति प्रमाणे प्रमेयं न सिध्यति प्रमाणेन प्रमीयमाणो ऽर्थः प्रमेयमिति विज्ञायतइति प्रमाणमित्येतस्याः समाख्याया उपलब्धिहेतुत्वं निमित्तं तस्य त्रैकाल्ययोगः । उपलब्धिमकार्षीदुपलब्धिं करोति उपलब्धिं करिष्यतीति समाख्याहेतोस्त्रैकाल्ययोगात् समाख्या तथाभूता । प्रमितो ऽनेनार्थः प्रमीयते प्रमास्यतइति प्रमाणम् । प्रमितं प्रमीयते प्रमास्यते इति च प्रमेयम् । एवं सति भविष्यत्यस्मिन् हेतुत उपलब्धिः । प्रमास्यते ऽयमर्थः प्रमेयमिदमित्येतत्सर्वं भवतीति ।

**त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्तिः ।** यश्चैवं नाभ्यनुजानीयात्तस्य पाचकमानय पक्ष्यति लावकमानय लविष्यतीति व्यवहारो नोपपद्यतइति । प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरित्येवमादिवाक्यं प्रमाणप्रतिषेधः । तत्रायं प्रष्टव्यः अथानेन प्रतिषेधेन भवता किं क्रियतइति । किं सम्भवो निवर्त्यते अथासम्भवो ज्ञाप्यतइति । तद्यदि सम्भवो निवर्त्यते सति सम्भवे प्रत्यक्षादीनां प्रतिषेधानुपपत्तिः । अथासम्भवो ज्ञाप्यते प्रमाणलक्षण†प्राप्तस्तर्हि प्रतिषेधः प्रमाणासम्भवस्योपलब्धिहेतुत्वादिति‡ । किं चातः ।

**त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः§ ॥ १२ ॥**

अस्य तु विभागः पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किं|| प्रतिषिध्यते । पश्चात्सिद्धौ प्रतिषेध्यासिद्धिः प्रतिषेधाभावादिति युगपत्सिद्धौ

---

* सिद्धावसति प्रमाणे इति- ५।४।२।३ पा- । † लक्षणमिति ५।४।२।३ पा- ।

‡ प्रमाणानि पक्षीकृत्यासत्ता शून्यत्वं वा साध्यते । आद्ये पक्षतावच्छेदकरूपेण पक्षसिद्धावेव तत्र साध्यसाधनसम्भवात्तत्सद्भावाभ्युपगमे तेनैव बाधः । द्वितीये ऽपि पक्षतावच्छेदकस्य प्रमाणस्याभ्युपगमे तेनैव बाधः । साधनस्य च प्रामाण्यानुपगमे ऽप्रमाणेन साधनासम्भवः प्रामाण्याभ्युपगमे तेनैव बाध इति भावः ।

§ भवदुपन्यस्तहेतोः प्रतिषेधे ऽपि सत्त्वेन तेन साधनासम्भवाद् व्याघात इति भावः ।

|| किमनेनेति ५।४।२।३ पा- ।

प्रतिषेध्य*सिद्ध्यभ्यनुज्ञानादनर्थकः प्रतिषेध इति । प्रतिषेधलक्षणे च वाक्ये ऽनुपपद्यमाने सिद्धं प्रत्यक्षादीनां प्रामाण्यं†मिति ॥

## सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥

कथं त्रैकाल्यासिद्धेरित्यस्य हेतोर्यद्युदाहरणमुपादीयते हेत्वर्थस्य साधकत्वं दृष्टान्ते दर्शयितव्यमिति । न च तर्हि प्रत्यक्षादीनामप्रामाण्यम् । अथ प्रत्यक्षादीनामप्रामाण्य‡मुपादीयमानमप्युदाहरणं नार्थं साधयिष्यतीति । सोऽयं सर्वप्रमाणैर्व्याहतो हेतुरहेतुः सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध§ इति । वाक्यार्थो ह्यस्य सिद्धान्तः । स च वाक्यार्थः प्रत्यक्षादीनि नार्थं साधयन्तीति इदं चावयवानामुपादानमर्थस्य साधनायेति । अथ नोपादीयते अप्रदर्शितहेत्वर्थस्य दृष्टान्तेन साधकत्वमिति निषेधो|| नोपपद्यते हेतुत्वासिद्धे¶रिति ॥

## **तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥

प्रतिषेधलक्षणे स्ववाक्ये तेषामवयवाश्रितानां प्रत्यक्षादीनामप्रामाण्ये ऽभ्यनुज्ञायमाने परवाक्ये ऽप्यवयवाश्रितानां प्रामाण्यं प्रसज्यते अविशेषा-

---

* प्रतिषेधेति ४।२।३ पा०।

† प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः प्रत्यक्षादीनां प्रमाणत्वासिद्धेरिति च वाक्ययोरेकार्थत्वं भिन्नार्थत्वं वा । आद्ये प्रत्यक्षादीनां प्रामाण्यमित्येव कस्मान्नोच्यते । कुतश्च तयोरेकार्थतावगमः । यदि प्रमाणतस्तर्हि व्याघातः । अथ प्रमाणान्तरात्तर्हि संज्ञाभेदमात्रं साधकप्रमाणाभ्युपगमात् । भिन्नार्थत्वेऽपि तस्ये प्रमाणोपन्यासे तथैव व्याघातः । प्रत्यक्षादीनि न सन्तीति वाक्येन चान्यत्र प्रसिद्धे घटे यथादिसम्बन्धस्याभाव इवान्यत्र प्रसिद्धेषु प्रमाणेषु सामर्थ्यप्रतिषेध एवोच्येत न तु प्रमाणस्वरूपाभावो ।अप्रसिद्धप्रतियोगिकस्याभावस्यानभ्युपगमात् । प्रमाणस्वरूपस्याभ्युपगमे तु व्याघातः । प्रमाणानां बाधकत्वं प्रतिपाद्यमानं केन कथं कं प्रति चेति वक्तव्यम् । तत्र प्रतिपाद्यस्य प्रतिपादयितुः प्रतिपादकहेतोश्च तेषां च भेदस्य प्रामाणिकत्वे तेनैव बाधः । अनभ्युपगमे प्रतिपादनानुपपत्तिः इति दिक् ।

‡ अथ प्रत्यक्षादीनामप्रामाण्यमिति ४।२ पुस्तकयोर्नास्ति ।

§ गौ० सू० अ० १ आ० २ सू० ४७ । || प्रतिषेध इति ४।४।२ पा० ।

¶ बुद्धिविवक्षाप्रयत्नवाय्वदीरणताल्वभिघातोष्ठस्पन्दादीन्यपर्जयन् बुद्ध्या वाक्यमुच्चारयसि स्थाणुकण्टकसर्पादीन् परिहरन् पादविहरणादीनि करोषि ते एते वाक्यप्रवृत्ती प्रमाणप्रतिषेधाच्च सम्भवत इति न्या० वा० ।

** यदि माध्यमिको ब्रूयात् प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरिति स्वप्रयोगावयवाश्रितानि यथालोकप्रतीतिसिद्धानि तैरविचारितसिद्धैरितरेषां प्रामाण्यं प्रतिषिध्यत इति तत्रेदमुच्यते । ता० टी० ।

दिति। एवं च न सर्वाणि प्रमाणानि प्रतिषिध्यन्तइति विप्रतिषेध इति वीत्ययमुपसर्गः सम्प्रतिपत्त्यर्थे न व्याघाते ऽर्थाभावादिति* ॥

त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५ ॥

किमर्थं पुनरिदमुच्यते पूर्वोक्तनिबन्धनार्थम्†। यत्तावत्पूर्वोक्तमुपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शनं विभागवचनमिति तदितःसमुत्थानं यथा विज्ञायेत। अनियमदर्शी खल्वयमृषिर्नियमेन प्रतिषेधं प्रत्याचष्टे त्रैकाल्यस्य‡ चायुक्तः प्रतिषेध इति। तत्रैकां विधामुदाहरति शब्दादातोद्यसिद्धिवदिति। यथा पश्चात्सिद्धेन शब्देन पूर्वसिद्धमातोद्यमनुमीयते साध्यं चातोद्यं साधनं च शब्दः अन्तर्हिते ह्यातोद्ये स्वनतो ऽनुमानं भवतीति। वीणा वाद्यते वेणुः पूर्यत इति स्वनविशेषेण आतोद्यविशेषं प्रतिपद्यते। तथा पूर्वसिद्धमुपलब्धिविषयं पश्चात्सिद्धेनोपलब्धिहेतुना प्रतिपद्यत इति। निदर्शनार्थत्वाच्चास्य शेषयोर्विधयोर्यथोक्तमुदाहरणं वेदितव्यमिति§। कस्मात्पुनरिह तन्नोच्यते पूर्वोक्तमुपपाद्यत इति। सर्वथा तावदयमर्थः प्रकाशयितव्यः [redacted] इह वा प्रकाश्येत तत्र वा न कश्चिद्विशेष इति। प्रमाणं प्रमेयमिति च समाख्या समावेशेन वर्त्तते समाख्यानिमित्तवशात्। समाख्यानिमित्तं तूपलब्धिसाधनं प्रमाणम् उपलब्धिविषयश्च प्रमेयमिति। यदा चोपलब्धिविषयः कस्य चिदुपलब्धिसाधनं भवति तदा प्रमाणं प्रमेयमिति चैको ऽर्थो ऽभिधीयते। अस्यार्थस्यावद्योतनार्थमिदमुच्यते॥

प्रमेया च॥ तुलाप्रामाण्यवत्¶ ॥ १६ ॥

गुरुत्वपरिमाण**ज्ञानसाधनं तुला प्रमाणं ज्ञानविषयो गुरुद्रव्यं सुवर्णादि प्रमेयम्। यदा सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ

---

* किमुक्तं भवति कानि चित्प्रमाणानि प्रतिषिध्यन्ते कानि चिदभ्यनुज्ञायन्त इति यानि स्ववाक्याश्रितानि तान्यभ्यनुज्ञायन्ते परवाक्याश्रितानि प्रतिषिध्यन्त इति। न्या॰ वा॰।

† न तदस्माभिस्सूत्रमुक्तमपि तु सूत्रार्थ एवेति ज्ञापनार्थं सूत्रपाठो ऽस्माकमित्यर्थः। ता॰ टी॰। ‡ त्रैकाल्ये चेति ४। ५। २। ३ पा॰

§ सहभावस्योदाहरणं धूमदर्शनादग्निं धूमविशेषणं प्रतिपद्यते। पूर्वसिद्धिरुपलब्धिहेतुरादित्यः पश्चात्सिद्धानां प्रकाशक इति। न्या॰ वा॰ ‖ प्रमेयता चेति ४ पा॰।

¶ यथा प्रामाण्ये तुला प्रमेया च तथा ऽन्यदपि सर्वं प्रमाणं प्रमेयमित्यर्थः। ता॰ टी॰।

** प्रमाणेति ५। ४। २। ३ पा॰।

सुवर्णादि प्रमाणं तुलान्तरं प्रमेयमिति । एवमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः । आत्मा तावदुपलब्धिविषयत्वात् प्रमेये परिपठितः । उपलब्धौ स्वातन्त्र्यात् प्रमाता । बुद्धिरुपलब्धिसाधनत्वात् प्रमाणम् उपलब्धिविषयत्वात् प्रमेयम् उभयाभावात् प्रमितिः । एवमर्थविशेषे समाख्यासमावेशो योज्यः। तथा च कारकशब्दा निमित्तवशात्* समावेशेन वर्तन्तइति। वृक्षस्तिष्ठतीति स्वस्थितौ स्वातन्त्र्यात्† कर्ता । वृक्षं पश्यतीति दर्शनेनाप्तुमिष्यमाणतमत्वात् कर्म‡ । वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य साधकतमत्वात् करणम्§ । वृक्षायोदकमासिञ्चतीति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति संप्रदानम्‖ । वृक्षात्पर्णं पततीति ध्रुवमपाये ऽपादानमित्यपादानम्¶ । वृक्षे वयांसि सन्तीत्याधारो ऽधिकरणमित्यधिकरणम्** । एवं च सति न

* कारकशब्दनिमित्तवशादिति । च । पाठः ।

† कारकान्तरानपेक्षित्वं स्वातन्त्र्यम् । न हि वृक्षस्तिष्ठन् स्वस्थितौ कारकान्तरं प्रयुङ्क्त इति । यदा ऽयं स्थितिशब्दो गतिनिषेधवचनो भवति तदैवम् । यदा-ऽप्यस्तेरभिधायकस्तदाप्यस्तेर्व्यक्तिनिमित्तत्वेनावतिष्ठमानो ऽस्तित्वं व्यनक्तीति स्थिति-रुच्यते । यद्यपि गेहसम्बन्धाद्यभिधायको भवत्यस्तिशब्दो यथा गेहे देवदत्त-स्तिष्ठतीति प्रतिनिर्दिष्टे ऽस्तीति गम्यते तदा न सत्तामाह न गतिप्रतिषेधमपि तु देवदत्तगेहसम्बन्धं तदापि देवदत्तगेहसम्बन्धानुभवक्रियास्तस्यामपि न कारका-न्तराणि प्रयुङ्क्त इति स्वतन्त्रो भवति । यदा ऽप्ययमभग्नवचनः स्थितिशब्दस्तिष्ठति वृक्षो न भग्न इति तदापि स्वस्थितौ न कारकान्तराणि प्रयुङ्क्त इति स्वतन्त्रो भवति । समुदायैकदेशं वा स्वस्थितौ प्रयुङ्क्ते वृक्षो मूलैस्तिष्ठति प्रासादः स्तम्भै-र्धियत इति । पूर्वापरप्रत्ययैकविषयता वा स्थितिः । यद्वस्तु प्राक् सिद्धं पुनर्निमि-त्तान्तरसन्निधाने सत्युपलभ्यते यत्तस्यानेकायुगपत्कालप्रत्ययविषयत्वं सा स्थितिः । तस्यां स्थितावस्य यत्सहकारिसाधनं चक्षुरादि तत्करणमिति । न्या० वा० ।

‡ कर्मणि कः कारकार्थः क्रियाविषयत्वं यत्खलु क्रियाया विषयभावेन व्यव-तिष्ठमानस्यैतत्कर्म । एतेन कर्मलक्षणेन तथायुक्तं चानीप्सितमिति संगृहीतम् । न्या० वा० ।

§ आनन्तर्यप्रतिपत्तिः करणस्य साधकतमत्वार्थः वृक्षेण चन्द्रमसं ज्ञापयतीति वृक्षं गृहीत्वा ऽनन्तरं चन्द्रमसं प्रतिपद्यतइति वृक्षः करणम् । न्या० वा ।

‖ कारकशब्दवाच्यकर्मणा ऽऽप्तुमभीष्टं संप्रदानम् । आसिच्यमानमुदकं कर्म तेन वृक्षं प्राप्नोतीति वृक्षः संप्रदानं भवतीति । न्या० वा० ।

¶ अपगच्छत्स्यवतिष्ठते यत्तदपादानम् । यत्पतति तदपगच्छति तस्मिन्नपग-च्छत्यवतिष्ठते वृक्ष इति । न्या० वा० ।

** धृतिहेतुरधिकरणम् । न्या० वा० ।

द्रव्यमात्रं कारकं न क्रियामात्रं किं तर्हि क्रियासाधनं क्रियाविशेषयुक्तं कारकम् । यत्क्रियासाधनं स्वतन्त्रः स कर्ता न द्रव्यमात्रं न क्रियामात्रं क्रियया* व्याप्तुमिष्यमाणतमं कर्म न द्रव्यमात्रं न क्रियामात्रम् । एवं साधकतमादिष्वपि । एवं च कारकान्वाख्यानं यथैव उपपत्तित एवं लक्षणतः कारकान्वाख्यानमपि न द्रव्यमात्रेण न क्रियया† वा किं तर्हि क्रियासाधने क्रियाविशेषयुक्त इति । कारकशब्दश्चायं प्रमाणं प्रमेयमिति स च कारकधर्मं न हातुमर्हति । अस्ति भोः कारकशब्दानां निमित्तवशात् समावेशः । प्रत्यक्षादीनि च प्रमाणानि उपलब्धिहेतुत्वात् प्रमेयं चोपलब्धिविषयत्वात् । संवेद्यानि प्रत्यक्षादीनि‡ प्रत्यक्षेणोपलभे अनुमानेनोपलभे उपमानेनोपलभे आगमेनोपलभे प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञानमौपमानिकं मे ज्ञानमागमिकं मे ज्ञानमिति विशेषा गृह्यन्ते । लक्षणतश्च ज्ञाप्यमानानि ज्ञायन्ते विशेषेणेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्येवमादिना सेयमुपलब्धिः प्रत्यक्षादिविषया किं प्रमाणान्तरतो ऽथान्तरेण प्रमाणान्तरमसाधनेति । कश्चात्र विशेषः ॥

**प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥ १७ ॥**

यदि प्रत्यक्षादीनि प्रमाणेनोपलभ्यन्ते येन प्रमाणेनोपलभ्यन्ते तत्प्रमाणान्तरमस्तीति प्रमाणान्तरसद्भावः प्रसज्यत इति अनवस्थामाह तस्याप्यन्येन तस्याप्यन्येनेति । न चानवस्था शक्यानुज्ञातुमनुपपत्तेरिति । अस्तु तर्हि प्रमाणान्तरमन्तरेण निःसाधनेति ॥

**तद्विनिवृत्तेर्वा §प्रमाणसिद्धिवत्प्रमेयसिद्धिः ॥ १८ ॥**

यदि प्रत्यक्षाद्युपलब्धौ प्रमाणान्तरं निवर्तते आत्माद्युपलब्धावपि प्रमाणान्तरं निवर्त्स्यत्यविशेषात् । एवं च सर्वप्रमाणविलोप इत्यत आह ॥

**न प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः‖ ॥ १९ ॥**

---

* क्रियया व्याप्तुमिष्यमाणतमम् इति १ पा० ।

† वेति ५ । ४ । ३ पुस्तके नास्ति ।

‡ संवेद्यानि प्रत्यक्षादीनि प्रमाणानि चेति ५ । ४ । ३ । १ पाठः ।

§ प्रमाणान्तरसिद्धिवदिति १, २ पा० । सूत्रे तु वार्त्तिकानुसारी पाठः ।

‖ प्रदीपप्रकाशो घटाद्युपलब्धिसाधनत्वाद्धेतुत्वात्प्रमाणं स च प्रत्यक्षादिभिरेवोपलभ्यते नासावात्मोपलब्धौ प्रत्यक्षादिव्यतिरिक्तं प्रमाणं प्रयोजयति नैवोपलभ्यते तथा प्रमाणान्यपि प्रत्यक्षादिभिरेवोपलभ्यन्त इति दृष्टान्तमात्रमेतत् । का

यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वात् दृश्यदर्शने प्रमाणं स च प्रत्यक्षान्तरेण चक्षुषः सन्निकर्षेण गृह्यते । प्रदीपभावाभावयोर्दर्शनस्य तथाभावाद्दर्शनहेतुरनुमीयते तमसि प्रदीपमुपाददीथा इत्याप्तोपदेशेनापि प्रतिपद्यते । एवं प्रत्यक्षादीनां यथादर्शनं प्रत्यक्षादिभिरेवोपलब्धिः । इन्द्रियाणि तावत् स्वविषयग्रहणेनैवानुमीयन्ते अर्थाः प्रत्यक्षतो गृह्यन्ते इन्द्रियार्थसन्निकर्षास्त्वावरणेन लिङ्गेनानुमीयन्ते इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमात्ममनसोः संयोगविशेषादात्मसमवायाच्च सुखादिवद्गृह्यते एवं प्रमाणविशेषो विभज्य वचनीयः । यथा च दृश्यः सन् प्रदीपप्रकाशो दृश्यान्तराणां दर्शनहेतुरिति दृश्यदर्शनव्यवस्थां लभते एवं प्रमेयं सत्किञ्चिदर्थजातमुपलब्धिहेतुत्वात् प्रमाणप्रमेयव्यवस्थां लभते । सेयं प्रत्यक्षादिभिरेव प्रत्यक्षादीनां *यथादर्शनमुपलब्धिर्न प्रमाणान्तरतो न च प्रमाणमन्तरेण† निःसाधनेति ॥

तेनैव तस्याग्रहणमिति चेत् नार्थभेदस्य लक्षणसामान्यात् ।
प्रत्यक्षादीनां प्रत्यक्षादिभिरेव ग्रहणमित्ययुक्तम्‡ अन्येन ह्यऽन्यस्य§ ग्रहणं दृष्टमिति नार्थभेदस्य लक्षणसामान्यात्‖ । प्रत्यक्षलक्षणेनानेकोऽर्थः संगृहीतस्तत्र केन चित्कस्य चिद्ग्रहणमित्यदोषः । एवमनुमानादिष्वपीति यथोद्धृतेनोदकेनाशयस्थस्य¶ ग्रहणमिति ॥

** ज्ञातृमनसोश्च दर्शनात् । अहं सुखी अहं दुःखी चेति तेनैव ज्ञात्रा†† तस्यैव ग्रहणं दृश्यते । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति च तेनैव मनसा तस्यैवानुमानं दृश्यते ज्ञातुर्ज्ञेयस्य चाभेदो ग्रहणस्य ग्राहकस्य चाभेद इति ॥

---

ऽत्र न्याय इति चेदयं न्याय उच्यते । प्रत्यक्षादीनि स्वोपलब्धौ प्रमाणान्तराप्रयोजकानि परिच्छेदसाधनत्वात् प्रदीपवत् सामान्यविशेषवत्त्वाच्च । यत्सामान्यविशेषवत्तत्स्वोपलब्धौ न प्रत्यक्षादिव्यतिरिक्तं प्रमाणं प्रयोजयति यथा प्रदीप इति । संवेद्यत्वादाश्रितत्वात्कारणत्वाद्धेतुत्वेत्येवमादि प्रदीपवदिन्द्रियादयोऽपि प्रत्यक्षाङ्गत्वात्प्रत्यक्षादिव्यतिरिक्तप्रमाणान्तराप्रयोजका इति । न्या॰ वा॰ ।

* यथादर्शनमिति ४ । ३ । नास्ति । † न च प्रमाणान्तरमन्तरेणेति १ । २ । ३ पाठः ।

‡ इत्युक्तमिति ४ । ३ पा॰ । § त्वन्यस्येति ४ । ३ पा॰ ।

‖ लक्षणसामान्यादिति ४ । ३ पा॰ । ¶ नाशयस्थेति २ । ३ पा॰ । उद्धृतजलजातीयस्य कूपादिस्थस्य जलस्योद्धृतादन्यस्यैव ग्रहणे न तेनैव तस्य ग्रहणं तथैवापीत्यर्थः ।

** न चायमेकान्तो न तेनैव तस्य ग्रहणं भवतीति । भवत्यपि कदा चित्तथा । न्या॰ वा॰ । †† ज्ञात्रादिति ४ । २ । ३ पा॰ ।

**निमित्तभेदो ऽत्रेति चेत् *समानम् ।** न निमित्तान्तरेण विना घ्राणा ऽऽत्मानं जानीते न च निमित्तान्तरेण विना मनसा मनो गृह्यतइति समानमेतत् प्रत्यक्षादिभिः । प्रत्यक्षादीनां ग्रहणमित्यत्राप्यर्थभेदो न गृह्यतइति† ।

**प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः ।** यदि स्यात् किं चिदर्थजातं प्रत्यक्षादीनामविषयः यत्प्रत्यक्षादिभिर्न शक्यं ग्रहीतुं तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत तत्तु न शक्यं केन चिदुपपादयितुमिति प्रत्यक्षादीनां यथादर्शनमेवेदं सच्चासच्च सर्वं विषय‡ इति ।

के चित्तु दृष्टान्तमपरिगृहीतं हेतुना विशेषहेतुमन्तरेण साध्यसाधनायोपाददते यथा प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते तथा प्रमाणानि प्रमाणान्तरमन्तरेण§ गृह्यन्तइति स चायम् ।

**क्व चिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्व चिदनेकान्तः|| ।** यथा ऽयं प्रसङ्गो निवृत्तिदर्शनात् प्रमाणसाधनायोपादीयते ¶एवं प्रमेयसाधनायाप्युपादेयो ऽविशेषहेतुत्वात् । यथा स्थाल्यादिरूपग्रहणे प्रदीपप्रकाशः प्रमेयसाधनायोपादीयते एवं प्रमाणसाधनायाप्युपादेयो विशेषहेत्वभावात्सोऽयं विशेषहेतुपरिग्रहमन्तरेण दृष्टान्त एकस्मिन्पक्षे उपादेयो न प्रतिपक्षइत्यनेकान्तः । एकस्मिंश्च पक्षे दृष्टान्त इत्यनेकान्तो विशेषहेत्वभावा**दिति ।

**विशेषहेतुपरिग्रहे सति उपसंहाराभ्यनुज्ञानादप्रतिषेधः ।** विशेषहेतु††परिगृहीतस्तु दृष्टान्त एकस्मिन्पक्षे उपसंह्रियमाणो न ‡‡शक्यो बाधितुम् । एवं च सत्यनेकान्त इत्ययं प्रतिषेधो न भवति ।

---

* यथैव ज्ञाता सुखादिसंबन्धापेक्षस्तद्विशेषणमात्मानं प्रतिपद्यते ऽहं सुख्यहं दुःखी चेति तथा प्रमाणमपि प्रमाणविषयत्वेनावतिष्ठमानं प्रमेयम् । न्या· वा ।

† अर्थभेदो गृह्यते इति ४।२।३ पाठः । ‡ सर्वविषय इति ४।२।३ पा· ।

§ प्रमाणान्तरेणान्तरेणेति ४।३ पाठः ।

|| तात्पर्यटीकालेखशैल्या सूत्रमिदमिति प्रतीयते विश्वनाथपञ्चाननकृतवृत्तौ भाष्यमित्युक्त्या सूत्राङ्को न निर्दिष्टः । ¶ एवमिति ४।२ पुस्तकयोर्नास्ति ।

** अयं च प्रदीपप्रकाशदृष्टान्तः प्रमाणपक्षे भवतु मा भूत्प्रमेयपक्षइत्यत्रापि नियमहेतुर्वक्तव्यः । प्रदीपप्रकाशो दृष्टान्तो भवतु मा भूत् स्थाल्यादिर्दृष्टान्त इत्यत्रापि नियमहेतुर्वक्तव्यः । सो ऽयमुभयथा ऽनेकान्तो हेतुमन्तरेण दृष्टान्तः प्रसक्तः । न्या· वा· । †† प्रकाशत्वादिना संगृहीतः । न्या· वा· ।

‡‡ न शक्योऽनुज्ञातुमिति ४।२।३ पाठः ।

[illegible]क्षादीनां प्रत्यक्षादिभिरुपलब्धावनवस्थेति चेत्* न संविद्विषयनिमित्तानाम् उपलब्ध्या व्यवहारोपपत्तेः । प्रत्यक्षेणार्थमुपलभे अनुमानेनार्थमुपलभे †इति प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञान‡मागमिकं मे ज्ञानमिति संविद्विषयं संविन्निमित्तं§ चोपलभमानस्य धर्मार्थसुखापवर्गप्रयोजनस्तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च व्यवहार उपपद्यते सोयं सामर्थ्ये‖ निवर्त्तते¶ न चास्ति व्यवहारान्तरमनवस्थासाधनीयं** येन प्रयुक्तो ऽनवस्था††मुपाददीतेति ।

सामान्येन प्रमाणानि परीक्ष्य विशेषेण परीक्ष्यन्ते तत्र ।

**प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ २० ॥**

आत्ममनःसन्निकर्षो हि कारणान्तरं नोक्तमिति । न चासंयुक्ते द्रव्ये संयोगजन्यस्य गुणस्योत्पत्तिरिति । ज्ञानोत्पत्तिदर्शनादात्ममनःसन्निकर्षः कारणं मनःसन्निकर्षानपेक्षस्य चेन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वे युगपदुत्पद्येरन् बुद्धय इति मनःसन्निकर्षो ऽपि कारणम् । तदिदं सूत्रं पुरस्तात्‡‡कृतभाष्यम् ।

**नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २१ ॥**

आत्ममनसोः सन्निकर्षाभावे नोत्पद्यते प्रत्यक्षमिन्द्रियार्थसन्निकर्षाभाववदिति । सति चेन्द्रियार्थसन्निकर्षे ज्ञानोत्पत्तिदर्शनात् कारणभावं§§ ब्रुवते ।

---

* यदि प्रत्यक्षादीनि प्रत्यक्षादिभिरुपलभ्यन्ते तान्यप्यन्यैरित्यनवस्था । अनवस्थायां चाद्यप्रमाणाधिगमो न स्यात् । अथ व्यवस्थास्ति चाद्यप्रमाणाधिगतिरप्रमाणा प्रसज्येत । व्या० वा० ।

† उपमानेनार्थमुपलभे आगमेनार्थमुपलभे इति ४ पुस्तके ऽधिकः पाठः ।

‡ औपमानिकं मे ज्ञानमिति ४ । ३ अधिकः पा० ।

§ संविन्निमित्तमिति संवित्तिनिमित्तं चेति ४ । ४ । २ । ३ पा० ।

‖ सामर्थ्ये इति ४ । ३ पा० । ¶ निवर्ततइति ४ । २ । ३ पा० ।

** व्यवसायेन विषये प्रकाशिते ऽनुव्यवसायेन च तज्ज्ञानप्रकाशने सामर्थ्यात् सर्वव्यवहारोपपत्तेः पुनरनुव्यवसायप्रकाशनाय ज्ञानान्तरं नापेक्ष्यत इति नास्त्यनवस्थेति भावः ।

†† उपाददीतेति ४ । ३ पा० ।

‡‡ [illegible]

§§ [illegible]

दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २२ ॥

दिगादिषु सत्सु *ज्ञानभावात्तान्यपि कारणानीति । अकारणभावेऽपि ज्ञानोत्पत्तिर्दिगादिसन्निधेरवर्जनीयत्वात् । यदाप्यकारणं दिगादीनि ज्ञानोत्पत्तौ तदापि सत्सु दिगादिषु ज्ञानेन भवितव्यं न हि दिगादीनां सन्निधिः शक्यः परिवर्जयितुमिति । तत्र †कारणभावे हेतुवचनमेतस्माद्धेतोर्दिगादीनि ज्ञानकारणानीति । आत्ममनःसन्निकर्षस्तर्ह्युपसंख्येय इति । तत्रेदमुच्यते ।

ज्ञान‡लिङ्गत्वादात्मनो नानव॥रोधः ॥ २३ ॥

§ ज्ञानमात्मलिङ्गं तद्गुणत्वान्न चासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरस्तीति ॥

¶तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २४ ॥

अनवरोध इति वर्तते । युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्युच्यमाने सिद्धत्येव मनःसन्निकर्षापेक्ष इन्द्रियार्थसन्निकर्षो ज्ञानकारण**मिति ।

प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् ॥ २५ ॥

---

* ज्ञानाभावादिति ५ । ६ । ७ ।

† कतमेन पुनर्न्यायेन दिगाद्यकारणं सामर्थ्यानुपलब्धेः । न हि ज्ञानोत्पत्तौ दिगादीनां सामर्थ्यमुपलभ्यते तस्मादकारणम् । न्या० वा० । दिगादीनां नित्यत्वाद् व्यापकत्वाच्च तत्सन्निधेरवर्जनीयतया संनिधिमात्रेण न कारणत्वमाशङ्कितुं युक्तम । यथा कर्णाय लब्धौ तेजसो रूपविशेषे हेतुर्न पुनस्तत्रास्य स्पर्शविशेष संनिधिमात्रया सामर्थ्यादर्शनात् । रूपस्य त्वन्वयव्यतिरेकाभ्यां सामर्थ्यं रूपं चन्द्रमसस्तेज स्पर्शमोष्णेन विनापि तद्रूपोपलब्धेः । चपधरका टिस्पस्य चावयवस्य विना रूप प्रकाशकत्वाभावात् ।

‡ आत्मलिङ्गत्वादिति ४ पाठः ।

§ ज्ञानमात्मलिङ्गमित्युक्ते तेनात्ममनःसंयोगो ऽनुक्तो ऽप्यनुमेयः । ज्ञानस्यात्मलिङ्गत्वं तद्गुणत्वात् । जन्यत्वे सति आत्मसमवेतत्वात्तस्यात्मगुणत्वं सुखादिवत् न हि द्रव्यं कर्म वा ऽऽत्मनि समवैति । न पृथिव्यादिगुणः स्वमात्रसंवेद्यत्वात् । उक्तं चात्र न यावन्त्यस्य कारणं सर्वं तद् वक्तव्यमिति । न्या वा० ।

|| आत्मनो ऽनवरोध इति ५ । ४ । २ । ३ पा ।

¶ अथेन्द्रियमनःसंयोगः कस्मान्नाभिधीयते । न्या० वा० । सूत्रं नेति ५ । ४ पु नास्ति ।

** युगपदुत्पत्तिसूत्रस्य मनःसिद्धिपरत्वेन मनसो ज्ञानकारणत्वानभिधायकत्वेऽपि ज्ञानस्य तत्परतन्त्रत्वाभिधानमुखेन तदुपयुक्तत्वादनमात् ।

प्रत्यक्षानुमानोपमानशब्दानां निमित्तमात्ममनःसन्निकर्षः प्रत्यक्षस्यैवेन्द्रियार्थसन्निकर्ष इत्यसमानो ऽसमानत्वादस्य ग्रहणम्* ।

## सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्† ॥ २६ ॥

इन्द्रियार्थसन्निकर्षस्य ग्रहणं नात्ममनसोः सन्निकर्षस्येति । एकदा खल्वयं ‡प्रबोधकालं प्रणिधाय सुप्तः प्रणिधानवशात् प्रबुध्यते । यदा तु तीव्रौ ध्वनिस्पर्शौ प्रबोधकारणं भवतः तदा प्रसुप्तस्येन्द्रियसन्निकर्षनिमित्तं प्रबोधज्ञानमुत्पद्यते तत्र न ज्ञातुर्मनसश्च सन्निकर्षस्य प्राधान्यं भवति किं तर्हि इन्द्रियार्थयोः सन्निकर्षस्य । न ह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा प्रेरयतीति । एकदा खल्वयं विषयान्तरासक्तमनाः संकल्पवशाद्विषयान्तरं जिज्ञासमानः प्रयत्नप्रेरितेन मनसा इन्द्रियं संयोज्य तद्विषयान्तरं जानीते । यदा तु खल्वस्य निःसंकल्पस्य निर्जिज्ञासस्य च व्यासक्तमनसो बाह्यविषयोपनिपातनाज् ज्ञानमुत्पद्यते तदेन्द्रियार्थसन्निकर्षस्य प्राधान्यं न ह्यत्रासौ जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति । प्राधान्याच्चेन्द्रियार्थसन्निकर्षस्य ग्रहणं कार्यं गुणत्वाद् नात्ममनसोः सन्निकर्षस्येति । प्राधान्ये च हेत्वन्तरम् ॥

## तैश्चापदेशो ज्ञानविशेषाणाम्§ ॥ २७ ॥

तैरिन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः । कथं घ्राणेन जिघ्रति चक्षुषा पश्यति रसनया रसयतीति घ्राणविज्ञानं चक्षुर्विज्ञानम्‖ गन्धविज्ञानं रूपविज्ञानं रसविज्ञानमिति ¶। इन्द्रियविषय**विशेषाच्च पञ्चधा बुद्धिर्भवति अतः प्राधान्यमिन्द्रियार्थसन्निकर्षस्येति । यदुक्तमिन्द्रियार्थसन्निकर्षग्रहणं कार्यं

---

* ज्ञानान्तरसाधारणकारणत्वात् आत्ममनसोः सदुपादानमिति पूर्वसूत्रार्थेति पदं संगमय्य सूत्रं व्याख्येयम् । न यावत्साधारणं सर्वं तदुपादेयमपि तु न साधारणं वक्तव्यमित्ययं सूत्रार्थं इति वार्त्तिकदर्शनात् सूत्रमेवेदं भाष्यत्वेन मुद्रितपुस्तके निवेशयन्तु प्रामादिकं ।

† इन्द्रियार्थसन्निकर्षप्राधान्यपरमिदं सूत्रम् । न्या वा । चत एवास्य भाष्यत्वेन लेख प्रामादिकः ।

‡ प्रतिबोधकालमिति २ पा ।

§ यस्मादिदं प्रत्यक्षज्ञानमुत्पद्यमानं विषयेण कारणेन वा व्यपदिश्यते असाधारणेन तेन व्यपदेशो दृष्टो यथा यवाङ्कुर इति । न्या वा ।

‖ चक्षुर्विज्ञानमित्यस्याग्रे रसनविज्ञानमिति ३ । ४ अधिकः पाठः ।

¶ रूपविज्ञानमिति ३ । ४ पुस्तकयोर्नास्ति ।	** विषयेति ३ । ४ नास्ति ।

नात्ममनसोः सन्निकर्षस्येति कस्मात्सुप्रव्यासक्तमनसामिन्द्रियार्थयोः सन्निकर्षस्य ज्ञाननिमित्तत्वादिति सोऽयम् ॥

व्याहतत्वादहेतुः* ॥ २८ ॥

यदि तावत् क्व चिदात्ममनसोः सन्निकर्षस्य ज्ञानकारणत्वं नेष्यते तदा युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति व्याहन्येत। †तदानीं मनसः सन्निकर्षमिन्द्रियार्थसन्निकर्षो ऽपेक्षते मनःसंयोगानपेक्षायां च युगपज् ज्ञानोत्पत्तिप्रसङ्गः। अथ मा भूद् व्याघात इति सर्व‡विज्ञानानामात्ममनसोः सन्निकर्षः कारणमिष्यते तदवस्थमेवेदं भवति ज्ञानकारणत्वादात्ममनसोः सन्निकर्षस्य ग्रहणं कार्यमिति ॥

नार्थविशेषप्राबल्यात्§ ॥ २९ ॥

नास्ति व्याघातो न ह्यात्ममनःसन्निकर्षस्य ज्ञानकारणत्वं व्यभिचरति इन्द्रियार्थसन्निकर्षस्य प्राधान्यमुपादीयते अर्थविशेषप्राबल्याद्धि सुप्रव्यासक्तमनसां ज्ञानोत्पत्तिरेकदा भवति। अर्थविशेषः कश्चिदेवेन्द्रियार्थः तस्य प्राबल्यं तीव्रतापटुते च ‖चार्थविशेषप्राबल्यमिन्द्रियार्थसन्निकर्षविषयं नात्ममनसोः सन्निकर्षविषयं तस्मादिन्द्रियार्थसन्निकर्षः प्रधानमिति। असति प्रणिधाने संकल्पे चासति सुप्रव्यासक्तमनसा यदिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं तत्र मनःसंयोगो ऽपि कारणमिति मनसि क्रियाकारणं वाच्यमिति। यथैव ज्ञातुः खल्वयमिच्छाजनितः प्रयत्नो** मनसः प्रेरक आत्मगुण एवमात्मनि गुणान्तरं सर्वस्य साधकं प्रवृत्तिदोषजनितमस्ति येन प्रेरितं मन इन्द्रियेण संबध्यते। तेन ह्यप्रेर्यमाणे मनसि संयोगाभावात् ज्ञानानुत्पत्तौ सर्वार्थता ऽस्य निवर्तते एषितव्यं चास्य गुणान्तरस्य द्रव्यगुणकर्मकारकत्वम्। अन्यथा हि चतुर्विधानामणूनां भूतसूक्ष्माणां मनसां च ततो ऽन्यस्य क्रियाहेतोरसंभवात् शरीरेन्द्रियविषयाणामनुत्पत्तिप्रसङ्गः ॥

---

* व्याहतत्वादित्यनेन त्रिसूत्रीं प्रत्याचष्टे। न्या॰ वा॰।

† नेदानीमिति ५।४।२।३ पाठः।     ‡ सर्वज्ञानानामिति ५।४।३।२ पा।

§ नानया त्रिसूत्र्या ऽऽत्ममनःसंयोगस्य कारणभावः प्रतिषिध्यते ऽपि तु प्राबल्यमिन्द्रियार्थसन्निकर्षस्य प्रतिपाद्यते। न्या॰ वा॰।

‖ तत्वेति ५।४।२।३ पाठः।     ¶ वेति २।३ पाठः।

** प्रयत्न इति ५।४।२।३ पाठः।

## *प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ ३० ॥

यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं वृक्ष इत्येतत् किल प्रत्यक्षं तत् खल्व†नुमानमेव कस्मादेकदेशग्रहणात्। वृक्षस्योपलब्धेरर्वाग्भागमयं गृहीत्वा वृक्षमुपलभते न चैकदेशो वृक्षः। तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तादृगेव तद्भवति । किं पुनर्गृह्यमाणादेकदेशाद् अर्थान्तरमनुमेयं मन्यसे अवयवसमूहपक्षे अवयवान्तराणि द्रव्योत्पत्तिपक्षे तानि चावयवी चेति। अवयवसमूहपक्षे तावदेकदेशग्रहणाद् वृक्षबुद्धेरभावः नागृह्यमाणमेकदेशान्तरं वृक्षो गृह्यमाणैकदेशा‡वदिति । अथैकदेशग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसंधानात् तत्र वृक्षबुद्धिः§ न तर्हि वृक्षबुद्धिरनुमानमेवं सति भवितुमर्हतीति। द्रव्यान्तरोत्पत्तिपक्षे नावयव्यनुमेयो ऽस्यैकदेश||संबन्धस्याग्रहणाद् ग्रहणे चाविशेषादनुमेयत्वाभावः। तस्माद्वृक्षबुद्धिरनुमानं¶ न भवति। एकदेशग्रहणमाश्रित्य प्रत्यक्षस्यानुमानत्वमुपपाद्यते तच्च।

---

* एवं तावत्समधिगतं प्रत्यक्षलक्षणम् । अतः परमिदानीं प्रत्यक्षस्यानुमाने ऽन्तर्भावं कुर्वाण इदमाह । न्या॰ वा॰ ।

† किलेति ५ । ४ । ७ । १ । पाठः ।

‡ तेषामवयवसमूहपक्षे वृक्षबुद्धिरनुपपन्ना निर्विषया । अर्वाग्भागः परभागो मध्यभाग इत्येतच्च नास्ति अवयविप्रत्याख्याने अवयवस्य दुर्निरूपत्वात् । एकदेश एवावयव इति चेत् । अवयवस्याधारत्वेऽपि एकदेशपदार्थत्वादवयविनो ऽभावादेकदेशस्याभावात् । अथाकार्यकारणभूतानां परस्परमत्यासत्त्युपपत्तिरेकदेशावयवानामवयवशब्दार्थः । तदपि न । अकार्यकारणभूतानां परस्परोपकारविधुराणामवयवत्वानुपपत्तेः ।

§ एतस्मिन् पक्षे वृक्षबुद्धेरभाव एव । कथम् । अर्वाग्भागस्य परभागस्य चाग्रहणात् । न चैतत्पक्षे ऽवयवान्तरानुमानसंभवः । अवयवस्यावयवान्तराविनाभावविरहात् । अवयविनश्चानभ्युपगमादेव नानुमेयत्वसंभवः । अनुमाने सतः पूर्वं व्याप्तिदर्शनस्यापेक्षितत्वेनावयव्यनभ्युपगमात्पूर्वं व्याप्तिदर्शनासंभवाच्च । परभागस्यार्वाग्भागेन व्याप्तिग्रहणस्याग्रहणे तेन सार्धं संबन्धग्रहणासंभवेन साध्यात्मतस्यानुमेयत्वासंभवाच्च । अवयविनो ऽभ्युपगमेन पूर्वमननुभूतस्यावयविनो ऽस्मरणेनानुमानासंभवाच्च । पूर्वापरभागयोश्चाननुभूतयोः पूर्वं रूपाकारकप्रतीतिविषयत्वोपगमे सादृश्यप्रतीतेर्भ्रान्तित्वप्रसङ्गात् तस्याः प्रमाणजन्यत्वानुपपत्तिश्च । भ्रान्तेश्चान्यत्र दृष्टस्यान्यप्रकारेण प्रतीतिरूपतया वृक्षस्यापत्तेः यथार्थत्वानभ्युपगमे भ्रमत्वासंभवाच्च ।

|| संबन्धस्य ग्रहणादिति ४ । संबन्धस्य ग्रहणादिति ५ । ३ । पाठः ।

¶ भागस्यैवावयविनोऽपीन्द्रियसंबद्धतया प्रत्यक्षस्यैव संभवात् । अथावयवी न प्रत्यक्षयोग्यस्तर्हि तेन सह व्याप्तिग्रहणानुपपत्त्यानुमितेरसंभवः । परमाणुमात्रस्यातीन्द्रियतया तद्विषयं च प्रत्यक्षाभ्युपगमेन भागत्वस्यासंभवेन भागस्यैवावयव्यनुमितेरनुपपत्तिश्च । प्रत्यक्षमात्रस्यानुमितित्वं वदतो ऽनुमितेरसंभव एव तस्याः प्रत्यक्षपूर्वकत्वनियमात् । सामान्यतोदृष्टानुमानेऽपि प्रत्यक्षसिद्धयोरेव व्याप्यव्यापकभावग्रहणेनानुमितेरिष्टतया व्याप्यरूपपुरस्कारेण तथापि प्रत्यक्षस्य सत्त्वादनुमितेः प्रत्यक्षपूर्वकत्वनियमे व्यभिचारः ।

## *न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३१ ॥

न प्रत्यक्षमनुमानम्। कस्मात् प्रत्यक्षेणैवोपलम्भात्। यत् तदेकदेशग्रहणमाश्रीयते प्रत्यक्षेणासावुपलम्भः न चोपलम्भो निर्विषयोऽस्ति यावच्चार्थजातं तस्य विषयस्तावदभ्यनुज्ञायमानं प्रत्यक्षव्यवस्थापकं† भवति। किं पुनस्ततोऽन्यदर्थजातमवयवी समुदायो वा। न चैकदेशग्रहणमनुमानं भावयितुं शक्यं हेत्वभावादिति।

अन्यथापि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गस्तत्पूर्वकत्वात्। प्रत्यक्षपूर्वकमनुमानं संबद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमप्रत्यक्षदर्शनादग्नावनुमानं भवति ‡यत्र च संबद्धयोर्लिङ्गलिङ्गिनोः प्रत्यक्षं यच्च लिङ्गमात्रप्रत्यक्षग्रहणं नैतदन्तरेणानुमानस्य प्रवृत्तिरस्ति। न त्वेतदनुमानमिन्द्रियार्थसन्निकर्षजत्वात्। न चानुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति। सोऽयं प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति।

## न चैकदेशोपलब्धिरवयविसद्भावात् ॥ ३२ ॥

न चैकदेशोपलब्धिमात्रं किं तर्ह्येकदेशोपलब्धिः तत्सहचरितावयव्युपलब्धिश्च कस्मादवयविसद्भावात्§। अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी तस्यावयवस्थानस्योपलब्धिकारणप्राप्तस्य‖कदेशोपलब्धावनुपलब्धिरनुपपन्नेति¶

अकृत्स्नग्रहणादिति चेन्न कारणतोऽन्यस्यैकदेशस्याभावात्। न चावयवाः कृत्स्ना गृह्यन्ते अवयवैरेवावयवान्तरव्यवधानात् नावयवी कृत्स्नो गृह्यत इति। नायं गृह्यमाणेष्ववयवेषु परिसमाप्त इति सेयमेकदेशोपलब्धिरनिवृत्तेवे**ति। कृत्स्नमिति वै ††खल्वशेषतायां सत्यां भवति

---

* विरुद्धश्चायं हेतुरेकदेशग्रहणात् सर्वोपलब्धिरिति। कथम्। न्या० वा०।

† एकदेशग्रहणमस्वीकारेणापि प्रत्यक्षमन्योपपत्ते। सर्वस्य प्रत्यक्षविषयताया वर्णितत्वात्। प्रत्यक्षस्यैव निर्विकल्पकतया तत्र मुख्यकारकत्वनियतानुमितित्वासंभवाच्च। सन्निकृष्टमात्रग्राहकतया प्रत्यक्षस्यासन्निकृष्टातीतानागतग्राह्यनुमितित्वानुपपत्तिः। व्याप्तिपक्षधर्मत्वे अपि प्रत्यक्षोत्पत्त्या सविषयतानुमितित्वासंभवाच्च।

‡ तत्र चेति १। तत्र चत्वेति। २। ३। पाठः।

§ अवयविसंभवादिति १। २। ३। पाठः। ‖ कारणमात्रस्येति १। ३। पाठः।

¶ महदनेकद्रव्यवत्त्वरूपाद्युपलब्धिकारणानि सान्येकदेशवदेकदेशिन्यपि विद्यन्ते तस्मादेकदेश उपलभ्यते नैकदेशीत्ययुक्तम्। न्या० वा०।

** अनिवृत्तेवेति १। २। ३। पाठः। †† खल्वशेषतायामिति १। ३ पाठः।

अकृत्स्नमिति शेषे सति* तन्त्रैतदवयवेषु वृत्त्यस्ति अव्यवधाने ग्रहणाद् व्यवधाने चाग्रहणादिति। अङ्ग तु भवान् पृष्टो व्याचष्टां गृह्यमाणस्यावयविनः किमगृहीतं मन्यसे येनैकदेशोपलब्धिः स्यादिति। न ह्यस्य कारणेभ्यो ऽन्ये एकदेशा भवन्तीति तत्रावयववृत्तं नोपपद्यतइति। इदं तस्य वृत्तं येषामिन्द्रियसन्निकर्षाद्*ग्रहणमवयवानां तैः सह गृह्यते येषामवयवानां व्यवधानादग्रहणं तैः सह न गृह्यते। न चैतत्कृतो ऽस्ति भेद† इति। समुदायोऽशेषता वा ‡समुदायो वृक्षः स्यात् तत्प्राप्तिर्वा उभयथा ग्रहणाभावः मूलस्कन्धशाखापलाशादीनामशेषता वा समुदायो वृक्ष इति स्यात् प्राप्तिर्वा समुदायिनामिति उभयथा समुदायभूतस्य वृक्षस्य ग्रहणं नोपपद्यतइति। अवयवैस्तावदवयवान्तरस्य व्यवधानादशेषग्रहणं नोपपद्यते प्राप्तिग्रहणमपि नोपपद्यते प्राप्तिमतामग्रहणात्। सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ कल्पते न समुदायमात्रे इति।

साध्यत्वादवयविनि संदेहः§ ॥ ३३ ॥

---

* इन्द्रियार्थसन्निकर्षादिति ५।४।२।३ पाठ·।

† सर्वावयवेषु वर्तमानोऽवयवी किं प्रत्यवयवं कार्त्स्न्येन वर्तते उतैकदेशेन। नाद्यः। प्रत्यवयवमवयविपर्याप्तिप्रसङ्गात्। एकावयवपर्याप्तौ महत्त्वानेकद्रव्यत्वयोरभावेन प्रत्यक्षत्वानुपपत्तेश्च। एकावयवस्य विभागासंभवेन विभागहेतुकावयविनाशासंभवाच्च। न द्वितीयः। आरम्भकावयवव्यतिरिक्तावयवाभावेनावयविन एकदेशेन वर्तनस्योक्तेरसंभवात्। एकदेशेनोपलब्धिसंभवेऽपि कार्त्स्न्येनानुपलम्भादवयवी नोपलभ्यत इत्यादेः प्रतिषेधासंभवाच्च। भागान्तरव्यवहितभागान्तरसन्निकर्षासंभवेन सन्निकृष्टासन्निकृष्टसमवेतस्यावयविनः प्रत्यक्षानुपपत्तेरिति चेत्। एकस्यावयविनोऽवयवेष्वनेकेष्ववर्तमानस्य वृत्तेरङ्गीकारात्। प्रत्यवयवं पर्याप्त्यावयविनोऽनेकत्वप्रसङ्गात्। एकदेशेन वर्तते ऽवयवीत्यभ्युपगमेऽपि आरम्भकाणामवयवानां तत्रस्थितेरसंभवेन तद्व्यतिरिक्तावयवाभावेन न संभवति। तथा सति एतेषामेकदेशानामनेकत्वेनैकमनेकत्रेत्युक्तेरसंभवात्। तस्मात् कार्त्स्न्यैकदेशशब्दयोरनेकविषयत्वेनैकस्मिन्नवयविनि विकल्पो युक्तः। वर्तमानश्चावयवी समवायेन प्रत्यवयवमपर्याप्त्या वर्तत इति युक्तम्। गृह्यमाणेभ्योऽवयवेभ्योऽगृह्यमाणानामवयवानां भेद इव गृह्यमाणागृह्यमाणावयवसमवेतादवयविनो गृह्यमाणावयवो भिन्नः स्यादिति चेत्। एकावयवेन सह गृहीतस्यावयवान्तरेण साकमग्रहणेऽपि एकत्वेन तत्र गृहीतस्य देशस्यैकदेशस्य ग्रहणे ऽपि तस्य तद्भेदाभेदोपपत्तेः। अवयविना सह अवयवसन्निकर्षस्य सत्त्वेन संयुक्तसमवायस्य सत्त्वेन प्रत्यक्षत्वानुपपत्तेरभावात्। असन्निकृष्टावयवान्तराग्रहणे ऽपि तेषामवयविनो भिन्नत्वेन तदग्रहणस्यावयव्यग्रहणे प्रयोजकत्वाभावात्।

‡ समुदायाशेषता वेति ४ समुदायाशेषतावेति ५।२।३ पा·।

§ किमत्र साध्यम्। किमव्यतिरेको ऽप्यवयवीति। यद्यवयवी न निह्नु-मस्ति विप्रतिपत्तेः न हि धर्मिणि विप्रतिपद्यमानः कश्चिदनुग्रहमर्हति। न च धर्मिणि विप्रतिपत्तियोग्यमस्ति सादृश्याभावात्। न हि सादृश्यमन्तरेण विप्रतिपत्तेर्योगोऽस्ति। किं कारणम्। विप्रतिपत्तिर्नाम विपरीता प्रतिपत्तिः।

## सर्वाग्रहणमवयव्यसिद्धेः* ॥ ३४ ॥

यद्यवयवी नास्ति सर्वस्य ग्रहणं नोपपद्यते । किं तत्सर्वं द्रव्यगुणकर्मसामान्यविशेषसमवायाः । कथं कृत्वा परमाणुसमवस्थानं† तावद् दर्शनविषयो न भवत्यतीन्द्रियत्वादणूनां द्रव्यान्तरञ्चावयविभूतं‡ दर्शनविषयो नास्ति दर्शनविषयस्थाश्चेमे§ द्रव्यादयो गृह्यन्ते तेन|| निरधिष्ठाना न गृह्येरन् । गृह्यन्ते तु¶ कुम्भोऽयं श्यामः एको महान् संयुक्तः स्पन्दते अस्ति मृन्मयश्चेति सन्ति चेमे गुणादयो धर्मा इति । तेन सर्वस्य ग्रहणात्पश्यामो ऽस्ति द्रव्यान्तरभूतो ऽवयवीति ।

## धारणाकर्षणोपपत्तेश्च** ॥ ३५ ॥

अवयव्यर्थान्तरभूत††इति । संग्रहकारिते वै धारणाकर्षणे संग्रहो नाम

---

स्यात् । कार्यगुरुत्वेन कारणगुरुत्वस्य प्रतिबन्धो विनाशो वेति तु न युक्तम् । तथा सति कार्यपाते कारणस्य पाताभावप्रसङ्गात् । द्वितीयपक्षे कार्यनाशोत्तरमपि कारणपाताभावप्रसङ्गाच्च । प्रसार्यस्थानादित्वेन सर्वैरेव परमाणुभिः कदा चित्कार्यारम्भेण तद्गुरुत्वेन परमाणुगुरुत्वनाशे ऽगुरुभिः परमाणुभिरारब्धे कार्ये गुरुत्वानुत्पत्त्या कार्यमात्रस्यागुरुत्वप्रसङ्गाच्च । इत्थं चावयविनो ऽसत्त्वाल्लिङ्गिकयोर्हेत्वभावात्तत्तुल्यावयविसत्त्वे व्यतिरेकं च प्रमाणस्य दर्शितत्वाच्च साध्यत्वावयविनि हेत्वेव इति न युक्तम् । साध्यस्यास्य सर्वाप्यहेतुत्वात्कीर्तनादिदमयुक्तमिति तु न । साध्यत्वोक्तेरेतावा वि प्रतिपत्तेः अवयवहेतुत्वे तात्पर्यात् । इत्यलमत्यर्थातिविस्तरेणैव ।

* अथवा सर्वैः प्रमाणैरग्रहणम् । कथम् । प्रत्यक्षस्य वर्तमानमहद्विषयत्वात् । अवयविप्रत्याख्याने च न बाह्यकरणप्रत्यक्षविषयो ऽस्ति । तस्याभावादनुमानादेरप्यभावः सेयं सर्वप्रमाणनिवृत्तिः । उपलभ्यन्ते चार्थाः प्रत्यक्षादिभिः प्रमाणैः तैः सर्वग्रहणात्पश्यामो ऽस्त्यवयवीति । तदिदं सूत्रमवयव्यनभ्युपगमे विरोधप्रदर्शनपरं सोऽयं सर्वप्रकारो विरोधो लोकपरिदृष्टप्रत्ययोच्छेद इति । न्या॰ वा॰ ।

† समावस्थानमिति ४ । ७ । ३ पा॰ ‡ द्रव्यान्तरञ्चावयविभूतमिति ५ । ४ । ५ । ३ पा । § दर्शनविषयाश्चेमे इति ५ । ४ । २ । || ते इति ४ पा । ¶ ते तु कुम्भोऽयमिति ४ । ५ । ३ पाठ॰ ।

** अवयव्यर्थान्तरभूत इति चार्थः । एकदेशग्रहणसाहचर्ये सत्यवयविनो देशान्तरप्राप्तिप्रतिषेधो धारणम् । तथा सत्यवयविनो देशान्तरप्रापणमाकर्षणम् । न हि धारणाकर्षणे निरवयवे ऽवयवे च दृष्टे तस्मादवयविधर्माविति । यत्पुनरुक्तं संग्रहकारिते धारणाकर्षणे नावयविकारिते पांशुराशिप्रभृतिष्वभावात् तृणोपलकाष्ठादिषु जतुसंगृहीतेषु दर्शनादिति । तच्च । अनवधारणात् । न ब्रूमः सर्वस्मिन्नवयविनि धारणाकर्षणे भवतः । अपि त्वन्यत्र न भवतः । तृणादयश्चावयविन एवेति । यदिदमुच्यते संग्रहकारिते ते इति । न विशेषहेत्वभावात् । पांशुराशिप्रभृतिषु य एव भवतः संग्रहाभावे हेतुः स एवावयविनो विद्यमानस्य धारणाकर्षणाभावेऽपीति । सो ऽयं व्यतिरेकी हेतुः । न्या॰ वा॰ ।

†† अर्थान्तरभूत॰ संग्रहकारिते इति ५ । ४ । ३ । २ पा ।

संयोगसहचरितं गुणान्तरं स्नेहद्रवत्वकारितमपां संयोगादामे कुम्भे ऽग्निसंयोगात्पक्वे । यदि त्ववयविकारिते* अभविष्यतां पांशुराशिप्रभृतिष्व†प्यज्ञास्येताम् । द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसंगृहीतेष्वपि नाभविष्यतामिति । ‡अथावयविनं प्रत्याचक्षाणको मा भूत् प्रत्यक्षलोप इत्यणुसञ्चयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्य इति । एकमिदं द्रव्यमित्येकबुद्धिविषयं पर्यनुयोज्यः किमेकबुद्धिरभिन्नार्थविषया आहो भिन्नार्थविषयेति§ । अभिन्नार्थविषयेति चेद् । अर्थान्तरानुज्ञानादवयविसिद्धिः‖ । नानार्थविषयेति चेद् भिन्नेष्वेकदर्शनानुपपत्तिः अनेकस्मिन्नेक इति व्याहता बुद्धिर्न दृश्यत इति ।

¶सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम्** ॥ ३६ ॥

यथा सेनाङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेष्वेकमिदमित्यु††त्पद्यते बुद्धिः एवमणुषु सञ्चितेष्वगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिरिति यथा गृह्यमाणपृथक्त्वानां सेनावनाङ्गानामारात्कारणान्तरतः पृथक्त्वस्याग्रहणं यथा ऽगृह्यमाणजातीनां पलाश इति वा खदिर इति वा नाराज्जातिग्रहणं भवति । यथा गृह्यमाणप्रस्पन्दानां नारात् स्पन्दग्रहणं गृह्यमाणे चार्थजाते पृथक्त्वस्याग्रहणादेकमिति भाक्तः प्रत्ययो भवति न त्वणूनां गृह्यमाणपृथक्त्वानां कारणतः पृथक्त्वाग्रहणाद्भाक्त एकप्रत्ययो ऽतीन्द्रियत्वा‡‡दणूनामिति । इदमेव च परीक्ष्यते किमेकप्रत्ययो ऽणुसञ्चयविषय आहो स्विन्नेति । अणुसञ्चय एव सेनावनाङ्गानि न च परीक्ष्यमाणमुदाहरणमिति युक्तं साध्यत्वादिति ।

---

* अवयवकारिते इति ५ । ३ पा० । † अभवतीति ३ ५ । नास्ति ।

‡ अथान्वयिनो हेतोः प्रयोगमुपन्यसिष्यन्निदमाह । न्या० वा० ।

§ आहो नानार्थेति ५ । २ ४ । । ३ । पा० ।

‖ एकानेकबुद्धी भिन्नविषये विशेषवत्त्वाद्रूपादिविषयवदिति । अथ वा एकानेकबुद्धी भिन्नविषये समुच्चितविषयत्वात् । इदमिति यथा चेदं चेदं चेति । न्या० वा० ।

¶ आशङ्कात इतरसूत्रमिति । ता० टी० ।

** इदं तावत्सूत्रं साधनपक्षे दृष्टान्तमात्रत्वादसंबद्धम् । अनैकान्तीकरणपक्षे तु न असिद्धत्वात् केन सेनावनयोरनर्थान्तरभावो ऽभ्युपगम्यते । अनेकस्मिन्नप्युपलभ्यमाने भेदस्यादर्शनादभेदप्रत्ययः । भेदस्यादर्शनमारात्प्रतिमितात् । न तु परमाणवः केन चिदुपलभ्यन्ते ऽतीन्द्रियत्वात् । न्या० वा० ।

†† इत्युपपद्यत इति ५ । ४ । २ । ३ पा० ।

‡‡ परमाणूनामेव घटादिबुद्धिहेतुत्वमुपजातविशेषाणामनुपजातविशेषाणां वा । आद्ये ऽवयविसिद्धिः । उपजायमानस्य विशेषस्यावयविरूपत्वात् । न च केवल तत्र विशेषः । अतीन्द्रियत्वेनास्यातीन्द्रियत्वात् । द्वितीये परमाणवो ऽतीन्द्रिया ऐन्द्रियकाश्चेति विरुद्धम् ।

दृष्टमिति चेन्न तद्विषयस्य परीक्ष्योपपत्तेः* । यदपि मन्येत दृष्टमिदं सेनावनाङ्गानां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणं न च दृष्टं शक्यं प्रत्याख्यातुमिति तच्च नैवं तद्विषयस्य परीक्षोपपत्तेः । दर्शनविषय एवायं परीक्ष्यते योऽयमेकमिति प्रत्ययो दृश्यते स परीक्ष्यते किं द्रव्यान्तरविषयो वा अथाणुसङ्घविषय इत्यत्र दर्शनमन्यतरस्य साधकं न भवति नानाभावे चाणूनां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम् । अतस्मिंस्तदिति प्रत्ययो यथा स्थाणौ पुरुष इति । ततः किमतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिः । स्थाणौ पुरुष इति प्रत्ययस्य किं प्रधानं योऽसौ पुरुषे पुरुषप्रत्ययस्तस्मिन्सति पुरुषसामान्यग्रहणात् स्थाणौ पुरुषोऽयमिति । एवं नानाभूतेष्वेकमिति प्रामाण्यग्रहणात्† प्रधाने सति भवितुमर्हति प्रधानं च सर्वस्याग्रहणादिति नोपपद्यते तस्मादभिन्न एवायमभेदप्रत्यय एकमिति ।

इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमिति चेन्न विशेषहेत्वभावात् । दृष्टान्ताव्यवस्था श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेष्वेकप्रत्ययः प्रधानमनेकस्मिन्नेकप्रत्ययस्येति । एवं च सति दृष्टान्तोपादानं न व्यवतिष्ठते विशेषहेत्वभावात् । अणुषु सञ्चितेष्वेकप्रत्ययः किमतस्मिंस्तदिति प्रत्ययः स्थाणौ पुरुषप्रत्ययवद् अथार्थस्य तथाभावात्तस्मिंस्तदिति प्रत्ययो यथा शब्दस्यैकत्वादेकः शब्द‡ इति । विशेषहेतुपरिग्रहमन्तरेण दृष्टान्तौ संशयमापादयत इति कुम्भवत्सङ्ख्यमात्रं गन्धादयोऽपीत्यनुदाहरणं गन्धादय इति । एवं परिमाणसंयोगस्पन्दजातिविशेषप्रत्ययानप्यनुयोक्तव्यस्तेषु चैवं प्रसङ्ग इति ।

एकत्वबुद्धिस्तस्मिंस्तदिति प्रत्यय इति विशेषहेतुर्महदिति प्रत्ययेन सामानाधिकरण्यात् । एकमिदं महच्चेति एकविषयौ प्रत्ययौ समानाधिकरणौ भवतः तेन विज्ञायते यन्महत्तदेकमिति । अणुसमूहातिशय-

* परीक्षोपपत्तेरिति ५।४।२।३ पाठः ।

† सामान्यग्रहणादिति ५।४।२।३ पाठः ।

‡ यांश्च शब्दादीन् प्रधानप्रत्ययनिमित्तत्वेन भवान् प्रतिपद्यते तेऽपि संचिता एव संचितत्वात्तेष्वयमेकप्रत्ययो न युक्तः । शब्दादिषु चैकप्रत्ययः समुच्चयनिवृत्तिनिमित्त एकत्ववद्द्रव्यसामान्याद्वा कः । न्या० वा० ।

ग्रहणं महत्प्रत्यय इति चेत्सोऽयममहत्स्वणुषु महत्प्रत्ययोऽतस्मिंस्तदिति प्रत्ययो भवतीति । किं स्यातः । अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षितत्वात् प्रधानसिद्धिरिति भवितव्यं महत्येव महत्प्रत्ययेनेति ।

**अणुः शब्दो महानिति च व्यवसायात् प्रधानसिद्धिरिति चेद् न मन्दतीव्रताग्रहणमियत्तानवधारणाद् यथा द्रव्ये ।** अणुः शब्दोऽल्पो मन्द इत्येतस्य ग्रहणं महान् शब्दः पटुस्तीव्र इत्येतस्य ग्रहणं कस्मादियत्तानवधारणात् । न ह्ययं महान् शब्द इति व्यवस्यन्नियानयमित्यवधारयति । यथा बदरामलकबिल्वादीनि* । संयुक्ते इमे इति च द्वित्वसमानाश्रयप्राप्तिग्रहणम्† ।

**द्वौ समुदायावाश्रयः संयोगस्येति चेत् ।** कोऽयं समुदायः प्राप्तिरनेकस्यानेका वा प्राप्तिरेकस्य समुदाय इति चेत् **प्राप्तेरग्रहणम्** । प्राप्त्याश्रितायाः संयुक्ते इमे वस्तुनी इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते ।

**अनेकसमूहः समुदाय इति चेद् न द्वित्वेन समानाधिकरणस्य ग्रहणात् ।** द्वाविमौ संयुक्तावर्थाविति ग्रहणे सति नानेकसमूहाश्रयः संयोगो गृह्यते न च द्वयोरण्वोर्ग्रहणमस्ति तस्मान्महती द्वित्वाश्रयभूते द्रव्ये संयोगस्य स्थानमिति ।

**प्रत्यासत्तिः प्रतीघातावसाना संयोगो नार्थान्तरमिति चेद् नार्थान्तरहेतुत्वात्संयोगस्य ।** शब्दरूपादिस्पन्दानां हेतुः संयोगो न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण शब्दे रूपादिषु स्पन्दे च कारणत्वं गृह्यते तस्माद्गुणान्तरं प्रत्ययविषयश्चार्थान्तरं तत्प्रतिषेधो वा कुण्डली

---

* शब्देऽपि पूर्वापरयोः शब्दगुणयोः तत्सापेक्षत्वादयं महानणुर्वेत्यवधार्यते नावधार्यं प्रतिषिध्यते । इदं तु चिन्त्यते । यो ऽयं शब्दे महदणुप्रत्ययः स किं परिमाणयोगाद्गुणान्तरयोगाद्वा निमित्तात् । अन्यस्माद्विनिमित्तादिति युक्तम् । गुणे गुणानङ्गीकारात् । महत्प्रत्ययविषयत्वाद्गुणवान् शब्दो द्रव्यवदिति चेन्न । अनैकान्तात् यथा महत्परिमाणमिति । द्रव्ये तु महत्परिमाणयोगान्महत्प्रत्ययविषयत्वं न तु विपरीतम् । महत्परिमाणयोगस्तु द्रव्यस्य विशेषप्रत्ययानामनाकस्मिकत्वेन । शब्देऽप्येवं प्रसङ्ग इति चेन्न मन्दत्वतीव्रत्वहेतुकत्वात् । अणुद्रव्यनीमान्यस्यामान्यप्रत्ययविषयत्वं स्यात् । महद्द्रव्यसामान्याच्चाणामान्यप्रत्ययविषयत्व तोयता ।

† संयुक्तमहत्प्रत्ययावनेकविषयौ प्रतिसंधानान्नीलोत्पलादिप्रत्ययवत् । यथा नीलमुत्पलं चेति प्रतिसंधीयमानौ प्रत्ययावेकविषयौ भवतः तथा संयुक्ते महती इति प्रतिसंधानमस्ति तस्मात्प्रतिसंधानादेकविषयाविति । न्या० वा० ।

गुरुत्वकुण्डलवच्चाच इति । संयोगबुद्धेश्च यदर्थान्तरं न विषयः अर्थान्तरप्रतिषेधस्तर्हि विषयः । तत्र प्रतिषिध्यमानवचनम् । संयुक्ते द्रव्ये इति यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते तद्वक्तव्यमिति । द्वयोर्महतोराश्रितस्य ग्रहणान्नाण्वाश्रय इति जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानं प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्तिः । व्यधिकरणस्यानभिव्यक्तेरधिकरणवचनम् । अणुसमवस्थानं विषय इति चेत् प्राप्ताप्राप्तसामर्थ्यवचनम् । किं प्राप्ते अणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्यते अथ प्राप्ते इति । अप्राप्ते ग्रहणमिति चेद् व्यवहितस्याणुसमवस्थानस्याप्युपलब्धिप्रसङ्गः व्यवहितेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्येत । प्राप्ते ग्रहणमिति चेद् मध्यपरभागयोरप्राप्तावनभिव्यक्तिः । यावत्प्राप्तं भवति तावत्यभिव्यक्तिरिति चेत् तावतोऽधिकरणत्वमणुसमवस्थानस्य । यावति प्राप्ते जातिविशेषो गृह्यते तावदस्याधिकरणमिति प्राप्तं भवति । तत्रैकसमुदाये प्रतीयमानेऽर्थभेदः । एवं च सति योऽयमणुसमुदायो वृक्ष इति प्रतीयते तत्र वृक्षबहुत्वं प्रतीयेत यत्र यत्र ह्यणुसमुदायस्य भागे वृक्षत्वं गृह्यते स स वृक्ष इति । तस्मात्समुदिताऽणुसमवस्थानस्यार्थान्तरस्य* जातिविशेषा†भिव्यक्तिविषयत्वादवयव्यर्थान्तरभूत‡ इति । परीक्षितं प्रत्यक्षम् । अनुमानमिदानीं परीक्ष्यते ।

## §रोधोपघात॥सादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३७ ॥

अप्रमाणमित्येकदाप्यर्थस्य न प्रतिपादकमिति । रोधादपि नदी पूर्णा गृह्यते तदा चोपरिष्टाद्वृष्टो देव इति मिथ्यानुमानम् । नीडोपघातादपि पि-

---

* समुदिता अणव स्थानं यस्य तादृशस्यार्थान्तरस्य जातिविशेषाभिव्यक्तिहेतुत्व मात्रमिति सिध्यत्यवयवी । † जातिविशेषस्येति ॥ । २ । ३ पा ।

‡ अर्थान्तरस्यावयविनो ऽनभ्युपगमे परमाणुमात्रार्थानुपपत्ति । तस्य महदपेक्षत्वात् । तत्त्वरजस्तमसा सर्वापकृष्ट संघात इति ॥ न व्याघातात् । सर्वापकृष्टत्वसंघातत्वयोरेकत्राभावात । अर्थान्तरं पटातन्तव तद्धेतुत्वात्तुर्यादिवत् । सामर्थ्यभेदाद्विषयगदवत् । भिन्नप्रत्ययविषयत्वाद्रूपस्पर्शवत् । तन्तुपटरूपे भिन्नकारणा विशेषत्वाद्रूपस्पर्शवदिति चार्थान्तरत्वे हेतव ।

§ एतदुदाहरणव्यभिचारद्योतकं सूत्रम् । तत्र रोधो नामापां स्यन्दमानानां द्रवत्वप्रतिबन्धहेतुः । उपघातः पिपीलिकाण्डानामुपमर्दः । सादृश्यं मयूरपुरुषशब्दयोः समानप्रत्ययकर्तृत्वम् । व्या वा । ॥ उपघातेति ॥ २ । ३ पा ।

पीलिकाण्डसञ्चारो भवति सदा च भविष्यति वृष्टिरिति मिथ्यानुमानमिति* । पुरुषोऽपि मयूरवाशितमनुकरोति तदापि शब्दसादृश्यान्मिथ्यानुमानं भवति† ।

### नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात्‡ ॥ ३८ ॥

नायमनुमानव्यभिचारः अननुमाने तु खल्वयमनुमानाभिमानः । कथं नाविशिष्टो लिङ्गं भवितुमर्हति । पूर्वोदकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफलपर्णकाष्ठादिवहनं चोपलभमानः पूर्णत्वेन नद्या उपरि वृष्टो देव इत्यनुमिनोति नोदकवृद्धिमात्रेण । पिपीलिकाप्रायस्याण्डसञ्चारे भविष्यति वृष्टिरित्यनुमीयते न कासांचिदिति । नेदं मयूरवाशितं तत्सदृशोऽयं शब्द इति विशेषापरिज्ञानान्मिथ्यानुमानमिति । §यस्तु विशिष्टाच्छब्दाद्विशिष्टमयूरवाशितं गृह्णाति तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गं यथा सर्पादीनामिति । सोऽयमनुमातुरपराधो नानुमानस्य योऽर्थविशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति । त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तमत्र च ।

### वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः‖ ॥ ३९ ॥

वृन्तात्प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा तत्संयुक्तः पतितकालः । यो ऽधस्तात्स पतितव्यो ऽध्वा तत्संयुक्तः कालः पतितव्यकालः । नेदानीं तृतीयोऽध्वा विद्यते यत्र पततीति वर्तमानः कालो गृह्येत तस्माद्वर्तमानः कालो न विद्यत इति ।

### तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥

नाध्वव्यङ्ग्यः कालः किं तर्हि क्रियाव्यङ्ग्यः पततीति यदा पतनक्रिया व्युपरता भवति स कालः पतितकालः । यदोत्पत्स्यते स पतित-

---

* मिथ्यानुमानं भवतीति ५ । ४ । ७ ।

† एतावदनुमानमप्रमाणमित्युक्तं तदयुक्तं प्रतिज्ञाहेत्वोर्व्याघातात् । यदनन्यस्यातीन्द्रियस्य साधकं ह्यनुमानं तदप्रमाणमिति व्याहतम् । किं चानेन हेतुना ऽनुमानमात्रस्याप्रामाण्यं साध्यते ऽनुमानविशेषस्य वा । नाद्यः । हेतोः पक्षतावच्छेदकाव्यापकत्वात् । अप्रामाण्यसाधकत्वेनाभिमते व्यभिचारे व्यभिचाराभावात् । व्यभिचार्यनुमानस्य पक्षत्वे पक्षतावच्छेदकहेत्वोरैक्यापत्तिः सिद्धसाधनं च ।

‡ यान्येतान्युदाहरणानि व्यभिचारीण्युच्यन्ते तेष्वपि व्यभिचारो नास्तीत्यसिद्धत्वोद्भावनद्वारकं सूत्रम् । न्या० वा० । § यस्तु शब्दाद्विशिष्टादिति- ४ । ५ । ३ । १ पा० ।

‖ अथ सांप्रतकाल एव नास्तीति के चित् । तन्न । प्रमाणाभावात् । अनुपलब्धेश्चेन्द्रियाद्यभावेनोपपत्तेः । परापरत्वप्रत्ययनिमित्तत्वाच्च कालसिद्धिः । कालस्यैकत्वेन तथापि प्रत्ययभेदानुपपत्तिरिति चेत् । निरूपकभेदेन तदुपपत्तेः । एवं कालोपपत्तौ वर्तमानकालप्रतिषेधार्थं सूत्रम् ।

व्यङ्ग्यः कालः। यदा द्रव्ये वर्तमाना क्रिया गृह्यते स वर्तमानः कालः। यदि चायं द्रव्ये वर्तमानं पतनं न गृह्णाति कस्योपरममुत्पत्स्यमानतां वा प्रतिपद्यते*। पतितः काल इति भूता क्रिया पतितव्यः काल इति चोत्पत्स्यमाना क्रिया। उभयोः कालयोः क्रियाहीनं द्रव्यम् अधः पततीति क्रियासंबद्धं सोऽयं क्रियाद्रव्ययोः सम्बन्धं गृह्णाति वर्तमानः कालस्तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति। अथापि।

**नातीतानागतयोरितरेतरापेक्षासिद्धिः† ॥ ४१ ॥**

यद्यतीतानागतावितरेतरापेक्षौ सिद्ध्येतां प्रतिपद्येमहि वर्तमानविलोपं नातीतापेक्षाऽनागतसिद्धिः। नाप्यनागतापेक्षाऽतीतसिद्धिः। कया युक्त्या केन कल्पेनातीतः कथमतीतापेक्षाऽनागतसिद्धिः केन च कल्पेनानागत इति नैतच्छक्यं निर्वक्तुमव्याकरणीयमेतद्वर्तमानलोपे‡ इति। यच्च मन्येत ह्रस्वदीर्घयोः स्थलनिम्नयोश्छायातपयोश्च यथेतरेतरापेक्षया सिद्धिरेवमतीतानागतयोरिति तन्नोपपद्यते विशेषहेत्वभावात्। दृष्टान्तवत्प्रतिदृष्टान्तोऽपि प्रसज्यते यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्यतः एवमतीतानागताविति नेतरेतरापेक्षा कस्यचित्सिद्धिरिति। यस्मादेकाभावेऽन्यतराभावादुभयाभावः यद्येकस्यान्यतरापेक्षा सिद्धिरन्यतरस्येदानीं किमपेक्षा यद्यन्यतरस्यैकापेक्षा सिद्धिरेकस्येदानीं किमपेक्षा एवमेकस्याभावे चान्यतरन्न सिध्यतीत्युभयाभावः प्रसज्यते। अर्थसद्भावव्यङ्ग्यश्चायं वर्तमानः कालः विद्यते द्रव्यं विद्यते गुणः विद्यते कर्मेति। यस्य चायं नास्ति तस्य।

**वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥**

प्रत्यक्षमिन्द्रियार्थसन्निकर्षजं न चाविद्यमानमसदिन्द्रियेण सन्निकृ-

---

* न कालोऽतीतो न फलमतीतं कालस्य सर्वदा वर्तमानत्वात्। फलस्य चापतत्पतति पतिष्यतीति क्रियाविशेषणत्वेन प्रत्ययविषयत्वात् क्रियायां संभवो न फलस्येति। तस्मात्क्रिया कालाभिव्यक्तिनिमित्तं नाध्वा। गन्तव्यस्य सादृश्यात्। योऽसौ गन्तव्यो देशः स यथाभूत एवानुत्पन्नक्रिये फले तथाभूत एवोत्पन्नक्रिय इत्यभेदादाध्वा कालव्यक्तिहेतुः। न्या· वा·।

† परस्परापेक्षासिद्धेर्हि वर्तमानाभावः सैव तु नास्तीति सूत्रार्थः। ता· टी·

‡ वर्तमानकालध्वंसप्रतियोगित्वस्यैवातीतपदार्थत्वाद् वर्तमानकालप्रागभावप्रतियोगित्वस्यैव चानागतपदार्थत्वाद्वर्तमानकालानभ्युपगमे तयोर्निर्वक्तुमशक्यत्वादिति भाव·।

§ विसर्गेति ३ पु· पा·।

द्यते । न चायं विद्यमाने सत्*त्किं चिदनुजानाति प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षज्ञानं सर्वं नोपपद्यते† प्रत्यक्षानुपपत्तौ तत्पूर्वकत्वाद् अनुमानागमयोरनुपपत्तिः । सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति । उभयथा च वर्तमानः कालो गृह्यते क्व चिदर्थसद्भावव्यङ्ग्यः यथा‡ द्रव्ये द्रव्यमिति । क्व चित् क्रियासन्तानव्यङ्ग्यः यथा पचति छिनत्तीति । नानाविधा चैकार्था क्रिया क्रियासन्तानः क्रियाभ्यासश्च । नानाविधा चैकार्था क्रिया पचतीति स्थाल्यधिश्रयणमुदकासेचनं तण्डुलावपनमेधोऽपसर्पणमग्न्यभिज्वालनं दर्वीघट्टनं मण्डस्रावणमधोवतारणमिति । छिनत्तीति क्रियाभ्यास उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते । यच्चेदं पच्यमानं छिद्यमानं च तत्क्रियमाणं §तस्मिन् क्रियमाणे ।

कृतताकर्त्तव्यतोपपत्तेस्तूभयथा ग्रहणम्॥ ॥ ४३ ॥

क्रियासन्तानोऽनारब्धश्चिकीर्षितोऽनागतः कालः पक्ष्यतीति । प्रयोजनावसानः क्रियासन्तानोपरमः अतीतः कालोऽपाक्षीद् इति । आरब्धक्रियासन्तानो वर्तमानः कालः पचतीति । तत्र या उपरता सा कृतता या चिकीर्षिता सा कर्तव्यता । या विद्यमाना सा क्रियमाणता । तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहारः पचति पच्यतइति वर्तमानग्रहणेन गृह्यते क्रियासन्तानस्य ह्यत्राविच्छेदो विधीयते नारम्भो नोपरम इति । सोऽयमुभयथा वर्तमानो गृह्यते अपवृक्तो व्यपवृक्तश्च । अतीतानागताभ्यां स्थितिव्यङ्ग्यो विद्यते द्रव्यमिति । क्रियासन्तानाऽविच्छेदाभिधायी च त्रैकाल्यान्वितः

* तत्किंचित् २ । ३ पा० ।

† सूत्रार्थो विरोधः । कथं पुनर्वर्तमानभावे प्रत्यक्षानुपपत्तिः । यस्मादिदं प्रत्यक्षं वर्तमानाधारं कार्यत्वात्कार्यं तद्वर्तमानाधारं दृष्टं यथा क्षीरं कार्यं च प्रत्यक्षं तस्माद्वर्तमानाधारमिति । वर्तमानकालानभ्युपगमादनाधारं प्रत्यक्षं प्राप्नोति । अनाधारं च कार्यं नास्तीति प्रत्यक्षानुपपत्तिः । न्या० वा० ।

‡ यथास्ति द्रव्यमिति १ । ४ । २ । ३ पा० ।

§ तस्य च कारकस्य वर्तमानक्रियासंबन्धमतीतानागतानपेक्षामपेक्ष्यातीतानागतत्वे क्रियायाः कारकस्यापि व्यक्तिः तद्व्यव्यक्तिः । तद्वेतुकं च द्वैविध्यमिति प्रतिपादनपरं सूत्रमवतारयति । ता० टी० ।

|| कस्य वर्तमानस्य । न्या० वा० ।

पचति छिनत्तीति । अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायां तदभिधायी बहुप्रकारो* लोकेषु उत्प्रेक्षितव्यः । तस्मादस्ति वर्तमानः काल इति ।

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥ ४४ ॥**

अत्यन्तसाधर्म्यादुपमानं न सिध्यति । न चैवं भवति यथा गौरेवं गौरिति । प्रायः साधर्म्यादुपमानं न सिध्यति । न हि भवति यथा ऽनड्वानेवं महिष इति । एकदेशसाधर्म्यादुपमानं न सिध्यति न हि सर्वेण सर्वमुपमीयतइति ॥

**प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥**

न साधर्म्यस्य† कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्तते किं तर्हि प्रसिद्धसाधर्म्यात्साध्यसाधनभावमाश्रित्य प्रवर्तते । यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यं तस्माद्यथोक्तदोषो नोपपद्यत‡इति । अस्तु तर्ह्युपमानमनुमानम् ।

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६ ॥**

यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम् एवं गवा प्रत्यक्षेणाऽप्रत्यक्षस्य गवयस्य ग्रहणमिति नेदमनुमानाद्विशिष्यते । विशिष्यतइत्याह कया युक्त्या ॥

**नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामऽ§ इति ॥ ४७ ॥**

यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवय॥समानमर्थं पश्यति तदा ऽयं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते न चेदं¶मनुमानमिति ।

---

* कदा चिदयं वर्तमानमतीते प्रयुङ्क्ते आगतः सन् ब्रवीत्येष आगच्छामीति । कदा चिदनागते प्रयुङ्क्ते स्थितः सन् ब्रवीत्येष गच्छामीति । न्या॰ वा॰

† न साध्यस्येति १ पा ।

‡ सर्वथा भावाच्चात्यन्तसाधर्म्यादुपमानं सिध्यति । यदि तत्क्रियथैव तत्क्रियोपमीयते यथा रामरावणयोर्युद्धं रामरावणयोरिवेति । भूयः साधर्म्येण भवति यदा गोर्बलप्रकर्षजिज्ञासा भवति तदा भूयः साधर्म्येणोपमानं यथा गौस्तथा महिष इति । यदा तु सन्मात्रं जिज्ञासितं भवति मेरोः सत्ता किंरूपेति तदा यथा सर्षपस्य तथा मेरोरिति तस्मादप्रतिषेध इति । न्या॰ वा॰ ।

§ अथ प्रत्यक्षे गवये क उपमानार्थः । संज्ञासंज्ञिसंबन्धप्रतिपत्तिः । एवं च नोपमानमागमो न प्रत्यक्षमिति । न ह्ययमागमात्प्रत्यक्षाद्वा ऽयं गवय इति प्रतिपद्यते न्या॰ वा॰ ।

॥ गवेति ३ । ३ पा ।

¶ न चेदमिति ५ । ४ । ३ । ३ ।

परार्थे चोपमानं यस्य ह्युपमान*मप्रसिद्धं तदर्थं प्रसिद्धोभयेन† क्रियतइति । परार्थमुपमानमिति चेद् न स्वयमध्यवसायात् । भवति च भोः स्वयमध्यवसायः यथा गौरेवं गवय इति । नाध्यवसायः प्रतिषिध्यते उपमानं तु तन्न भवति प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । न च यस्योभयं प्रसिद्धं तं प्रति साध्यसाधनभावो विद्यत‡इति । अथापि ।

## तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥

तथेति समानधर्मोपसंहारादुपमानं सिध्यति नानुमानम् । अयं चानयोर्विशेष इति ।

## शब्दो §ऽनुमानमर्थस्यानुपलब्धेरनुमेय‖त्वात् ॥ ४९ ॥

शब्दोऽनुमानं न प्रमाणान्तरं कस्मात् शब्दार्थस्यानुमेयत्वात् । कथमनुमेयत्वं प्रत्यक्षतोऽनुपलब्धेः । यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयतइति अनुमानम् । एवं मितेन शब्देन पश्चान्मीयते ऽर्थो ऽनुपलभ्यमान इत्यनुमानं शब्दः । इतश्चानुमानं शब्दः ।

## उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥

प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धिः अन्यथा ह्युपलब्धिरनुमाने अन्यथोपमाने तद्व्याख्यातम् । शब्दानुमानयोस्तूपलब्धिरद्विप्रवृत्तिः यथानुमाने प्रवर्तते तथा शब्दे ऽपि विशेषाभावादनुमानं शब्द इति ।

---

* उपमेयमिति २ । ३ पा॰ † प्रसिद्धोपमेयेनेति ४ । २ ।

‡ न हि यथा गौरेवं गवय इत्येतद्वागममन्तरेण सारूप्यमात्रपरिज्ञानमुपमानं न ह्यागममात्रं सारूप्यज्ञानमन्तरेणोपमानं भवति । न चेदमनुमानम् । तस्माद्यथा लिङ्गलिङ्गिसंबन्धस्मृत्यनुग्रहे सति लिङ्गपरामर्शो ऽनुमानं तच्च प्रत्यक्षं तथा ऽऽगमाहितसंस्कारस्मृत्यपेक्षं सारूप्यप्रत्यक्षमुपमानमिति । प्रतिपत्तिभेदाच्च । नानुमानमेवं भवति यथा धूमस्तथा ऽग्निरिति । अस्ति तूपमाने यथा गौरेवं गवय इति । यत्र च प्रतिपत्तिभेदस्तत्प्रमाणान्तरम् । यथा प्रत्यक्षादनुमानम् । न्या॰ वा॰ ।

§ ननु शब्दो न प्रमाणं विद्यमानस्याप्युपमादेश्च प्रमित्यजनकत्वात् । भूयमादस्य प्रमितिजनकत्वेन कदा चित्प्रमितिजनने प्रम शास्त्रोपपत्तेः । विषयाभावादिति चेन्न । प्रत्यक्षानुमानविविक्तविषयस्य प्रागुपपादितत्वात् । अनित्यात्मकत्वाद् घटादिवत् । बाह्यकरणप्रत्यक्षत्वाद् घटादिवत् । सामान्यसमवेतत्वाद् घटादिवत् । आकाशगुणत्वाच्च संख्यादिवदप्रमाणमिति चेन्न । आद्यानां धर्मादौ प्रदीपे व्यभिचारात् । चतुर्थस्याप्याकाशमहत्त्वे परत्वापरत्वे व्यभिचारात् । ननु अनुमानं शब्दः स्वरूपापेक्षत्वात् । विकार्यविषयत्वाच्च अन्वयव्यतिरेकोपपत्तेश्चेति वार्तिकम् ।

‖ प्रत्यक्षेणानुपलभ्यमानार्थत्वादिति सूत्रार्थः । न्या॰ वा॰ [illegible]

संबन्धाच्च ॥ ५१ ॥

शब्दोऽनुमानमिति वर्तते । संबद्धयोश्च शब्दार्थयोः संबन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणं यथा संबद्धयोर्लिङ्गलिङ्गिनोः संबन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहण*मिति । यत्तावदर्थस्यानुमेयत्वादिति †तत्र ।

‡आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ॥ ५२ ॥

स्वर्गः अप्सरसः उत्तराः कुरवः सप्त द्वीपाः समुद्रो लोकसन्निवेश इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात्प्रत्ययः किं तर्हि आप्तैरयमुक्तः शब्द इत्यतः संप्रत्ययः विपर्ययेण संप्रत्ययाभावाद् न त्वेवमनुमानमिति । यत्पुनरुपलब्धेरद्विप्रवृत्तित्वादिति । अयमेव शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः तत्र विशेषे सत्यहेतुर्विशेषाभावादिति । यत्पुनरिदं संबन्धाच्चेति अस्ति च शब्दार्थयोः संबन्धोऽनुज्ञातः अस्ति च प्रतिषिद्धः । अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः प्राप्तिलक्षणस्तु शब्दार्थयोः संबन्धः प्रतिषिद्धः । कस्मात् । प्रमाणतोऽनुपलब्धेः‖ ।

प्रत्यक्षतस्तावच्छब्दार्थप्राप्ते¶र्नोपलब्धिरतीन्द्रियत्वात् । येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते । अस्ति चातीन्द्रियविषयभूतोऽप्यर्थः समानेन चेन्द्रियेण गृह्यमाणयोः प्राप्तिर्गृह्यत इति । प्राप्तिलक्षणे च गृह्यमाणे संबन्धे शब्दार्थयोः शब्दान्तिके **वार्थः स्यात् अर्थान्तिके वा शब्दः स्याद् उभयं वोभयत्र । अथ खल्वयम् ।

पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः ॥ ५३ ॥

स्थानकरणा††भावादिति चार्थः । न चायमनुमानतोऽप्युपलभ्यते

---

* सम्बद्धार्थप्रतिपादकत्वाच्चेति सूत्रार्थः । न्या॰ वा॰ ।

† प्रतारकवाक्यस्याप्रामाण्यादनुमानं शाब्द इति । तन्न । अनैकान्तिकत्वात् । संज्ञायां तर्के उपमाने च स्मृत्यपेक्षत्वात् । यत एव त्रिकालविषयत्वमपि न हेतुः । अन्वयव्यतिरेकोपपत्तिस्तु प्रत्यक्षे व्यभिचरिता । घटपटज्ञानयोरन्वयव्यतिरेकोपपत्तेः । अनुपलभ्यमानार्थत्व स्यास्ति न तु स्वर्गापूर्वदेवतादौ प्रत्यक्षानुमानागोचर इति वार्त्तिकम् । तथेति २ । ३ पा ।

‡ प्रत्यायनाङ्गान्वयव्यतिरेकज्ञानं त्वन्यादृशं शाब्दे । अन्यादृशं त्वनुमाने । तद्धि पक्षधर्मतापेक्षमनुमाने शाब्दे तु तदनपेक्षमित्यत्र सूत्रं भवति । ता॰ टी॰ ।

§ आप्ते प्रयुक्त इति ३ । १ । २ । ‖ अस्य मुद्रितपुस्तके सूत्रत्वेन लेखः प्रामादिकः ।

¶ प्राप्ते नोपलब्धिरिति ३ पा॰ । ** शब्दान्तिकमिति १ पाठः ।

†† करणाद्विति २ पा ।

शब्दान्तिके ऽर्थ इति । एतस्मिन्पक्षे ऽप्य*स्य स्थानकरणोच्चारणीयः शब्दस्तदन्तिके ऽर्थ इति अन्नाग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन् न च गृह्यन्ते† । अग्रहणान्नानुमेयः प्राप्तिलक्षणः‡ संबन्धः अर्थान्तिके§ शब्द इति । स्थानकरणासंभवाद् अनुच्चारणम्|| स्थानं कण्ठादयः करणं प्रयत्नविशेषः तस्यार्थान्तिके ऽनुपपत्तिरिति उभयप्रतिषेधाच्च नोभयम् । तस्मान्न शब्देनार्थः प्राप्त इति ।

## शब्दार्थव्यवस्थानादप्रतिषेधः॥ ५४ ॥

शब्दार्थप्रत्ययस्य** व्यवस्थादर्शनादनुमीयते ऽस्ति शब्दार्थसंबन्धो व्यवस्थाकारणम् । असंबन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः तस्मादप्रतिषेधः†† संबन्धस्येति । अत्र समाधिः ।

## न सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य ॥ ५५ ॥

न संबन्धकारितं‡‡ शब्दार्थव्यवस्थानं किं तर्हि समयकारितं यत्तदवोचामास्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषो ऽनुज्ञातः शब्दार्थयोः संबन्ध इति समयन्त||दवोचामेति । कः पुनरयं समयः । अस्य

---

* प्यास्मीति २ । ४ पा. ।   † गृह्यन्त इति २ । ४ पु. ।

‡ नानुमेयप्राप्तिलक्षण इति १ पु. ।

§ अथ शब्दो ऽर्थान्तिकमुपपद्यते तस्यानुपपत्तिर्व्याघातात् । नित्यः शब्दः संस्थानं त्यक्त्वा गच्छतीति व्याहतम् । अथ नागच्छत्यर्थदेश एव भवति । नित्यश्च भवति चेति व्याहतम् । न्या. वा. ।   || स्थानकरणासंभवादनुच्चारणमिति २ पु. ।

¶ अथ न गच्छति न भवति तत्र व्यञ्जको विततत्वादस्तीति चेत् । सर्वोपलब्धिप्रसङ्गात् । यदि सर्व एव शब्दा विततत्वादवस्थिताः स्थानकरणादिसन्निधाने सति व्यज्यन्त इति मन्यसे सर्वोपलब्धिः प्राप्ता यदेकस्य शब्दस्य व्यञ्जकं तच्छब्दान्तराणामपीति । विततत्वान्नित्यत्वाच्च शब्दो व्याप्त इति । स्वविषयप्राप्तस्थाने सति यत्र यत्र घटावस्थितानां गोशब्दादीनां व्यक्तौ ककुदादिमदर्थप्रत्यायनं स्यात् । सामान्यवदेतत्स्यात् । यथा सामान्यं सर्वत्रावस्थितं न सर्वत्रोपलभ्यते तथा शब्दोऽपीति चेत् । सामान्यस्याश्रयोपलब्धिर्व्यक्तिहेतुः न पुनः शब्दस्याश्रयोपलब्धिरस्ति । न च शब्दे वृत्तिः शब्दे वृत्तित्वं वाच्योपलब्ध्याधारत्वासम्भवेनापि प्राप्नोति यथा सामान्यम् । तस्मादनुमानादपि ... प्रतिपद्यते । एतच्च स्यात् ... न संबन्धो शब्दः गुणत्वात् । यत्र गवादिना शब्द प्रति ... समवायो नास्ति शब्दस्य कार्यत्वात् । नापि शब्दार्थयोरेकार्थसमवायः ... । उपमानस्य तु नार्थो विषयः । ... किं शब्दार्थौ ... इति । न चानुमानं शब्दः ... ।

** शब्दार्थप्रत्ययस्येति ३ पु. ।

†† शब्दः सम्बद्धो ऽर्थं प्रत्याययति प्रत्ययनियमहेतुत्वात्प्रदीपवत् । अथ वा संबद्धाभ्यां शब्दार्थाभ्यां प्रत्ययो भवति नियमात् । न्या. वा. ।

‡‡ न संबन्धकारितमिति १ पु. ।   || तमवोचाम इति २ पु. ।

शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेय*नियमनियोगः तस्मिन्नुपयुक्ते शब्दादर्थ†संप्रत्ययो भवति । विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः । संबन्धवादिनापि चायमवर्जनीय इति । प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम् । समयपालनार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया वाचोऽर्थो लक्षणम्‡ । पदसमूहो वाक्यमर्थपरिसमाप्ताविति । तदेवं प्राप्तिलक्षणस्य शब्दार्थसंबन्धस्यार्थंजुषोऽपि अनुमानहेतुर्न भवतीति ।

## जातिविशेषे चानियमात् ॥ ५६ ॥

सामयिकः शब्दादर्थसंप्रत्ययो न स्वाभाविकः । ऋ||ष्यार्यम्लेच्छानां यथाकामं शब्दनियोगो¶ऽर्थप्रत्यायनाय प्रवर्तते स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात् यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे** व्यभिचरतीति†† ।

## तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः‡‡ ॥ ५७ ॥

पुत्रकामेष्टिहवनाभ्यासेषु । तस्येति शब्दविशेषमेवाधिकुरुते भगवान् ऋषिः । शब्दस्य प्रमाणत्वं न संभवति§§ कस्मात् अनृतदोषात् पुत्रकामेष्टौ । पुत्रकामः पुत्रेष्ट्या यजेतेति नेष्टौ संस्थितायां पुत्रजन्म दृश्यते । दृष्टार्थस्य

---

* अभिधानाभिधेयेति १।२।३।४ पु॰ पा॰ ।   † शब्दार्थेति ४ पु॰ ।

‡ लोकतश्च समयो बोद्धव्यः । मात्रादींस्तेषु तेष्वर्थेषु तांस्तान् शब्दान् प्रयुञ्जानानुपलभ्य सोऽपि तथैव शिक्षितस्तानेव शब्दांस्तेषु तेष्वर्थेषु प्रयुङ्क्ते न पुनरेनं कश्चिल्लिपिविशेषमिव शिक्षयतीति । न्या॰ वा॰ ।

§ अर्थ सम्प्रत्यय इति २।४ पु पा॰ ।   || ऋषीति । ४ पु॰ नास्ति ।

¶ शब्दविनियोग इति ३ शब्दप्रयोग इति ४ पु पाठः ।   ** विशेषमिति २।४ पु॰ ।

†† यदि स्वाभाविकः शब्दार्थसंबन्धोऽभविष्यन्न जातिविशेषे शब्दार्थव्यवस्थाऽभविष्यत् । अस्ति तु जातिविशेषे प्रयोगः । जातिविशेषे यथाकामं प्रयोगो दृष्टः न तु स्वाभाविकेन संबन्धेन संबद्धानां जातिविशेषे व्यभिचारो दृष्टः । न हि प्रदीपोऽस्माकमन्यथा प्रकाशयत्यन्यथा जातिविशेष इति । न्या॰ वा॰ ।

‡‡ तदित्यधिकारः । यस्मात्प्राप्तमपि प्रकरणेन शब्दं तच्छब्देन पुनरभिधत्ते तेन ज्ञापयति शब्दविशेषं प्रतीयं चिन्ता न शब्दमात्रं प्रति । अन्यथैवं वक्तव्यम् अप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य इति अप्रामाण्यमर्थस्याप्रत्यायकत्वम् । अनृतत्वमयथार्थाभिधानम् । व्याघातः पदयोर्वाक्ययोर्वा सहासंभवः पुनरुक्तं पूर्वाभिहितार्थाभिधानम् । न्या॰ वा॰ ।   §§ भवतीति २।४ ।

वाक्यस्याऽनृतत्वाद् अदृष्टार्थमपि वाक्यम् अग्निहोत्रं जुहुयात् स्वर्गकाम इत्याद्यनृतमिति ज्ञायते । विहितव्याघातदोषाच्च । हवने* उदिते होतव्यम् अनुदिते होतव्यं समयाध्युषिते होतव्यमिति विधाय विहितं व्याहन्ति श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति †श्यावशबलौ वास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति व्याघाताच्चान्यतरन्मिथ्येति । पुनरुक्तदोषाच्च अभ्यासे देश्यमाने । त्रिः प्रथमामन्वाह त्रिरुत्तमामिति पुनरुक्तदोषो भवति पुनरुक्तं च प्रमत्तवाक्यमिति । तस्मादप्रमाणं शब्दः‡ इति । §अनृतव्याघातपुनरुक्तदोषेभ्य इति ।

## न कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥

नानृतदोषः पुत्रकामेष्टौ कस्मात् कर्मकर्तृसाधनवैगुण्यात् । इष्ट्या पितरौ संयुज्यमानौ पुत्रं जनयत इति । इष्टिः करणं साधनं पितरौ कर्तारौ संयोगः कर्म त्रयाणां गुणयोगात् पुत्रजन्म । वैगुण्याद्विपर्ययः । ‖इष्ट्याश्रयं तावत्कर्मवैगुण्यं समीहाभ्रेषः । कर्तृवैगुण्यम् अविद्वान् प्रयोक्ता ¶कपूयाचरणश्च । साधनवैगुण्यं हविरसंस्कृतमुपहतमिति मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति । दक्षिणा दुरागता** हीना निन्दिता चेति । ††उपजनाश्रयं कर्मवैगुण्यं मिथ्यासंप्रयोगः । कर्तृवैगुण्यं योनिव्यापादो बीजोपघातश्चेति । साधनवैगुण्यम् इष्टावभिहितम् । लोके चाग्निकामो दारुणी मथ्नीयादिति विधिवाक्यं तत्र कर्मवैगुण्यं मिथ्याभिमन्थनं कर्तृवैगुण्यं प्रज्ञाप्रयत्नगतः प्रमादः साधनवैगुण्यम् आर्द्रं सुषिरं दार्विति तत्र फलं न निष्पद्यत इति नानृतदोषः‡‡ । गुणयोगेन फलनिष्पत्तिदर्शनात् । न चेदं लौकिकाद्भिद्यते पुत्रकामः पुत्रेष्ट्या यजेतेति ।

---

* हवने इति २ पु० नास्ति । † श्यावः शबलो वास्याहुतिमभ्यवहरतीति ३ पु० पा० ।

‡ दृष्टान्तत्वेनैतानि वाक्यान्युपन्यस्य एककर्तृकत्वेन शेषवाक्यानामप्रामाण्यमिति । अग्निहोत्रादिवाक्यानां वा ऽप्रामाण्यं तदन्यथानुपपत्तेः । न्या० वा० ।

§ अप्रयोजकत्वादि १ । ३ । ४ पु० पाठः । ‖ इष्ट्याश्रयमिति १ । २ पु० ।

¶ कुपूयेति ४ पा० । ** दुरधिगतेति ३ । ४ पा० ।

†† चर्चा उपजनाश्रयमिति ४ । २ यथोपजनाश्रयमिति ३ पु० पाठः ।

‡‡ [illegible]

*अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५९ ॥

न व्याघातो हवन इत्यनुवर्तते । योऽभ्युपगतं हवनकालं भिनत्ति ततोऽन्यत्र जुहोति तत्रायमभ्युपगतकालभेदे दोष उच्यते श्यावो †वा-स्याहुतिमभ्यवहरति य उदिते जुहोति तदिदं विधिभ्रेषे निन्दावचनमिति ।

अनुवादोपपत्तेश्च ॥ ६० ॥

पुनरुक्तदोषोऽभ्यासेनेति प्रकृतम् । अनर्थकोऽभ्यासः पुनरुक्तः अर्थवान-भ्यासोऽनुवादः‡ । योऽयमभ्यासस्त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यनुवाद उपपद्यते अर्थवत्त्वात् । त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधे-नीनां भवति । तथा च मन्त्राभिवादः इदमहं भ्रातृव्यं पञ्चदशावरेण§ वाग्वज्रेण बाधे योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति पञ्चदशसामिधेनीर्व-ज्रमन्त्रोऽभिवदति तदभ्यासमन्तरेण न स्यादिति ।

वाक्यविभागस्य चार्थग्रहणात्‖ ॥ ६१ ॥

प्रमाणं शब्दो यथा लोके । विभागश्च ब्राह्मणवाक्यानां त्रिविधः ।

विध्यर्थवादानुवादवचनविनियोगात् ॥ ६२ ॥

त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि विधिवचनान्यर्थवाद-वचनान्यनुवादवचनानीति । तत्र ।

विधिर्विधायकः ॥ ६३ ॥

यद्वाक्यं विधायकं चोदकं स विधिः । विधिस्तु नियोगोऽनुज्ञा वा । यथाग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि ।

स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ६४ ॥

---

* यत्पुनर्व्याघातदोषादिति तत्रोच्यते । न्या· वा । † वेति १ पु· नास्ति ।

‡ पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृतविशेषस्य यत्पुनर्वचनम् । अनुवादस्तु पुनःश्रुतिसामान्यादङ्गीकृतविशेषस्यार्थस्य वाद । एवं च सति यथोक्तो न दोषः । पुनरामेडितवाक्यानि प्रमाणं वेदैकदेशत्वात् भूमिरावपनं महदिति वाक्यवत् । पदार्थादिनियमात् द्वादश मासाः संवत्सर इति वाक्यवत् । वक्तृविशेषाभिहितत्वात् अग्निर्हिमस्य भेषजमिति वाक्यवत् । न्या· वा· । § पञ्चदशावरेणेति १ । ३ पु· पाठ ।

‖ समस्तानि वेदवाक्यानि पक्षीकृत्याभिधीयते । प्रमाणं वेदवाक्यान्यर्थ-विभागत्वान्मन्त्रादिवाक्यवत् । न्या· वा । ¶ विनियोग इति ३ पु· ।

विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः संप्रत्ययार्था* स्तूयमानं श्रद्दधीतेति । प्रवर्त्तिका च फलश्रवणात् प्रवर्तते सर्वजिता† वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवै‡तेनाप्नोति सर्वं जयतीत्येवमादि । अनिष्टफलवादो निन्दा वर्जनार्था§ निन्दितं न समाचरेदिति स ‖एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वा ऽन्येन यजते गर्त्ते पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा इत्येवमादि । अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः । हुत्वा वपामेवाग्रे ऽभिघारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रे ऽभिघारयन्ति अग्नेः प्राणाः पृषदाज्य¶स्तोममित्येवमभिदधतीत्येवमादि । ऐतिह्यसमाचरितो विधिः पुराकल्प इति तस्माद्वा एतेन ब्राह्मणा **बहिः पवमानं†† सामस्तोममस्तौषन् योने यज्ञं प्रतनवामहे इत्येवमादि । कथं परकृतिपुराकल्पावर्थवादाविति स्तुतिनिन्दावाक्येनाभिसंबन्धाद्विध्याश्रयस्य कस्य‡‡चिदर्थस्य द्योतनादर्थवाद इति ।

## विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥

विध्यनुवचनं चानुवादो विहितानुवचनं च । पूर्वः शब्दानुवादो ऽपरो ऽर्थानुवादः । यथा पुनरुक्तं द्विविधमेव§§मनुवादोऽपि । किमर्थं पुनर्विहितमनूद्यते । अधिकारार्थं विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा विधिशेषो वा ऽभिधीयते । विहितानन्तरार्थो ऽपि चानुवादो भवति एवमन्यदप्युत्प्रेक्षणीयम् । लोके ऽपि च विधिरर्थवादो ऽनुवाद इति च त्रिविधं वाक्यम् । ओदनं पचेदिति विधिवाक्यम् । अर्थवादवाक्यमायुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम् । अनुवादः पचतु पचतु भवानित्यभ्यासः क्षिप्रं पच्यतामिति वा अङ्ग पच्यतामित्यध्येषणार्थम् । पच्यतामेवेति वा‖‖वधारणार्थम् । यथा लौकिके वाक्ये विभागेनार्थग्रहणात्प्रमाणत्वम् एवं ¶¶वेदवाक्यानामपि विभागेनार्थग्रहणात्प्रमाणत्वं भवितुमर्हतीति ।

---

* सम्प्रत्ययार्थं इति ६ पु० सम्प्रत्ययार्था इति ४ पु० । † सर्वजितो वै देवा इति ३ पु० ।
‡ सर्वमेव तेनाप्नोतीति २ पु० । § निन्दावर्जनार्था इति ३ । ४ ।
‖ स एष वा प्रथम इति १ । ३ पु० पा० । ¶ पृषदाज्यमिति ३ । ४ पु० पा० ।
** पुरा ब्राह्मणा बहिः ३ । ४ इतिरिति १ पु० पाठः । †† पवमानमस्तौषिति ३ । ४ ।
‡‡ कस्य कस्येति ३ । ३ । कस्य कस्येति ४ पु० ।
§§ अनित्यो ऽनित्य इति शब्दपुनरुक्तमनित्यो निरोधधर्मक इत्यर्थपुनरुक्तम् ।
‖‖ चेति १ । २ । ३ । ४ । ¶¶ तथा वेदे ऽपि भवितुमर्हतीति ३ । ४ पु० ।

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ ५९ ॥**

पुनरुक्तमसाधु साधुरनुवाद इति अयं विशेषो नोपपद्यते । कस्मादु-भयत्र हि प्रतीतार्थः शब्दो ऽभ्यस्यते चरितार्थस्य शब्दस्याभ्यासादुभय-मसाध्विति* ।

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६० ॥**

नानुवादपुनरुक्तयोरविशेषः । कस्माद् अर्थवतो †ऽभ्यासस्यानुवादभा-वात् । समाने ऽभ्यासे पुनरुक्तमनर्थकम्‡ । अर्थवानभ्यासो ऽनुवादः शीघ्र-तरगमनोपदेशवत्§ । शीघ्रं शीघ्रं|| गम्यतामिति क्रियातिशयो ऽभ्यासेनै-वोच्यते । उदाहरणार्थं चेदम् । एवमन्यो ऽप्यभ्यासः¶ पचति पचतीति क्रियानुपरमः । ग्रामो ग्रामो रमणीय इति व्याप्तिः । परि परि त्रिगर्तेभ्यो वृष्टो देव इति परिवर्जनम् । अध्यधिकुड्यं निषण्णमिति सामीप्यम् । तिक्तं तिक्तम् इति प्रकारः । एवमनुवादस्य स्तुतिनिन्दाशेषविधि**ष्वधिकारार्थता विहितानन्तरार्थता चेति । किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्वं सिध्यति†† । अतश्च ।

**मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६८ ॥**

किं पुनरायुर्वेदस्य प्रामाण्यं यत्तदायुर्वेदेनोपदिश्यते इदं कृत्वेष्टमधिग-च्छतीदं वर्जयित्वा ऽनिष्टं जहाति तस्यानुष्ठीयमानस्य तथाभावः सत्यार्थता ऽविपर्ययः । मन्त्रपदानां च विष‡‡भूताशनिप्रतिषेधार्थानां प्रयोगे ऽर्थस्य तथाभाव एतत्प्रामाण्यम् । किंकृतमेतद् आप्तप्रामाण्यकृतम् । किं पुनराप्तानां प्रामाण्यं साक्षात्कृतधर्मता भूत§§दया यथाभूतार्थचिख्यापयिषेति । आप्ताः खलु साक्षात्कृतधर्माण इदं हातव्यमिदमस्य हानिहेतुरिदमस्याधिगन्तव्य-

---

* प्रतीतार्थशब्दाभ्यासो ऽर्थशादपुनरुक्तयोः सामान्यमतः प्रतीतार्थशब्दा-भ्यासादुभयमसाध्विति । न्या वा ।

† अभ्यासार्थं विशेषइति ३ पु ।    ‡ अनर्थमिति २ ४ ।

§ अर्थवाननुवादलक्षणो ऽभ्यासः प्रत्ययविशेषहेतुत्वाच्छीघ्रतरगमनोपदे-शवत् । न्या वा ।

|| शीघ्रं गम्यतामिति २ शीघ्रे शीघ्रं गम्यतां शीघ्रतरं गम्यतामिति १ । ३ । ४ पु ।

¶ एवमन्ये ऽप्यभ्यासा इति ४ ।    ** विध्यधिकारार्थतेति २ । ४ ।

†† प्रमाणत्वं न सिध्यति । ३ पु ।    ‡‡ विषभूतेति २ । ३ । ४ पु ।

§§ भूते तदभया यथाभूतार्थतार्थेति १ ।

मिदमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते । तेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति । न चानवबोधे समीहा वर्जनं वा न वा* ऽकृत्वा स्वस्तिभावो नाप्यस्यान्य उपकारको ऽप्यस्ति । हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामस्तइमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्त्यधिगन्तव्यमेवाधिगमिष्यन्तीति । एवमाप्तोपदेशः । एतेन त्रिविधेनाप्तप्रामाण्येन परिगृहीतो ऽनुष्ठीयमानो ऽर्थस्य साधको भवति एवमाप्तोपदेशः प्रमाणम् । एवमाप्ताः प्रमाणम् । दृष्टार्थेनाप्तोपदेशेनायुर्वेदेनाऽदृष्टार्थो वेदभागो ऽनुमातव्यः प्रमाणमिति । आप्तप्रामाण्यस्य हेतोः समानत्वादिति । अस्यापि चैकदेशो ग्रामकामो यजेतेत्येवमादिर्दृष्टार्थस्तेनानुमातव्यमिति लोके च भूयानुपदेशाश्रयो व्यवहारः । लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञान†परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यं तत्परिग्रहादाप्तोपदेशः प्रमाणमिति । द्रष्टृप्रवक्तृसामान्याच्चानुमानं य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनाम् इत्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमिति‡ । नित्यत्वाद् वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम् । शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं न नित्यत्वात्§ । नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः । नानित्यत्वे वाचकत्वमिति चेद् न लौकिकेष्व‖दर्शनात् । ¶ ते ऽपि नित्या इति चेद् न । अनाप्तोपदेशादर्थविसंवादो ऽनुपपन्नः । नित्यत्वाद्धि शब्दः प्रमाणमिति । अनित्यः स इति चेद् अविशेषवचनम् । अनाप्तोपदेशो लौकिको न नित्य इति कारणं वाच्यमिति । यथानियोगं चार्थस्य प्रत्यायनाद् नामधेयशब्दानां लोके प्रामाण्यं नित्यत्वात्प्रामाण्यानुपपत्तिः । यत्रार्थे

---

* न चाकृत्वेति ३ । ४ । पु० पा० ।　　　† उपदेष्टव्यार्थज्ञानेन परेति ४ पु० पाठः ।

‡ अस्य प्रयोगः प्रमाणं वेदवाक्यानि वक्तृविशेषाभिहितत्वान्मन्त्रायुर्वेदवाक्यवत् । एककर्तृकत्वेन वा मन्त्रायुर्वेदवाक्यानि पक्षीकृत्यालौकिकार्थप्रतिपादकत्वेन वैधर्म्यहेतुर्वक्तव्यः । न्या० वा० ।

§ चाक्षिद्दं नित्यत्वम् । के चित्तु न किं चिदिदं प्रमाणमस्तीत्याहुः । तच्च मन्वादि वाक्यस्याप्य नित्यस्यापि प्रमाणत्वात् । तस्मादर्थविभागवत्त्वादनित्यत्वं वैदिकवाक्यवत् । तान्यपि नित्यानीति चेन्न अर्थविभागानुपपत्तेः । वर्णवत्त्वात् सामान्यविशेषवत्त्वे सति चोत्रग्राह्यत्वादस्मदादिवाक्यानित्यत्वम् ।

‖ अर्थदर्शनादिति ३ । ४ पु० ।　　　¶ नित्यत्वमिति । १ । २ । ३ । ४ । पु० पा०

नामधेयशब्दो नियुज्यते लोके तत्र*नियोगसामर्थ्यात्प्रत्यायको भवति न नित्यत्वात् । मन्वन्तरयुगान्तरेषु चातीतानागतेषु संप्रदायाभ्यासप्रयोगा†विच्छेदो वेदानां नित्यत्वम् । आप्तप्रामाण्याच्च प्रामाण्यं लौकिकेषु शब्देषु चैतत्समानमिति ।

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्याद्यमाह्निकम् ।

अयथार्थः‡ प्रमाणोद्देश इति मत्वा ऽऽह ।

## न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाऽभावप्रामाण्यात्§ ॥ १ ॥

न चत्वार्य्येव प्रमाणानि किं तर्ह्यैतिह्यमर्थापत्तिः संभवो ऽभाव इत्येतान्यपि प्रमाणानि तानि|| कस्मान्नोक्तानि । इति होचुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारंपर्यमैतिह्यम् । अर्थादापत्तिरर्थापत्तिः । आपत्तिः प्राप्तिः प्रसङ्गः¶ यथा ऽभिधीयमाने ऽर्थे यो ऽन्यो ऽर्थः प्रसज्यते सोऽर्थापत्तिः । यथा मेघेष्वसत्सु वृष्टिर्न भवतीति किमत्र प्रसज्यते सत्सु भवतीति । सम्भवो नामाविनाभाविनो ऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम् । यथा द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम् आढकस्य ग्रहणात्प्रस्थस्येति । अभावो विरोधी अभूतं भूतस्याविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकं विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म न भवतीति । सत्यम् एतानि प्रमाणानि न तु प्रमाणान्तराणि** । प्रमाणान्तरं च मन्यमानेन प्रतिषेध उच्यते । सोयम् ।

---

* तस्येति । १ । २ । ३ । ४ । पु० पा०

† तान्येव वेदवाक्यानि मन्वन्तरयुगान्तरेषु संप्रदायाभ्यासाविच्छेदेन वर्तन्ते । तद पेक्षया लौकिका शब्दान् प्रयुञ्जते नित्या वेदा इति । नित्याः पर्वता इति यथा । एतच्च मन्वादि वाक्येषु समानम् । न पुनर्नित्यत्वादेव तथा प्रयोग अनित्यत्वप्रमाणानामप्रत्याहतत्वात् । उपचरितं तु नित्यत्वम् ।

‡ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रम् । तत्राक्षेपः । न चत्वार्येव प्रमाणानि ऐतिह्यादीनां प्रमाणान्तरत्वात् । संशयव्युदासार्थं वा प्रकरणं किमैतिह्यादयो विद्यमाना नोक्ता उताविद्यमाना इति । विधिन्यूनतापरिहारार्थं वा प्रकरणम् । विद्यमानानामैतिह्यादीनाम नुक्तिः । यदि ते दुष्टा दोषो वक्तव्यः । अनभिधाने शास्त्रस्य न्यूनता । प्रत्यक्षादिष्वन्तर्भावप्रदर्शनार्थं वा प्रकरणम । ननु चत्वार्येव प्रमाणानीति नियमबोधनादेवान्येषामुक्तेष्वन्तर्भाव प्रतीयते । सत्यम् । सामान्येन ज्ञातेपि कस्य कुत्रान्तर्भाव इति विशेषतो ज्ञानात् । अत इदं प्रकरणमारब्धमेव । § परैरभ्युपगतादस्माकं संशयादिति सूत्रार्थः । ता० टी ।

|| तानि कस्मान्नोक्तानीति १ । ३ पु नास्ति । ¶ वर्षेति १ । ३ । ४ ।

** तान्येतान्यैतिह्यादीनि मतभेदादेष्वेवान्तर्भवन्तीति न पृथगुच्यन्ते । प्रत्यक्षाद्यनधिगतविषयाभावाच्च । अथ प्रयोजनभेदाद्भेदो ऽभ्युपगम्यते तर्हि प्रमाणानन्त्यापत्तावष्टत्वप्रतिज्ञा

*शब्दऐतिह्यानर्थान्तरभावादनुमाने ऽर्थापत्तिसम्भवा-
भावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥

अनुपपन्नः प्रतिषेधः । कथम् आप्तोपदेशः शब्द इति न च शब्द-लक्षणमैतिह्याद्व्यावर्तते सोऽयं भेदः सामान्यात्संगृह्यतइति । प्रत्यक्षेणाप्रत्यक्षस्य सम्बद्धस्य प्रतिपत्तिरनुमानम् । तथा चार्थापत्तिसम्भवाभावाः† वाक्यार्थसंप्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद्ग्रहणमर्थापत्तिरनुमानमेव‡ । अविनाभाववृत्त्या च सम्बद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवः तदप्यनुमानमेव । अस्मिन्सतीदं नोपपद्यतइति विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते । सो ऽयं यथार्थ एव प्रमाणोद्देश इति । सत्यमेतानि प्रमाणानि न तु प्रमाणान्तराणीत्युक्तम् अर्थापत्तेः प्रमाणभावाभ्यनुज्ञा नोपपद्यते तथा हीयम् ।

अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥

असत्सु मेघेषु वृष्टिर्न भवतीति सत्सु भवतीत्येतदर्थादापद्यते सत्स्वपि चैकदा न भवति सेयमर्थापत्तिरप्रमाणमिति§ । नानैकान्तिकत्वमर्थापत्तेः ।

अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥

असति कारणे कार्यं नोत्पद्यतइति वाक्यात्प्रत्यनीकभूतो ऽर्थः सति कारणे कार्यमुत्पद्यते इत्यर्थादापद्यते । अभावस्य हि भावः॥ प्रत्यनीक

---

वाच्येन । शीतोष्णादिप्रत्यक्षरूपभेदेनेन्द्रियस्याभेदात्प्रत्यक्षभेदः प्रमाणभेदव्यभिचारी च । अथ तेषां प्रत्यक्षत्वेन प्रयोजनैक्यं तर्हि ऐतिह्यादीनामपि प्रत्यक्षादावन्तर्भावो नानुपपन्नः ।

* अन्तर्भावप्रदर्शनार्थं सूत्रम् । न्या० वा० ।

† अर्थापत्तिसम्भवाभावः वाक्यार्थं इति २ ।

‡ द्वयोरेकतरनिषेधस्य ऽन्यतराभ्यनुज्ञाविषयत्वाद् यथा दिवा न भुङ्क्ते इत्यभिधानाद्रात्रौ भुङ्क्ते इति गम्यते । दिवा न भुङ्क्ते इति तु न । अस्यार्थस्यार्थेनैव निरस्तत्वात् । न हि भुञ्जानो ऽपि भुङ्क्ते एव क्रियान्तरपरिहारस्यार्थभवात् । तस्माद्दिवैव न भुङ्क्ते इति वक्तव्यम् । तथा च रात्रौ भुङ्क्ते इति गम्यते । सामान्यतो दृष्टं चानुमानमेव बोध्यम् ।

§ अर्थापत्तिभावस्य पक्षीकरणे ऽनैकान्तिकत्वमव्यापकम् । अनैकान्तिकत्वाः पक्षीकरणे सिद्धसाधनम् । हेत्वभावाच्च । व्यतुल्यहेतोः पक्षविशेषणत्वात् । अनैकान्तिकत्वा अप्रमाणत्वेऽर्थापत्तेरस्याः प्रामाण्याभ्युपगमाभाव प्रतिज्ञाव्याघातश्च ।

॥ भावः प्रत्यनीक इति ४ । ३ पु० पा० ।

इति । सोयं कार्योत्पादः सति कारणे ऽर्थादापद्यमानो न कारणस्य सत्तां व्यभिचरति । न खल्वसति कारणे कार्यमुत्पद्यते तस्मान्नानैकान्तिकी* । यत्तु सति कारणे निमित्तप्रतिबन्धात्कार्यं नोत्पद्यते इति कारणधर्मो ऽसौ न त्वर्थापत्तेः प्रमेयम् । किं तर्ह्यस्याः प्रमेयं सति कारणे कार्यमुत्पद्यत इति यो ऽसौ कार्योत्पादः कारणसत्तां न व्यभिचरति तदस्याः प्रमेयम् । एवं [redacted] सत्यनर्थापत्तावर्थापत्त्यभिमानं कृत्वा प्रतिषेध उच्यते इति । दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति ।

## प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥

अर्थापत्तिर्न प्रमाणम् अनैकान्तिकत्वादिति वाक्यं प्रतिषेधः । तेनानेनार्थापत्तेः प्रमाणत्वं प्रतिषिध्यते न सद्भावः‡ एवमनैकान्तिको भवति । अनैकान्तिकत्वादप्रमाणेनानेन न कश्चिदर्थः प्रतिषिध्यते इति । अथ मन्यसे नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति न च प्रतिषेधस्य सद्भावो विषयः§ एवं तर्हि ।

## ‖तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥

अर्थापत्तेरपि कार्योत्पादेन कारणसत्ताया अव्यभिचारो विषयः । न च कारणधर्मो निमित्तप्रतिबन्धात् कार्यानुत्पादकत्वमिति ।

अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोपपद्यते कथमिति ।

---

* नानैकान्तिको ऽयमिति २ । नानैकान्तिकीयं किम्बिति ३ पु० पा ।

† न ह्यत्र सत्सु मेघेषु वृष्टिर्भवत्येवेति प्रमेयं किं तु सत्स्वेव भवतीति । तथा चापि कार्यस्य कारणाव्यभिचारात् ।

‡ कथं न सत्ताप्रतिषेधः । यस्मादर्थापत्तिविशेषः प्रतिषिध्यते न त्वर्थापत्तिमात्रं तेन सत्ताप्रतिषेधादनैकान्तिको भवति । न्या० वा० ।

§ अथ मन्यसे न प्रतिषेधस्य सत्त्वं विषयः किं [redacted] प्रमाणत्वं सो ऽयं प्रतिषेधः स्वविषये वर्तमानो नानैकान्तिको भवितुमर्हति अनैकान्तिको हि नाम स ज्ञेयो यः स्वविषयतज्जातीयान्यवृत्तिः । न चानैकान्तिकं प्रमाणमस्ति तस्मान्नानैकान्तिकः प्रतिषेधः । न्या० वा ।

‖ यदि स्वविषयतज्जातीयान्यवृत्तिरनैकान्तिक इति मन्यसे अर्थापत्तिरपि तर्ह्यनैकान्तिकी न भवति । न ह्यसति कारणे कार्यमुत्पद्यमानं दृष्टमिति । तदिदं सूत्रं व्याघातदर्शनार्थम् । न्या० वा० ।

## *नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥

अभावस्य भूयसि प्रमेये लोकसिद्धे वैयात्यादुच्यते नाभावप्रामाण्यं प्रमेयासिद्धेरिति । अथायमर्थबहुत्वादर्थैकदेश उदाह्रियते ।

## लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः† ॥ ८ ॥

तस्याभावस्य सिध्यति प्रमेयम् । कथं लक्षितेषु वासःसु अनुपादेयेषु उपादेयानामलक्षितानामलक्षणलक्षितत्वाद् लक्षणाभावेन लक्षितत्वादिति । उभयसंनिधावलक्षितानि वासांस्यानयेति प्रयुक्तो येषु वासस्सु लक्षणानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यते‡ प्रतिपद्य चानयति प्रतिपत्तिहेतुश्च प्रमाणमिति ।

## असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥

यत्र भूत्वा कि चिन्न भवति तत्र तस्याभाव उपपद्यते अलक्षितेषु च वासस्सु लक्षणानि भूत्वा न भवन्ति । तस्मात्तेषु लक्षणाभावोऽनुपपन्न इति । नान्यलक्षणोपपत्तेः यथाऽयमन्येषु वासस्सु लक्षणानामुपपत्तिं पश्यति नैवमलक्षितेषु सोऽयं लक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यत§ इति ।

## तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥

तेषु वासस्सु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति न तेषामभावो लक्षणानाम् । यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभाव इत्यहेतुः । यानि खलु भवन्ति तेषामभावो व्याहत इति ।

## न लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥

न ब्रूमो यानि लक्षणानि भवन्ति तेषामभाव इति किं तु केषु चिल्लक्षणान्यवस्थितानि अनवस्थितानि केषु चिदपेक्षमाणो येषु लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यत इति ।

---

* नाभावः प्रमाणं विषयाभावात् । यदविषयं तदप्रमाणं यथा गोशब्दोऽश्वप्रतिपादने तथा चाभावस्तस्मादप्रमाणमिति । कथं चेन्नमादाभावः प्रमाणमपि स्वभावविषया प्रतिपत्तिः प्रमाणं तथा प्रमीयत इति । न्या० वा ।

† सिद्धिरिति ३ । ४ पु० पा० । ‡ प्रमेयप्रतिपत्त्योरेकविषयत्वात् । न्या० वा० ।

§ यथार्थो ऽयमुपालम्भ इत्यत उक्तार्थे नान्यलक्षणोपपत्तेरिति सूत्रम् । न्या वा ।

प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

अभावद्वैतं खलु भवति प्राक् चोत्पत्तेरविद्यमानता उत्पन्नस्य चात्मनो हानादविद्यमानता । तत्रालक्षितेषु वाससु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति* ।

आप्तोपदेशः शब्द इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते तस्मिन् सामान्येन विचारः किं नित्योऽथानित्य इति । विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः† । आकाशगुणः शब्दो विभु‡र्नित्योऽभिव्यक्तिधर्मक इत्येके§ । गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे|| । आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे¶ । महाभूतसंक्षोभजः शब्दोऽनाश्रितः उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये** । अतः संशयः किमत्र तत्त्वमिति । अनित्यः†† शब्द इत्युत्तरम् । कथम् ।

आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च ॥ १३ ॥

आदिर्योनिः कारणम् आदीयते अस्मादिति । कारणवदनित्यं‡‡ दृष्टम् । संयोगविभागजश्च शब्दः कारणवत्त्वादनित्य इति । का पुनरियमर्थदेशना कारणवत्त्वादिति उत्पत्तिधर्मकत्वादनित्यः शब्द इति भूत्वा न भवति विनाशधर्मक इति सांशयिकमेतत् किमुत्पत्तिकारणं संयोगविभागौ शब्दस्य आहोस्विदभिव्यक्तिकारणमित्यत आह । ऐन्द्रियकत्वाद् इन्द्रियप्रत्यासत्ति-

---

* असत्यर्थे नाभावस्तन्सिद्धेरलक्षितेष्वहेतुरित्येते उभे छलसूत्रे छलस्योत्तरं ज्ञात्वा ऽज्ञात्वा ऽसदुत्तरमज्ञानं चेति तस्मादनयोरन्ये छलमिति । न्या॰ वा॰ ।

† मुद्रितपुस्तके अयं सूत्रत्वेन लेखः प्रामादिकः ।

‡ विभुर्नित्य इति क्व चित् । मन्येतासत्यामिति ३ । ४ पु॰ पा॰ ।

§ मीमांसकाः । || सांख्याः ¶ वैशेषिकाः ** बौद्धाः ।

†† नित्यः शब्दः अविनश्यदाधारैकद्रव्यवृत्तित्वात् आकाशगतमहत्त्ववदिति प्रयोगः । सो [illegible] नित्यः सन्नभिव्यक्तिधर्मा तस्याभिव्यञ्जकाः संयोगविभागनादा इति ।

‡‡ उभयान्तपरिच्छिन्नवस्तुसत्ता ऽनित्यता । उभयान्तापरिच्छिन्ना वस्तुसत्ता च नित्यता । प्रागभावप्रध्वंसाभावसंबन्धित्वमनित्यत्वमिति तु न । भावाभावयोः संबन्धस्य दुर्निरूपत्वात् । उत्पत्तेरनन्तरं विनाशाच्च प्राक् प्रागभावप्रध्वंसयोरभावेन तत्कालीनवस्तुनोऽनित्यत्वव्यवहारानुपपत्तेश्च । अत एव विनाशहेतुमत्त्वमनित्यत्वमित्यपि निरस्तम् । यत्नुपलब्धिलक्षणप्राप्तस्यात्मसमनुपलभ्यता ऽनित्यत्वमिति तन्न । अनुपजातविरोधस्य वस्तुनस्तिरोभावानुपपत्ते ।

‡‡ निमित्तकारणभेदानुविधानं कारणवत्त्वम् । तदभिव्यङ्ग्येषु नास्ति । न हि किं चिदभिव्यज्यमानं निमित्तकारणभेदानुविधायि दृष्टमिति । न्या॰ वा॰ ।

ग्राह्य ऐन्द्रियकः किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवद् अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो* गृह्यत इति ।

**संयोगनिवृत्तौ शब्दग्रहणान्न व्यञ्जकेन समानदेशस्य ग्रहणम् ।** दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते । न च व्यञ्जकाभावे व्यङ्ग्यग्रहणं भवति तस्मान्न व्यञ्जकः संयोगः । उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणम् इति युक्तं संयोगनिवृत्तौ शब्दस्य ग्रहणमिति । इतश्च शब्द उत्पद्यते नाभिव्यज्यते कृतकवदुपचारात् । तीव्रं मन्दमिति कृतकमुपचर्यते तीव्रं सुखं मन्दं सुखं तीव्रं दुःखं मन्दं दुःखमिति । उपचर्यते च तीव्रः शब्दो मन्दः शब्द† इति ।

**व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दता रूपवदिति चेद् न अभिभवोपपत्तेः ।** संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति न तु शब्दो भिद्यते यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति तच्च नैवम् अभिभवोपपत्तेः । तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभिभवति न मन्दः । न च शब्दग्रहणमभिभावकं शब्दश्च न

---

* ततः किम् । यदीन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकस्ततो न व्यज्यते । न हि व्यज्यमानस्येन्द्रियप्रत्यासत्तिर्युक्ता । कथमिति । न तावच्छ्रोत्रं शब्ददेशमुपगच्छति अमूर्तत्वात् । अमूर्तं हि निष्क्रियं रूपादिवत् क्रियाकारणगुणसमवायात् क्रियावत्त्वमिति । न आत्मनि व्यभिचारात् । महत्परिमाणेन क्रियाप्रतिबन्धाच्च । तस्मात्क्रियाकारणगुणसमवाये सति मूर्तत्वं क्रियाहेतुस्तस्याकाशेऽभावाच्च क्रियावत्त्वम् । न चाप्राप्तस्य शब्दस्य ग्रहणं युक्तं सर्वदेशस्थशब्दोपलब्धिप्रसङ्गात् । परिशेषात्तु सन्तानसिद्धिः । तत्राद्यः शब्दः संयोगविभागहेतुकस्तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन सर्वदिक्कानि तेभ्यः प्रत्येकमेकैकः शब्दो मन्दतरतमादिभावेनान्यथाप्रतिबन्धमनुविधीयमानः प्रादुरस्ति । ततोऽन्त्यस्यातिमान्द्याच्छब्दान्तरोत्पत्तिशक्तिप्रतिबन्धो भवतीत्यतः शब्दसन्तानोच्छेदः । तत्र यः कर्णशष्कुलीमन्तरमाकाशं प्राप्नोति स उपलभ्यते नेतर इति । तस्मादैन्द्रियकं तच्चान्यथा न युक्तमित्यतोऽनित्य इति । न्या० वा० ।

† अस्य प्रयोगः । अनित्यः शब्दस्तीव्रमन्दशब्दविषयत्वात् सुखवदिति । कृतकवदुपचारादित्यनेन सर्वो नित्यत्वसाधनधर्मसंग्रहः । कृतकशब्दग्रहणार्थत्वात् । यथा सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् । उपलभ्यस्यानुपलब्धिकारणाभावे सत्यनुपलब्धेर्गुणस्य सतोऽस्मदादिप्रत्यक्षत्वादित्येवमादि । न्या० वा० ।

भिद्यते शब्दे भिद्यमाने युक्तो ऽभिभवः तस्मादुत्पद्यते शब्दो नाभिव्यज्यत* इति ।

**अभिभवानुपपत्तिश्च व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावात्** । व्यञ्जकेन समानदेशो ऽभिव्यज्यते शब्द इत्येतस्मिन्पक्षे नोपपद्यते ऽभिभवः । न हि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति ।

**अप्राप्ते ऽभिभव इति चेच्छब्दमात्राभिभवप्रसङ्गः** । अथ मन्येतासत्यां प्राप्तावभिभवो भवतीति । एवं सति यथा भेरीशब्दः क्वचित्तन्त्रीस्वनमभिभवति एवमन्तिकस्योपादानमिव† दवीयःस्योपादानानपि तन्त्रीस्वनानभिभवेत्‡ अप्राप्तेरविशेषात् । तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन्§ इति । नानाभूतेषु शब्दसन्तानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचिच्छब्दस्य तीव्रेण मन्दस्याभिभवो युक्त|| इति । कः पुनरयमभिभवो नाम । ग्राह्यसमानजातीयग्रहणकृतमग्रहणम् अभिभवः । यथोल्काप्रकाशस्य ग्रहणार्हस्यादित्यप्रकाशेनेति ।

**न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च¶ ॥ १४ ॥**

---

* न च शब्दस्यैकत्वेऽपि निमित्तभेदाद्ग्रहणभेदो ग्रहणभेदाच्चाभिभव इति युक्तम् । ग्रहणभेदस्यैकत्रादृष्टत्वात् अन्यथा नित्य ग्रहणभेदापत्तेः । ततश्च भिन्नो ऽभिन्न इति भिन्नाभिन्नप्रत्ययौ न स्याताम् । अभिभवानुपपत्तिश्च ग्रहणयोर्युगपदसम्भवात् । न चैकग्रहणमात्मन एवाभिभावकं न चायमभिभवो नास्ति तस्माद्भिद्यते शब्दः । न्या॰ वा॰ ।   † एवमन्तिकस्योपादानानिव दवीयस्योपादानानपि २ पु॰ ।

‡ स्वनं नाभिभवेदिति २ । ३ पु॰ पा॰ ।

§ शब्दानां विभुत्वेन नैव दोष इति चेत् । तथा सत्येकव्यञ्जकसन्निपाते सर्वशब्दोपलब्धिप्रसङ्ग । तीव्रेण मन्दस्याभिभवाभ्युपगमे समानदेशत्वात् सर्वशब्दानां महच्छब्देन सर्वेषां शब्दानामभिभवात्तीव्रशब्दस्याप्यग्रहणप्रसङ्गस्तस्माच्छब्दा एव भिद्यन्ते ।

|| न च शब्दसन्तानाभ्युपगमे तेषु पूर्वस्मिन् शब्द उत्तरस्मिन् शब्द इति दिग्देशप्रत्ययानुपपत्तिः कर्णशष्कुलीप्रत्यासन्नस्यैव ग्रहणार्हत्वात् इति वाच्यम् । तस्योपादाननिमित्तकत्वात् । उत्पत्तिदेशस्य शब्दग्रहणपक्ष युगपदनेकशब्दोपलब्धिप्रसङ्गात् । मम तु यानि निमित्तानि शब्दकारणस्य संयोगस्यानुपकारीणि दिग्देशवन्ति तेषां निमित्तानां भेदाद्दिग्देशभेदप्रत्यय इति । अत एव तस्य ग्रहणस्य पूर्वादिप्रत्ययो मान्यथेति सिध्यति । एके तु ब्रुवते नैव शब्देषु पूर्वादिप्रत्ययाः सन्ति । वर्णितैव तदभ्युपगमात् । अत एव न जात्यन्धानां दिक्प्रत्ययाः । अपरे तु शब्देषु दिग्देशप्रत्ययादेव चक्षुश्श्रोत्रे अप्राप्यकारिणी इत्याहुस्तत्तु प्रत्यक्षलक्षणसूत्रव्याख्यानावसरे दूषितम् ।

¶ सूत्रस्य पूर्वहेतूनामनैकान्तिकत्वज्ञापनमर्थः । न्या॰ वा॰ ।

न खलु आदिमत्त्वादनित्यः शब्दः । कस्माद् व्यभिचारात् । आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम् । कथमादिमान् कारणविभागेभ्यो हि घटो न भवति । कथमस्य नित्यत्वं* यो ऽसौ कारणविभागेभ्यो न भवति न तस्याभावो भावेन कदा चिन्निवर्त्यत इति । यदप्यैन्द्रियकत्वात् तदपि व्यभिचरति ऐन्द्रियकं च सामान्यं नित्यं चेति । यदपि कृतकवदुपचारादिति । एतदपि व्यभिचरति । नित्येष्वनित्यवदुपचारो दृष्टो यथा हि भवति वृक्षस्य प्रदेशः कम्बलस्य† प्रदेशः एवमाकाशस्य प्रदेशः आत्मनः प्रदेश इति भवतीति ।

## ‡तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १५ ॥

नित्यमित्यत्र किं तावत्तत्त्वम् §अर्थान्तरस्यानुत्पत्तिधर्मकस्यात्महानानुपपत्ति‖र्नित्यत्वं तच्चाभावे नोपपद्यते । भाक्तं तु भवति यत्तत्रात्मानमहासीत्तद्भूत्वा न भवति न जातु तत्पुनर्भवति तत्रानित्य इव नित्योऽ¶ घटाभाव इत्ययं पदार्थः** इति तत्र यथाजातीयकः शब्दो न तथाजातीयकं कार्यं किं चिन्नित्यं दृश्यतइत्यव्यभिचारः । यदपि सामान्यनित्यत्वादिति इन्द्रियप्रत्यासत्तिग्राह्यमैन्द्रियकमिति ।

## सन्तानानुमानविशेषणात् ॥ १६ ॥

नित्ये व्यभिचार इति प्रकृतम् । नेन्द्रियग्रहणसामर्थ्याच्छब्दस्यानित्यत्वं किं तर्हि इन्द्रियप्रत्यासत्तिग्राह्यत्वात् सन्तानानुमानं तेनानित्यत्व††मिति । यदपि नित्येष्वप्यनित्यत्ववदुपचाराद् इति । न ।

## कारणद्रव्यस्य प्रदेशशब्देनाभिधानात्
## नित्येष्वप्यव्यभिचार इति ॥ १७ ॥

---

* कथमस्यानित्यत्वमिति ३ पु॰ पा॰ । † कम्बलस्य प्रदेश इति ३ पुस्तके नास्ति ।

‡ तत्त्वभाक्तेति सन्तानानुमानेति कारणद्रव्येति च त्रयाणा सूत्राणां कस्मात्पुनः सूत्रकारस्मिन्नर्थे इति एवमादिभाष्यव्याख्याया कसमस्मिन्नर्थे इति वार्त्तिकपङ्क्तिकमुपादाय तात्पर्यटीकायां स्पष्टम् । § अर्थान्तरस्येति इति ३ । ४ । पु ।

‖ मनुपपत्तिरिति ३ पु । ¶ तत्र नित्य इव नित्य इति ३ । ४ पु पा ।

** उभयान्तपरिच्छिन्नस्वरूपसत्तासम्बन्धो हि नित्यत्वं तच्च न प्रागभावध्वंसयोस्तत्र केवलमेकतराभावसामान्यमूलकं भाक्तं नित्यत्वम् ।

†† न वयमैन्द्रियकत्वेनानित्यत्वं प्रतिपादयामः । अपि तु शब्दस्याभिव्यक्तिप्रतिषेधाय । न हि व्यज्यमानस्यैन्द्रियकत्वं युक्तमिति पुरस्तादुक्तम् । न्या वा ।

एवमाकाशप्रदेशः आत्मप्रदेश इति नात्राकाशात्मनोः कारणद्रव्यमभिधीयते यथा कृतकस्य। कथं ह्यविद्यमानमभिधीयते। अविद्यमानता च प्रमाणतोऽनुपलब्धेः। किं तर्हि तत्राभिधीयते संयोगस्याव्याप्यवृत्तित्वं परिच्छिन्नेन द्रव्येणाकाशस्य संयोगो नाकाशं व्याप्नोति अव्याप्य वर्त्तत इति तदस्य कृतकेन द्रव्येण सामान्यं न ह्यामलकयोः संयोग आश्रयं व्याप्नोति सामान्यकृता च भक्तिराकाशस्य प्रदेश इति* अनेनात्मप्रदेशो व्याख्यातः। संयोगवच्च शब्दबुद्ध्यादीनाम् अव्याप्यवृत्तित्वमिति। परीक्षिता च तीव्रमन्दता शब्दतत्त्व न भक्तिकृतेति। कस्मात्पुनः सूत्रकारस्यास्मिन्नर्थे† सूत्रं न श्रूयते इति शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयति तत्र शास्त्रसिद्धान्तात्तत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते। शास्त्रसिद्धान्तस्तु न्यायसमाख्यातमनुमतं बहुशाखमनुमानमिति। अथापि खल्विदमस्ति इदं नास्तीति कुत एतत्प्रतिपत्तव्यमिति‡ प्रमाणत उपलब्धेरनुपलब्धेश्चेति। अविद्यमानस्तर्हि शब्दः।

**प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च§ ॥ १८ ॥**

प्रागुच्चारणान्नास्ति शब्दः। कस्मादनुपलब्धेः सतोऽनुपलब्धिरावरणादिभ्य एतन्नोपपद्यते। कस्मात् आवरणादीनामनुपलब्धिकारणानामग्रह-

---

* आकाशात्मनोर्विभुत्वेन नित्यत्वेन च तदाधारस्य तत्कारणस्य चाऽभावादेतदन्यतरस्यैव प्रदेशपदार्थत्वात्तयोर्वस्तुतः प्रदेशाभाव इति संयोगाव्याप्यवृत्तित्वसामान्यप्रयुक्तस्तत्प्रदेशव्यवहारः। ननु किमित्याकाशप्रदेशा आत्मा च्यम्ते न पुनस्तत्त्वत एव। मैवम्। वस्तुत इष्यमाणा तेषामाकाशत्वे आकाशनानात्वप्रसङ्गः। अतदात्मकत्वे तत्स्वरूपे किम। आधारत्वकार्यत्वयोर्दूषितत्वादन्यस्य चाप्रसिद्धत्वात्। संयोगत्वं प्रदेशावच्छिन्नत्वव्याप्यमिति तु न परमाणुद्वयसंयोगे व्यभिचारात्। आकाशस्य निष्प्रदेशत्वे तद्गुणशब्दस्य सर्वत्रोपलब्धिप्रसङ्गस्तु शब्दस्याव्याप्यवृत्तित्वान्निरसनीयः।

† कतमस्मिन्नर्थे। निष्प्रदेशमाकाशं निष्प्रदेश आत्मेत्यर्थे। शब्दसन्तानप्रतिपादने वा न सूत्रम्। न्या॰ वा॰।

‡ अनुपलभ्यमानास्तित्वं ये शब्दं नित्यं कल्पयन्ति तइदं पर्यनुयोज्याः इदमस्ति इदं नास्तीत्येतद्बुध्यन्तः कथं प्रतिपद्यन्ते। एवमनुयुक्ताः सन्तः प्रतिब्रुवते। न्या॰ वा॰।

§ यच्चोभयपक्षसंप्रतिपन्नं घटाद्यनित्यत्वेन तेन चानुयोज्याः। यदिदमनित्यं घटादि भवद्भिः प्रतिपद्यते तत्कथमनित्यमिति। एवमनुयुक्ता यदि घटाद्यनित्यत्वे न्यायं प्रतिपद्यन्ते स शब्देऽपीति सूत्रम्। न्या॰ वा॰।

वात् । अनेनावृतः शब्दो नोपलभ्यते असन्निकृष्टश्चेन्द्रियव्यवधानादित्येवमादि अनुपलब्धिकारणं न गृह्यतइति सोयमनुच्चारितो नास्तीति । उच्चारणमस्य व्यञ्जकं तदभावात्प्रागुच्चारणादनुपलब्धिरिति । किमिदमुच्चारणं नामेति । विवक्षाजनितेन प्रयत्नेन कोष्ठ्यस्य वायोः प्रेरितस्य कण्ठताल्वादिप्रतिघातः यथास्थानं प्रतिघाताद्वर्णाभिव्यक्तिरिति । संयोगविशेषो वै प्रतिघातः प्रतिषिद्धं च संयोगस्य व्यञ्जकत्वं तस्मान्न व्यञ्जकाभावादग्रहणम् । अपि त्वभावादेवेति । सोयमुच्चार्यमाणः श्रूयते श्रूयमाणश्च भूत्वा* भवतीति अनुमीयते । ऊर्द्ध्वं चोच्चारणात्† श्रूयते स भूत्वा न भवति अभावान्न श्रूयतइति कथम् । आवरणाद्यनुपलब्धेरित्युक्तं तस्मादुत्पत्तितिरोभावधर्मकः शब्द इति । एवं च सति तत्त्वं पांशुभिरिवाकिरन्निदमाह‡ ।

§तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ १९ ॥

यद्यनुपलम्भादावरणं नास्ति आवरणानुपलब्धिरपि तर्ह्यनुपलम्भान्नास्तीति तस्या अभावादप्रतिषिद्धमावरणमिति । कथं पुनर्जानीते भवा॥न्नावरणानुपलब्धिरुपलभ्यतइति । किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वात् समानम् । अयं खल्वावरणम् अनुपलभमानः प्रत्यात्ममेव संवेदयते नावरणमुपलभइति यथा कुड्येनावृतस्यावरणमुपलभमानः प्रत्यात्ममेव संवेदयते सेयमावरणोपलब्धिवदावरणानुपलब्धिरपि संवेद्यैवेति । एवं च सत्यपहृतविषयमुत्तरवाक्यमस्तीति अभ्यनुज्ञावादेन सूच्यते जातिवादिना ।

अनुपलम्भादप्यनुपलब्धिसद्भावान्नावरणानुपपत्तिरनुपलम्भात्¶ ॥ २० ॥

यथा ऽनुपलभ्यमाना**प्यावरणानुपलब्धिरस्ति एवमनुपलभ्यमानमप्यावरणमस्तीति यद्यभ्यनुजानासि भवान् नानुपलभ्यमानावरणानुपलब्धि-

* श्रूयमाणश्चाभूत्वेति २ । ४ पु० पा० ।     † ऊर्ध्वं चोच्चारणान्न श्रूयतइति २।४ पु । ऊर्ध्वं चोच्चारणादिति १ ।

‡ तत्त्वे उक्ते जात्या प्रत्यवतिष्ठते । सा च जातिः । न्या० वा० ।

§ अत्र जातिवादिन सूत्रद्वये तदनुपलब्धेरित्यनुपलम्भादिति चेति तात्पर्यटीकायाम् ।

|| जानीते ऽभावादिति ३ पुस्तके ।

¶ अस्य सूत्रस्यानुपलब्धेरनैकान्तिकत्वमर्थः । न्या० वा० ।

** अनुपलभ्यमानादिति १ ।

रस्तीति अभ्यनुज्ञाय च वदति नास्त्यावरणमनुपलम्भादित्येतद् एतस्मिन्नभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यत इति ।

### अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः* ॥ २१ ॥

यदुपलभ्यते तदस्ति यन्नोपलभ्यते तन्नास्ति इति अनुपलम्भात्मकमसदिति व्यवस्थितम् । उपलब्ध्यभावश्चानुपलब्धिरिति । सेयमभावत्वान्नोपलभ्यते सच्च खल्वावरणं तस्योपलब्ध्या भवितव्यं न चोपलभ्यते तस्मान्नास्तीति । तत्र† यदुक्तं नावरणानुपपत्तिरनुपलम्भादित्ययुक्तमिति । अथ शब्दस्य नित्यत्वं प्रतिजानानः कस्माद्धेतोः प्रतिजानीते‡ ।

### अस्पर्शत्वात् ॥ २२ ॥

अस्पर्शमाकाशं नित्यं दृष्टमिति तथा च शब्द इति । सोयमुभयतः सव्यभिचारः स्पर्शवांश्चाणुर्नित्यः । अस्पर्शं च कर्मानित्यं दृष्टम् । अस्पर्शत्वादित्येतस्य साध्यसाधर्म्येणोदाहरणम् ।

### न कर्मानित्यत्वात्§ ॥ २३ ॥

साध्यवैधर्म्येणोदाहरणम् ।

### नाणुनित्यत्वात्‖ ॥ २४ ॥

---

* अतथाजातीयेन प्रत्यवस्थानादनुत्तरमिति सूत्रार्थः । यथाजातीयकः शब्दो नित्यस्तथाजातीयकं किं विचित्य न दृष्टमिति । उक्त चात्रोभयान्तापरिच्छिन्नवस्तुसत्तासंबन्धो नित्यतेति । तस्मादयथार्थप्रत्यवस्थानाच्च किं विदितम् । अनित्यः शब्दो गुणत्वे सत्यस्मदादीन्द्रियविषयत्वात् । अव्यापकस्य व्यापकद्रव्यसमवायित्वे सति प्रत्यक्षत्वात् सुखवत् । आकाशनिष्प्रदेशत्वे हेतुः निष्प्रदेशमाकाशं व्यापकत्वाद् द्रव्यस्य सतः सर्वदाऽमूर्तत्वादात्मवत् । व्यापकत्वादेवाकृतकत्वम् । व्यापकत्वं च द्रव्यस्य सतः सर्वदाऽमूर्तत्वात् । एतेन दिक्कालौ व्याख्यातौ एतावत्स्वसाधनमनित्यः शब्द इति । न्या॰ वा॰ । † तत्रेति च । ४ ।

‡ विप्रतिपत्तेः प्रमाणमूलत्वाद्धेतोः परिप्रश्नः । न्या॰ वा॰ ।

§ तस्या व्यभिचारप्रदर्शनार्थं सूत्रम् । न्या॰ वा॰ ।

‖ अस्पर्शेन कर्मणैवोभयतो व्यभिचारे लब्धे नित्येनाणुना व्यभिचारोद्भावनं कृतकत्वानित्यत्ववत्समव्याप्तिकत्वनिराकरणार्थं द्रष्टव्यम् । ता॰ टी॰ ।

नान्यत्वे ऽप्यभ्यासस्योपचारात् ॥ २९ ॥

अनवस्थाने ऽप्यभ्यासस्याभिधानं* भवति द्विर्नृत्यतु भवान् त्रिर्नृत्यतु भवानिति द्विरनृत्यत् त्रिरनृत्यद् द्विरग्निहोत्रं जुहोति द्विर्भुङ्क्ते एवं व्यभिचारात्† प्रतिषिद्धहेतावन्यशब्दस्य प्रयोगः प्रतिषिध्यते ।

अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः‡ ॥ ३० ॥

यदिदमन्यदिति मन्यसे तत् स्वार्थेनानन्यत्वाऽदन्यन्न भवति एवमन्यताया अभावः तत्र यदुक्तमन्यत्वे ऽप्यभ्यासोपचारादित्येतदयुक्तमिति शब्दप्रयोगं प्रतिषेधतः शब्दान्तरप्रयोगः प्रतिषिध्यते ।

तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः‖ ॥ ३१ ॥

¶अन्यस्मादन्यतामुपपादयति भवान् उपपाद्य चान्यत् प्रत्याचष्टे अनन्यदिति च शब्दमनुजानाति प्रयुङ्क्ते चानन्यदिति । एतत् समासपदमन्यशब्दो ऽयं प्रतिषेधेन सह समस्यते यदि चोत्तरं पदं नास्ति कस्याय प्रतिषेधेन सह समासः । तस्मात्तयो**रनन्यान्यशब्दयोरितरो††ऽनन्यशब्द इतरमन्यशब्दमपेक्षमाणः सिद्ध्यतीति तत्र यदुक्तमन्यताया अभाव इत्येतदयुक्तमिति‡‡ । अस्तु तर्हीदानीं शब्दस्य नित्यत्वम् ।

विनाशकारणानुपलब्धेः ॥ ३२ ॥

---

* अन्यस्य चाप्यभ्यासाभिधानमिति २ । ५ ।

† अनित्येष्वेवाभ्यास इत्यनेकान्तः । अभ्यासस्वरूपानवधारणादसिद्ध एव अभ्यासो ह्येकविषयो ऽनेकज्ञानोत्पाद एकाकारविषयो वा । तत्रायमभ्यास एकविषय एकाकारविषयो वेति संदिग्धासिद्धावभ्यासोपचारविषयत्वेन साधनं तस्यानैकान्तिकत्वज्ञापनार्थम् । न्या० वा ।

‡ एतत्सूत्रमन्यत्वप्रतिषेधार्थम् । न्या० वा । § स्वात्मनो ऽनन्यत्वादिति २ । ५ ।

‖ तस्य परिहारसूत्रम् । ता० टी० । ¶ अन्यस्येति २ । ५ ।

** अन्यानन्यशब्दयोरिति २ । ५ । †† नान्यशब्दमपेक्षमाण इति । १ पु० ।

‡‡ ननु स एवायं गोशब्द इति प्रत्यभिज्ञानाच्छब्दे ऽनन्यत्वसिद्धिरिति चेन्नैवम् । तदेवौषधमित्यादावन्यत्वे ऽपि तत्प्रत्ययविषयत्वदर्शनेन तस्यानन्यत्वव्यभिचारात् । यथा व्यभिचरितत्वात्तत्प्रत्ययविषयत्व प्रत्यभिज्ञानं तदेवेदमौषधमित्यादौ विशेषदर्शिनस्तदभावात्कल्पते च तत्साध्यादिति तत्र । नैयायिके प्रत्यभिज्ञेः । शब्दे किं विशेषादर्शनमूलकस्तत्प्रत्यय उत तदभेदमूलक इति संदेहाच्च ।

यदनित्यं तस्य विनाशः कारणाद्भवति यथा लोष्ठस्य कारणद्रव्यविभागाच्च शब्दश्चेदनित्यस्तस्य विनाशो यस्मात्कारणाद्भवति तदुपलभ्येत न चोपलभ्यते तस्मान्नित्य इति ।

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३३ ॥**

यथा विनाशकारणानुपलब्धेरविनाशप्रसङ्गः एवमश्रवणकारणानुपलब्धेः सततं श्रवणप्रसङ्गः व्यञ्जकाभावादश्रवणमिति चेत् प्रतिषिद्धं व्यञ्जकम् । अथाविद्यमानस्य* निर्निमित्तं श्रवणमिति विद्यमानस्य निर्निमित्तो विनाश इति समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति ।

**उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३४ ॥**

अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकारणे विनाशकारणानुपलब्धेरसत्त्वादित्यनपदेशः† । यस्मा‡द्विषाणी तस्मादश्व इति । किमनुमानमिति चेत् सन्तानोपपत्तिः । उपपादितः शब्दसन्तानः संयोगविभागजाच्छब्दाच्छब्दान्तरं ततोऽप्यन्यत्ततो ऽप्यन्यदिति§ । तत्र कार्यः शब्दः कारणशब्दमभिहन्ति‖ प्रतिघातिद्रव्यसंयोगस्त्वन्त्यस्य शब्दस्य निरोधकः । दृष्टं हि तिरःप्रतिकुड्यमन्तिकस्थेनाप्यश्रवणं शब्दस्य श्रवणं दूरस्थेनाप्यसति व्यवधाने इति । घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नानाशब्दसन्तानो ऽविच्छेदेन श्रूयते**

---

* अथ विद्यमानस्येति २ । ५ ।

† कर्मत्ववदिति चेन्न । आश्रयानित्यत्वात् । अथ मनुषे नित्यस्याप्युपलभ्यमानस्यात्यन्तमग्रहणं दृष्टं यथा कर्मत्वस्येति तच्च न आश्रयानित्यत्वात् । आश्रयस्य नित्यत्वादश्रवणानुपपत्तिरिति ब्रूमः । कर्मत्वस्य पुनरग्रहणकारणमाश्रयानित्यत्वमस्ति तस्मादप्रसङ्ग इति । न्या॰ वा॰ ।

‡ यथेत्यधिकम् । २ । ५

§ ५ पुस्त के ऽपिर्नास्ति। ततोन्यत्र ततो ऽप्यन्यदिति २ पु॰ पा॰ ।

‖ विरुणद्धीति १ पु॰ । ¶ नास्तीति १ । नास्ति ।

** तत्रेदं चिन्त्यते । शब्दस्य व्यज्यमानस्य यत्तद् व्यक्तिकारणं तत्किं घण्टास्यमात्रो स्थितन्यवृत्तीति । यद्वद्वये ऽपि किमवस्थितमुत संतानवृत्तीति विकल्पः । यदि घण्टास्यमवस्थितं च तर्हि श्रुतिभेदो न प्राप्नोति। कारणस्यैकत्वात् । घण्टास्थं सन्तानवृत्ति चेति चेद्युगपदनेकशब्दोपलब्धिप्रसङ्गः । घण्टास्थस्य कारणस्यान्यत्र वर्तमानशब्दव्यञ्जकत्वानुपपत्तिश्च । अन्यगतस्यावस्थितस्य सन्तानवृत्तेर्वा कारणस्य शब्दाभिव्यक्तिहेतुत्वे ऽभिहतघण्टायामेव तदभिव्यक्तिर्न घण्टान्तरेष्विति नियमानुपपत्तिः। शब्दाभेदाच्छ्रुतिभेदानुपपत्तिश्च । तारत्वादेर्नादधर्मत्वमेव न शब्दधर्मत्वमिति तु न। तारः शब्द इति प्रतीतेः । भ्रान्तत्वं तु नास्या अबाधितत्वात् । अनित्यशब्द-

तत्र* नित्ये शब्दे घण्टास्थमन्यगतं वा व्यवस्थितं सन्ताननिवृत्तिरभिव्यक्तिकारणं वाच्यं येन श्रुतिसन्तानो भवतीति शब्दभेदे† (चासति श्रुतिभेद) उपपादयितव्य इति । अनित्ये तु शब्दे घण्टास्थं सन्तानवृत्ति संयोगसहकारि निमित्तान्तरं संस्कारभूतं पटुमन्दं‡मिति वर्तते तस्यानुवृत्त्या शब्दसन्तानानुवृत्तिः पटुमन्दभावाच्च तीव्रमन्दता शब्दस्य तत्कृतश्च श्रुतिभेद इति । न वै निर्निमित्तान्तरं संस्कार उपलभ्यते अनुपलब्धेर्नास्तीति ।

## पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३५ ॥

पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति तस्मिंश्च सति शब्दसन्तानो नोपलभ्यते अतः श्रवणानुपपत्तिः । तत्र प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं§ संस्कारभूतं निरुणद्धीत्यनुमीयते तस्य च निरोधाच्छब्दसन्तानो नोत्पद्यते । अनुत्पत्तौ‖ श्रुतिविच्छेदः¶ यथा प्रतिघातिद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे गमनाभाव इति कम्पसन्तानस्य स्पर्शनेन्द्रियग्राह्यस्य** चोपरमः कांस्यपात्रादिषु पाणिसंश्लेषो लिङ्गं संस्कारसन्तानस्येति । तस्मान्निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति ।

## ††विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥३६॥

यदि यस्य विनाशकारणं नोपलभ्यते तदवतिष्ठते अवस्थानाच्च‡‡ तस्य नित्यत्वं प्रसज्यते एवं यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति

---

घाटिमत्त्वश्रवणोपपत्तये दीर्घादिप्रतीत्या शब्दसंतानपक्षे तत्सामान्याद्दीर्घादिप्रत्ययोपपत्तिः । क्रमागतसंस्कारभेदाच्च मन्दमन्दतरमन्दतमादिशब्दश्रवणोपपत्तिश्च ।

* तत्रेति २ । ५ पु० । † शब्दभेदे चासतीति । २ । ५ पुस्तके ( ) १ पु नास्ति ।
‡ मन्दमनुवर्त्ततइति २ । ५ पु० । § निर्निमित्तान्तरमिति १ पु ।
‖ अनुत्पत्तौ चेति २ । ५ पु० ।

¶ यदि संस्कारं शब्दोत्पत्तिनिमित्तं न प्रतिपद्यसे पाणिघण्टासंश्लेषाच्छब्दसन्तानोच्छेदो न प्राप्नोति । अथ घण्टास्थः संस्कारः पाणिसंश्लेषान्निवर्तते तथापि कथं शब्दसन्तानोच्छेदः । न ब्रूमो घण्टासंश्लेषः शब्दानुच्छिनत्तीति । अपि तु पाणिघण्टासंश्लेषात्तद्वृत्तिसंस्कारः स्पर्शवद्द्रव्यसंयोगविरोधित्वान्निवर्तते । निवृत्ते च कारणाभावात्कार्याभाव इति सन्तानोच्छेदः । न्या० वा० ।

** चेति १ । नास्ति । †† सिंहावलोकितन्यायेन पूर्वोक्तं हेतुं दूषयति । ता० टी० ।
‡‡ चेति १ नास्ति ।

मतं न तेषां विनाशकारणं भवतीत्युपपाद्यते अनुपपादनादनवस्थान*मनवस्थानात् तेषां नित्यत्वं प्रसज्यतइति । अथ नैवं †तर्हि विनाशकारणानुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति । कम्पसमानाश्रयस्य च‡ नादस्य पाणिप्रश्लेषात् कम्पवत् कारणोपरमादभावः । वैयधिकरण्ये हि प्रतिघातिद्रव्यप्रश्लेषात् समानाधिकरणस्यैवोपरमः स्यादिति ।

## अस्पर्शत्वादप्रतिषेधः§ ॥ ३६ ॥

यदिद॥माकाशगुणः शब्द इति प्रतिषिध्यते अयमनुपपन्नः प्रतिषेधः । अस्पर्शत्वाच्छब्दाश्रयस्य रूपादिसमानदेशस्याग्रहणे शब्दसन्तानोपपत्तेरस्पर्शव्यापिद्रव्याश्रयः शब्द इति ज्ञायते न (च)¶कम्पसमानाश्रय**इति । प्रतिद्रव्यं रूपादिभिः सह सन्निविष्टः शब्दसमानदेशो व्यज्यतइति नोपपद्यते कथम् ।

## विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३७ ॥

सन्तानोपपत्तेश्चेति चार्थः । तद्व्याख्यातम् । यदि रूपादयः शब्दाश्च प्रतिद्रव्यं समस्ताः समुदितास्तस्मिन्समासमुदाये यो यथाजातीयकः सन्निविष्टस्तस्य तथाजातीयस्यैव ग्रहणेन भवितव्यं शब्द††रूपादिवत् । तत्र योऽयं विभाग एकद्रव्ये नानारूपा भिन्नश्रुतयो विधर्माणः शब्दा अभिव्यज्यमानाः श्रूयन्ते यच्च विभागान्तरं ‡‡सरूपाः समानश्रुतयः सधर्माणः शब्दास्तीव्रमन्दधर्मतया भिन्नाः श्रूयन्ते तदुभयं नोपपद्यते नानाभूतानामुत्पद्यमानानामयं धर्मो नैकस्य व्यज्यमानस्येति । अस्ति चायं विभागो विभागान्तरं च तेन विभागोपपत्तेर्मन्यामहे न प्रतिद्रव्यं रूपादिभिः सह शब्दः सन्निविष्टो व्यज्यतइति । द्विविधश्चायं शब्दो वर्णात्मको ध्वनिमात्रश्च । तत्र वर्णात्मनि तावत् ।

---

* अवस्थानमवस्थानादिति २ । ५ ।  † तर्हीति २ । ५ पु० । नास्ति ।

‡ अनुनादस्येति २ । ५ पु० ।

§ अस्पर्शद्रव्याश्रयः शब्द इति सूत्रार्थः । न्या० वा० ।

॥ नाकाशगुण इति २ । ५ पु० ।  ¶ ( ) नास्ति २ । ५ पु० ।

** शब्दकारणत्वेनाभिमतः संस्कारश्च कार्यशब्दभेदादनेकः । संस्कारस्यैकत्वे आद्यपातानुपपत्तेः सर्वो वा पातापत्तेः आद्यमात्रस्योत्तरदेशसंयोगकारणत्वे कदा चिदपि पातो न स्यात् ।

†† शब्दे रूपादिवदिति २ । ४ । ५ पु० ।

‡‡ विभागश्च विभागान्तरं च विभक्त्यन्तरम् । विधर्माणश्च शब्दाः सरूपाश्चैकद्रव्याः श्रूयन्ते । समासः समुदायः । एतत् स्पर्शवद्द्रव्यवृत्तिषु शब्देषु न प्राप्नोति गन्धादिवत् । यथा प्रतिद्रव्यमेको गन्ध एवं प्रतिद्रव्यमेकः शब्द इति । न्या० वा० ।

## विकारादेशोपदेशात्संशयः* ॥ ३८ ॥

दध्यत्रेति केचिद् इकार इत्वं हित्वा यत्वमापद्यतइति विकारं मन्यन्ते । केचिदिकारस्य प्रयोगे विषयकृते यदिकारः स्थानं जहाति तत्र यकारस्य प्रयोगं ब्रुवते । संहितायां विषये इकारो न प्रयुज्यते तस्य स्थाने यकारः प्रयुज्यते स आदेश इति उभयमिदमुपदिश्यते । तत्र न ज्ञायते किं तत्त्वमिति । आदेशोपदेशस्तत्त्वम् ।

**विकारोपदेशे ह्यन्वयस्याग्रहणाद्विकारानुमानम्†** । सत्यन्वये किंचिन्निवर्तते किंचिदुपजायतइति शक्येत विकारो ऽनुमातुम् । न चान्वयो गृह्यते । तस्माद्विकारो नास्तीति ।

**भिन्नकरणयोश्च वर्णयोरप्रयोगे प्रयोगोपपत्तिः** । विवृतकरण इकार ईषत्स्पृष्टकरणो यकारः ताविमौ पृथक्करणाख्येन प्रयत्नेनोच्चारणीयौ तयोरेकस्याप्रयोगे ऽन्यतरस्य‡ प्रयोग उपपन्न इति ।

**अविकारे चाविशेषः** । यत्रेमाविकारयकारौ न विकारभूतौ यतते यच्छति प्रायँस्त इति इकार इदम्§मिति च यत्र च विकारभूतौ इष्टं|| व्याहरति उभयत्र प्रयोक्तुर्विशेषो यत्नः श्रोतुश्च श्रुतिरित्यादेशोपपत्तिः ।

**प्रयुज्यमानाग्रहणाच्च** । न खलु इकारः प्रयुज्यमानो यकारतामापद्यमानो गृह्यते किं तर्हीकारस्य प्रयोगे यकारः प्रयुज्यते । तस्मादविकार इति ।

**अविकारे च न शब्दान्वाख्यानलोपः** । न विक्रियन्ते वर्णा इति । न चैतस्मिन्पक्षे शब्दान्वाख्यानस्यासम्भवो येन वर्णविकारं प्रतिपद्येमही-ति । न खलु वर्णस्य वर्णान्तरं कार्यं न हि इकाराद्यकार उत्पद्यते यकाराद्वा इकारः । पृथक् स्थानप्रयत्नोत्पाद्या हीमे वर्णास्तेषामन्यो ऽन्यस्य स्थाने प्रयुज्यतइति युक्तम् । एतावच्चैतत्परिणामो विकारः स्यात् कार्यकारणभा-वो वा उभयं च नास्ति तस्मान्न सन्ति वर्णविकाराः ।

---

* संशयकारणज्ञापनार्थं सूत्रम् । न्या॰ वा॰ ।

† विकारानुमानमिति ३ । ४ । ‡ अन्यतरस्येति ३ । ४ ।

§ ३ नास्ति । || इष्टं। दध्याहरेति इति ४ इहस्थले २ । पु॰ पाठः ।

**वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्तिः ।** अस्तेर्भूः ब्रुवो वचिरिति यथा वर्णसमुदायस्य धातुलक्षणस्य क्व चिद्विषये वर्णान्तरसमुदायो न परिणामो न कार्यं शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते तथा वर्णस्य *वर्णान्तरमिति । इतश्च† न सन्ति विकाराः ।

**प्रकृतिविवृद्धौ विकारवृद्धेः‡ ॥ ३९ ॥**

प्रकृत्यनुविधानं विकारेषु दृष्टं यकारे ह्रस्वदीर्घानुविधानं नास्ति येन विकारत्वमनुमीयतइति ।

**§न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः‖ ॥ ४० ॥**

द्रव्यविकारा न्यूनाः समाः अधिकाश्च गृह्यन्ते । तद्वदयं विकारो न्यूनः स्यादिति । द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः अथ नोदाहरणसाधर्म्याद्धेतुरस्ति न वैधर्म्यात् । अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति ।

**प्रतिदृष्टान्ते चा¶ऽनियमः प्रसज्येत ।** यथा ऽनडुहः स्थाने ऽश्वो वोढुं नियुक्तो न तद्विकारो भवति एवमिवर्णस्य स्थाने यकारः प्रयुक्तो न विकार इति न चात्र नियमहेतुरस्ति दृष्टान्तः साधको न प्रतिदृष्टान्त इति । द्रव्यविकारोदाहरणं च ।

****नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४१ ॥**

अतुल्यानां द्रव्याणां प्रकृतिभावो ऽवकल्पते†† विकारश्च प्रकृतीरनुविधीयते‡‡ । न त्विवर्णमनुविधीयते यकारः तस्मादनुदाहरणं द्रव्यविकार इति ।

**§§द्रव्यविकारे वैषम्यवद् वर्णविकारविकल्पः ॥ ४२ ॥**

यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारवैषम्यम् एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्प इति ।

---

* वर्णान्तरसमुदायो न परिणामो न कार्यं शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते तथा वर्णस्येति २ । ५ पुस्तकयोरधिकम् ।

† अतश्चेति २ । ५ पु॰ ।

‡ प्रकृत्यनुविधानादिति सूत्रार्थः । न्या॰ वा॰ ।

§ अस्याक्षेपसूत्रम् । ता॰ टी॰ ।

‖ साधनपक्षे दृष्टान्तमात्रादहेतुः । न्या॰ वा॰ ।

¶ चेति १ पु॰ ।

** दूषणपक्षे तु । न्या॰ वा॰ ।

†† विकल्पते १ । ४ ।

‡‡ अनुविधीयन्ते ५ ।

§§ अस्याक्षेपसूत्रम् । ता॰ टी॰ ।

### *न विकारधर्मानुपपत्तेः ॥ ४३ ॥

अयं विकारधर्मो द्रव्यसामान्ये यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्यात्मनोऽन्वये पूर्वो व्यूहो निवर्तते व्यूहान्तरं चोपजायते तं विकारमाचक्षते† न वर्णसामान्ये कश्चिच्छब्दात्माऽन्वयी य इत्वं जहाति यत्वं चापद्यते । तत्र यथा सति द्रव्यभावे विकारवैधर्म्ये नाऽनडुहोऽश्वो विकारो विकारधर्मानुपपत्तेः एवमिवर्णस्य न यकारो विकारो विकारधर्मानुपपत्तेरिति । इतश्च न सन्ति वर्णविकाराः ।

### ‡विकारप्राप्तानामपुनरापत्तेः ॥ ४४ ॥

अनुपपन्ना पुनरापत्तिः । कथं पुनरापत्तेरननुमानादिति । इकारो यकारत्वमापन्नः पुनरिकारो भवति न पुनरिकारस्य स्थाने यकारस्य प्रयोगोऽप्रयोगश्चेत्यत्रानुमानं नास्ति ।

### §सुवर्णादीनां पुनरापत्तेरहेतुः|| ॥ ४५ ॥

अननुमानादिति न । इदं ह्यनुमानं सुवर्णं कुण्डलत्वं हित्वा रुचकत्वमापद्यते रुचकत्वं हित्वा पुनः कुण्डलत्वमापद्यते एवमिकारो यणि यकारत्वमापन्नः पुनरिकारो भवतीति व्यभिचारादननुमानम् । यथा पयो दधिभावमापन्नं पुनः पयो भवति किमेवं वर्णानां पुनरापत्तिः अथ सुवर्णवत् पुनरापत्तिरिति सुवर्णोदाहरणोपपत्तिश्च न । ¶

तद्विकाराणां सुवर्णभावाव्यतिरेकात् । अवस्थितं सुवर्णं हीयमानेन धर्मेण धर्मि भवति नैवं कश्चिच्छब्दात्मा हीयमानेन इत्वेनोपजायमानेन यत्वेन धर्मी गृह्यते तस्मात्सुवर्णोदाहरणं नोपपद्यते इति ।

वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः । वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति यथा सुवर्णविकारः सुवर्णत्वमिति ।

---

* तत्र प्रत्याख्यानसूत्रम् । ता० टी० ।
† आचक्षते १ । २ । ३ । ४ पु० ।
‡ इतश्च न सन्ति वर्णविकारा इत्याह । ता० टी० ।
§ अस्याक्षेपः सुवर्णादीनामिति सूत्रम् । ता० टी० ।
|| विकारप्राप्तानां पुनरापत्तिदर्शनादनेकान्त इति सूत्रार्थः । न्या० वा० ।
¶ उपजायमानेन चेति २ । ३ अधिकम् ।

**सामान्यवतो धर्मयोगो न सामान्यस्य*** । कुण्डलरुचकौ सुवर्णस्य धर्मौ न सुवर्णत्वस्य एवमिकारयकारौ कस्य वर्णात्मनो धर्मौ वर्णत्वं† वर्णधर्मयोगो न सामान्यस्येमौ धर्मौ भवितुमर्हतः । न च निवर्तमानो धर्म उपजायमानस्य प्रकृतिस्तत्र निवर्तमान इकारो न यकारस्योपजायमानस्य प्रकृतिरिति । इतश्च वर्णाविकारानुपपत्तिः ।

**नित्यत्वे ऽविकारादनित्यत्वे चानवस्थानात्‡ ॥ ४६ ॥**

नित्या वर्णा इत्येतस्मिन्पक्षे इकारयकारौ वर्णौ इत्युभयोर्नित्यत्वाद्विकारानुपपत्तिः । §नित्यत्वे ऽविनाशित्वात् कः कस्य विकार इति । अथानित्या वर्णा इति पक्षः एवमप्यनवस्थानं वर्णानां किमिदमनवस्थानं वर्णानाम् । उत्पद्य निरोधः उत्पद्य निरुद्धे इकारे यकार उत्पद्यते यकारे चोत्पद्य निरुद्धे इकार उत्पद्यते कः कस्य विकारः । तदेतदवगृह्य संधाने संधाय चावग्रहे वेदितव्यमिति । नित्यपक्षे तु तावत्समाधिः ।

**नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः‖ ॥ ४७ ॥**

नित्या वर्णा न विक्रियन्त इति विप्रतिषेधः । यथा नित्यत्वे सति किं चिदतीन्द्रियमिन्द्रियग्राह्याश्च वर्णा एवं नित्यत्वे सति किं चिन्न विक्रियते वर्णास्तु विक्रियन्त इति विरोधादहेतुस्तद्धर्मविकल्पः नित्यं नोपजायते नापैति अनुपजनापायधर्मकं नित्यमनित्यं पुनरुपजनापाययुक्तं न चान्तरेणोपजनापायौ विकारः सम्भवति । तद्यदि वर्णा विक्रियन्ते नित्यत्वमेषां निवर्तते अथ नित्या विकारधर्मत्वमेषां निवर्तते । सोयं विरुद्धो हेत्वाभासो धर्मविकल्प इति । अनित्यपक्षे समाधिः ।

**अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः** ॥ ४८ ॥**

---

* तद्विकाराणामिति वर्णत्वाव्यतिरेकादिति सामान्यवत इति च व्याख्याना मुद्रितपुस्तकायगते सूत्रत्वे प्रमाणं चिन्त्यम् । † वर्णत्व सामान्य न तस्येमावित्ति १ । २ । ४ । ५ ।

‡ नित्या वर्णा इति न युक्तो विकारः, व्याघातात् । अनित्या वर्णा इति न युक्तो विकारो ऽनवस्थितानां विकारादर्शनादिति । न्या॰ वा॰ ।

§ अनित्यत्वे विनाशित्वादिति १ । २ । ४ । ५ पु ।

‖ विकल्पसमा जातिः । न्या॰ वा॰ । ¶ इन्द्रियग्राह्यमिति २ । ५ ।

** साधर्म्यसमा जातिः । न्या॰ वा॰ ।

यथा ऽनवस्थायिनां वर्णानां श्रवणं भवत्येवमेषां विकारो भवतीति असम्बन्धादसमर्था अर्थप्रतिपादिका वर्णोपलब्धिर्न विकारेण सम्बन्धादसमर्था या* गृह्यमाणा वर्णविकारमनुत्पादयेदिति । तत्र यादृगिदं यथा गन्धगुणा पृथिव्येवं शब्दसुखादिगुणापीति तादृगेतद्भवतीति । न च वर्णोपलब्धिर्वर्णनिवृत्तौ वर्णान्तरं‡ प्रयोगस्य निवर्तिका योयमिवर्णनिवृत्तौ यकारस्य प्रयोगो यदायं वर्णोपलब्ध्या निवर्तते तदा तत्रोपलभ्यमान इवर्णो यत्वमापद्यते इति गृह्यते§ तस्माद्वर्णोपलब्धिरहेतुर्वर्णविकारस्येति ।

‖विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः¶ ॥ ४९ ॥

तद्धर्मविकल्पादिति न युक्तः प्रतिषेधः । न खलु विकारधर्मकं किंचिन्नित्यमुपलभ्यतइति वर्णोपलब्धिवदिति न युक्तः प्रतिषेधः** । अवग्रहे हि दधि अत्रेति प्रयुज्य चिरं स्थित्वा ततः संहितायां प्रयुङ्क्ते दध्यत्रेति चिरनिवृत्ते चायमिवर्णे यकारः प्रयुज्यमानः कस्य विकार इति प्रतीयते कारणाभावात् कार्याभाव इति अनुयोगः प्रसज्यत††इति । इतश्च वर्णविकारानुपपत्तिः ।

प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५० ॥

इकारस्थाने यकारः श्रूयते यकारस्थाने खल्विकारो विधीयते विध्यति तद्यदि स्यात् प्रकृतिविकारभावो वर्णानां तस्य प्रकृतिनियमः स्यात् । दृष्टो विकारधर्मित्वे प्रकृतिनियम इति ।

अनियमे नियमान्नानियमः‡‡ ॥ ५१ ॥

योयं प्रकृतेरनियम उक्तः स नियतो यथाविषयं व्यवस्थितो नियतत्वान्नियम इति भवत्येवं सत्यनियमो नास्ति तत्र यदुक्तं प्रकृत्यनियमादित्येतदयुक्तमिति ।

---

* येति, २ पु । † अर्थमनुत्पादयेदिति २।५। अनुत्पादयेदिति १।४ पु॰ पा॰ । ‡ वर्णान्तरप्रयोगस्येति १।४।२। पु । § गृह्यत इति २।५। पु॰ ।

‖ तदेवं जात्युत्तरमुत्थितमासित कृत्वा भाष्यकारो ऽत्रैवार्थे सूत्रं पठति । ता॰ टी॰ ।

¶ उभयोरप्युत्तरम् ।

** नित्या विक्रियन्तइति व्याघातो दोषः । उपलभ्यमानस्य चेकारस्य यत्वानुपपत्तेर्वर्णोपलब्धिवदित्यसंबद्धम् । न्या॰ वा॰ । †† विप्रुज्येतेति २।५ पु॰ ।

‡‡ सूत्रार्थो ऽनियमो नास्तीति । न्या॰ वा॰ ।

**नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः* ॥ ५३ ॥**

नियम इत्यत्रार्थाभ्यनुज्ञा अनियम इति तस्य प्रतिषेधः । अनुज्ञात-निषिद्धयोश्च व्याघातादनर्थान्तरत्वं न भवति अनियमश्च नियतत्वा-न्नियमो न भवतीति नाचार्यस्य तथाभावः प्रतिषिध्यते किं तर्हि तथाभू-तस्यार्थस्य नियमशब्देनाभिधीयमानस्य नियतत्वान्नियमशब्द एवोपपद्यते । सोऽयं नियमादनियमे प्रतिषेधो न भवतीति ।† न चेयं वर्णविकारोपपत्तिः परिणामात् कार्यकारणभावाद्वा किं तर्हि ।

**गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेः‡ वर्णविकाराः§ ॥ ५४ ॥**

स्थान्यादेशभावादप्रयोगे प्रयोगो विकारशब्दार्थः । स भिद्यते गुणा-न्तरापत्तिः उदात्तस्यानुदात्त इत्येवमादिः । उपमर्दो नाम एकरूपनिवृत्तौ रूपान्त-रोपजनः । ह्रासो दीर्घस्य ह्रस्वः । वृद्धिर्ह्रस्वस्य दीर्घः तयोर्वा प्लुतः । लेशो लाघवं स्त इत्यस्तेर्विकारः । श्लेष आगमः प्रकृतेः प्रत्ययस्य वा । एतएव विशेषा विकारा इति एतएवादेशाः एते चेद्विकारा उपपद्यन्ते तर्हि वर्णविकारा इति ।

**ते विभक्त्यन्ताः पदम् ॥ ५५ ॥**

यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति‖ । विभक्ति-र्द्वयी नामिक्याख्यातिकी च ब्राह्मणः पचतीत्युदाहरणम् । उपसर्गनिपा-तास्तर्हि न पदसंज्ञाः लक्षणान्तरं वाच्यम् इति । शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः तयोः पदसंज्ञार्थमिति । पदेनार्थसंप्रत्यय इति प्रयोजनम् । नामपदं चाधिकृत्य¶ परीक्षा गौरिति पदं खल्विदमुदाहरणम् ।

---

* विरोधः सूत्रार्थः । न्या॰ वा॰ । ११४ पृष्ठे ३५ सूत्राङ्कः प्रमादाद् द्विर्मुद्रितोऽतोऽत्र ५१ आरभ्य स्थापितः ।

† तदेवं प्रकृतिविकारभावं निराकृत्य विकारवचनव्यक्तिं शब्दानामादेश-पक्षे समर्थयति । ता॰ टी॰ । ‡ वर्णविकारोपपत्तेरिति २ । ३ पु॰ पा॰ ।

§ वर्णविकार इति ४ पु॰ । सन्तीति सूत्रार्थः । न्या॰ वा॰ ।

‖ अर्थप्रत्ययस्तर्हि न प्राप्नोति । न न प्राप्नोति । अन्त्यवर्णप्रत्ययात्पूर्ववर्णप्र-तिसंधानप्रत्ययापेक्षादर्थप्रत्यय इति । न्या॰ वा ।

¶ नामग्रहणाधिकारो व्यापकत्वात् । न च पदोच्चारणमात्रेण विशेषार्थाप्रतीतेः पदम वाचकमिति वाच्यम । पदेन सामान्याभिधानात् । न च सामान्यस्य व्यवहाराविषयत्वात्तस्या-नर्थक्यम् । विशेषबोधनार्थत्वात् । सामान्यतः पदेनोपस्थापिते वाक्येन विशेषबोधोपपत्तेः । प्रमाणकत्वे तु सामान्यस्यापि संज्ञानुपस्थितौ विशेषस्याप्यभावप्रसङ्गः ।

**तदर्थे व्यक्त्याकृतिजातिसंनिधावुपचारात्संशयः ॥ ५६ ॥**

अविनाभाववृत्तिः सन्निधिः। अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते तत्र न ज्ञायते किमन्यतमः पदार्थ उत सर्व इति शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणं* तस्मात्।

**†याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः ॥ ५७ ॥**

व्यक्तिः पदार्थः। कस्माद् याशब्दप्रभृतीनां व्यक्तावुपचारात्। उपचारः प्रयोगः या गौस्तिष्ठति या गौर्निषण्णेति नेदं वाक्यं जातेरभिधायकमभेदात्। भेदात्तु द्रव्याभिधायकम्‡। वैद्याय§ गां ददातीति द्रव्यस्य त्यागो न जातेरमूर्तत्वात् प्रतिक्रमानुक्रमानुपपत्तेश्च। परिग्रहः स्वत्वेनाभिसंबन्धः कौण्डिन्यस्य गौर्ब्राह्मणस्य गौरिति द्रव्याभिधाने|| द्रव्यभेदात् संबन्धभेद इति उपपन्नम्। अभिन्ना तु जातिरिति। संख्या दश गावो विंशतिर्गाव इति भिन्नं द्रव्यं संख्यायते न जातिरभेदादिति। वृद्धिः कारणवतो द्रव्यस्यावयवोपचयः अवर्द्धत गौरिति निरवयवा तु जातिरिति। एतेनापचयो व्याख्यातः। वर्णः शुक्ला गौः कपिला गौरिति। द्रव्यस्य गुणयोगो न सामान्यस्य। समासः गोहितं गोसुखमिति द्रव्यस्य सुखादियोगो न जातेरिति। अनुबन्धः सरूपप्रजननसन्तानो गौर्गां जनयतीति तदुत्पत्तिधर्मत्वाद् द्रव्ये युक्तं न जातौ विपर्ययादिति¶। द्रव्यं व्यक्तिरिति हि नार्थान्तरम्। अस्य प्रतिषेधः।

**न तदनवस्थानात्** ॥ ५८ ॥**

न व्यक्तिः पदार्थः कस्मादनवस्थानात्। याशब्दप्रभृतिभिर्यो विशे-

---

* पदार्थावधारणमिति ४। ३। ५।

† प्रयोगप्रदर्शनार्थं याशब्दादिसूत्रम्। न्या॰ वा।

गवां समूह इति भेदाद् द्रव्याभिधानं न जातेरभेदादिति च। ३। ४ पुस्तकेष्वधिकं ४ नास्ति

§ वैश्यायेति २। ४। ५।   || द्रव्याभिधाने इति ४। ५ नास्ति।

¶ आकृतेरप्यभिधायकमेतन्न भवति निष्क्रियत्वादाकृतेः। न हि निष्क्रिया तिष्ठति गच्छति वेति। एवं सर्वत्र। यस्य चानेन विशेषेण तिष्ठत्यादिना योगस्तं शब्दो ऽभिधातुमर्हतीति। कुतः विशेषणविशेष्यभावस्यैकविषयत्वात्। न्या॰ वा॰।

** नानेन गोशब्देन व्यक्तिमात्रमुच्यते। यद्यत्र व्यक्तिमात्राभिधायको ऽभविष्यत्तेन यस्यां कस्यां चिद् व्यक्तौ प्रत्ययो ऽभविष्यदिति सूत्रार्थः। न्या॰ वा॰

प्यते स गोशब्दार्थो या गौस्तिष्ठति या गौर्निषण्णेति न द्रव्यमात्रमविशिष्टं जात्या विना ऽभिधीयते। किं तर्हि जातिविशिष्टम्। तस्मान्न व्यक्तिः पदार्थः। एवं समूहादिषु द्रष्टव्यम्। यदि न व्यक्तिः पदार्थः कथं तर्हि व्यक्तावुपचार इति निमित्तादतद्भावेपि तदुपचारो दृश्यते खलु ।

## सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटका*-न्नपुरुषेष्वतद्भावे ऽपि तदुपचारः ॥ ५९ ॥

अतद्भावे ऽपि तदुपचार इत्येतच्छब्दस्य† तेन शब्देनाभिधानमिति‡। सहचरणाद्यष्टिकां भोजयेति यष्टिकासहचरितो ब्राह्मणो ऽभिधीयत इति§। स्थानाद् मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते। तादर्थ्यात् कटार्थेषु वीरणेषु व्यूह्यमानेषु कटं करोतीति भवति। वृत्ताद् यमो राजा कुबेरो राजेति तद्वद्वर्तते इति। मानाद् आढके निमिताः सक्तवः आढकसक्तव|| इति। धारणात् तुलायां¶ धृतं चन्दनं तुलाचन्दनमिति। सामीप्याद् गङ्गायां गावश्चरन्तीति देशो ऽभिधीयते सन्निकृष्टः। योगात् कृष्णेन रागेण युक्तः शाटकः कृष्ण इत्यभिधीयते। साधनाद् अन्नं प्राणा इति। आधिपत्याद् अयं पुरुषः कुलम् अयं गोत्रमिति। तत्रायं सहचरणाद्योगाद्वा जातिशब्दो व्यक्तौ प्रयुज्यत इति। यदि गौरित्यस्य पदस्य न व्यक्तिरर्थो ऽस्तु तर्हि।

## आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥ ६० ॥

आकृतिः पदार्थः। कस्मात् तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः**। सत्त्वावयवानां तदवयवानां च नियतो व्यूह आकृतिः तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिध्यति अयं गौरयमश्व इति नागृह्यमाणायाम्। यस्य ग्रह-

---

* शकटेति मुद्रितपुस्तकपाठान्तरम्। † इत्यतच्छब्दस्येति २। ४।

‡ अभिधानमिति २। ३। ४।

§ साहचर्यात्संयुक्तसमवेतां जातिं ब्राह्मणे ऽध्यारोप्य ब्राह्मणं यष्टिकेत्याह। एवं शेषाण्युपचारबीजानि स्वयमुन्नेतव्यानि। न्या० वा०।

|| आढकं सक्तव इति ३ ४। ¶ तुलयेति १। ३।

** अत्रापि तद्देशोपस्थितं न तदनवस्थानादिति। न्या० वा०।

यात् सत्त्वव्यवस्थानं सिध्यति तं शब्दोऽभिधातुमर्हति सोऽस्यार्थ इति । नैतदुपपद्यते यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते गौरिति । न चावयवव्यूहस्य जात्या योगः कस्य तर्हि नियतावयवव्यूहस्य द्रव्यस्य । तस्मान्नाकृतिः पदार्थः । अस्तु तर्हि जातिः पदार्थः ।

व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ६१ ॥

जातिः पदार्थः कस्माद्व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति । गां प्रोक्षय गामानय गां देहीति नैतानि मृद्गवके प्रयुज्यन्ते कस्माज्जातेरभावात्* । अस्ति हि तत्र व्यक्तिः अस्त्याकृतिः यदभावात्तत्रासंप्रत्ययः स पदार्थ† इति ।

नाकृतिव्यक्त्य‡पेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६२ ॥

* मृन्निर्मितगवकस्य गोभिन्नत्वेन गोत्वाभावात्तद्गताकृतिसामान्येन गोपदप्रयोगो भाक्त इति भावः । न च जातेः सर्वगतत्वाभ्युपगमाद् मृद्गवगतत्वमपीति वाच्यम् । तस्याः स्वविषय सर्वगतत्वमात्राभ्युपगमात् । यत्र गोत्वनिमित्तोऽनुवृत्तप्रत्ययो भवति तत्रैव ककुदादिव्यूहस्य गोत्वस्य स्वीकारात् मृद्गवे तदभावात् ।

† यत्तु न पिण्डव्यतिरिक्तं गोत्वं पिण्डान्तरालेऽदर्शनादिति तन्न । अन्तरालपदेनावयवाभावस्य द्रव्यान्तरस्य वा ग्रहणे तेषु गोत्वाभावेऽपि गोपिण्डवृत्तितायाः अबाधितत्वात् । नानाव्यक्तिषु गौर्गौरित्यनुवृत्तप्रत्ययनिमित्ततया च गोत्वसिद्धेः । अनुवृत्तधर्मानभ्युपगमेऽनुवृत्तप्रत्ययोपपादनस्याशक्यत्वात् । न चाकृतिसामान्यादनुवृत्तप्रत्ययोपपत्तिः । अवयवसंयोगरूपायामाकृतावपि परस्परव्यावृत्तत्वेनानुवृत्तप्रत्ययहेतुत्वानुपपत्तेः । तद्भिन्नरूपाया आकृतेरनुवृत्तत्वाभ्युपगमे सैव जातिः । न चानुवृत्तप्रत्ययानां सामान्यनिमित्तकत्वे सामान्यशून्यानां गोत्वादीनां सामान्यं सामान्यमित्यनुवृत्तप्रत्ययविषयत्वानुपपत्तिः । तेषामप्यनेकाश्रयसमवायमनुगतं निमित्तीकृत्यानुवृत्तप्रत्ययविषयत्वाभ्युपगमात् । एतेन पाचकादिशब्दानां नानाक्रियाप्रवृत्तिनिमित्तकानामप्येकाकारप्रतीतिविषयत्वदर्शनाच्च तेन गोत्वसिद्धिरिति निरस्तम् । तत्रापि पाकक्रियाप्रतिप्राधान्यस्यानुगतस्यैवानुवृत्तप्रत्ययहेतुत्वात् । जातेरेवानुवृत्तप्रत्ययनिमित्ततेति नियमानभ्युपगमात् । यद्यनेकासु गोषु वर्तमानं गोत्वं किं प्रतिव्यक्ति पर्याप्त्या वर्तते उतैकदेशेन । आद्ये एकव्यक्तिपर्याप्तत्वेन तस्य सामान्यत्वानुपपत्तिः । द्वितीये तदेकदेशानामेव तत्तद्व्यक्तिवृत्तित्वेन गोत्वस्यानेकानुगतत्वानुपपत्तिस्तदवस्था । एकदेशानां सामान्यात्मकत्वेऽपि तेषां प्रतिव्यक्त्यसाधारण्येन सामान्यत्वानुपपत्तिरसामान्यात्मकत्वे त्वनुवृत्तप्रत्ययनिमित्तत्वाप्रसङ्गश्च । नैवम् । सावयवेषु कृत्स्नैकदेशविकल्पसम्भवेऽपि निरवयवस्य सामान्यस्य तादृशविकल्पेन दूषणाभिधानानुपपत्तेः । गोत्वादेश्च समवायेन तदभिव्यञ्जकावयवसंस्थानवतीषु सर्वासु व्यक्तिष्वेकस्यैव विद्यमानत्वात् । यत्तु यदि चेद् गोत्वमुत्पद्यते प्राग्गोत्वसंबन्धाद् गौरेवाश्वादिरिति स्याद् गोत्वम् । यदि चेदश्वादावपि तत्स्यात् इति तन्न । गौर्गौरित्यनयोर्वैशिष्ट्यप्रत्ययत्वेन विशेष्यविशेषणसम्बन्धमन्तरानुपपत्तेर्वस्तूत्पत्तिकाल एव जातिसंबन्धाभ्युपगमाद् गोत्वशून्यतत्सम्बन्धयोग्यवस्तुनोऽप्रसिद्धेः । तस्मादुपपन्ना जातिः सा च मृद्गवे नास्तीति सैव पदार्थः ।

‡ व्यक्त्याकृती इति प्राप्ते प्राधान्यादाकृतेः पूर्वनिपातः । किं प्राधान्यम् ।

जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते नागृह्यमाणायामाकृतौ व्यक्तौ जातिमात्रं शुद्ध* गृह्यते तस्मान्न जातिः पदार्थ इति । न वै पदार्थेन न† भवितुं शक्यं कः खल्विदानीं पदार्थ इति ।

व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६३ ॥

तुशब्दो विशेषणार्थः । किं विशेष्यते प्रधानाङ्गभावस्यानियमेन पदार्थत्वमिति । यदा हि भेदविवक्षा विशेषगति(श्च) ‡तदा व्यक्तिः प्रधानमङ्गं तु जात्याकृती । यदा तु भेदोऽविवक्षितः सामान्यगति§स्तदा जातिः प्रधानमङ्गं तु व्यक्त्याकृती । तदेतद्बहुलं प्रयोगेषु । आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्यः|| । कथं पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय¶ इति लक्षणभेदात् । तत्र तावत् ।

व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६४ ॥

व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति न सर्वं द्रव्यं व्यक्तिः । यो गुणविशेषाणां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणा**मव्यापिनः परिमाणस्याश्रयो यथासम्भवं तद् द्रव्यं मूर्तिः मूर्छितावयवत्वा††दिति ।

---

आकृतिविशेषणत्वं व्यक्तेः यस्माद्व्यक्त्या विशेष्यमाणाऽऽकृतिर्जातेर्लिङ्गं भवति तस्मात्प्रधानमाकृतिः । न्या॰ वा॰ ।

* व्यक्तमिति १ ।

† नेति नास्ति ३ ।　( ) ‡ नास्ति ३ ।　§ सामान्यगतिश्चेति ३ । ५ ।

|| क्व पुनराकृतेः प्राधान्यं यथा पिष्टकमय्यो गावः क्रियन्तामिति । न्या॰ वा॰ ।

¶ याशब्दादिसूत्रैरधिगतत्वात्प्रश्नानुपपत्तिरिति चेन्न निमित्तत्रैविध्ये सति तद्विशेषविषयज्ञानार्थत्वात्प्रश्नस्य । गोशब्द उच्चरन् प्रधानोपसर्जनभावेन निमित्तत्रयं प्रतिपादयतीति याशब्दादिसूत्राणामर्थः । एवं च सति तद्विशेषज्ञानार्थो युक्तः प्रश्नः । न्या॰ वा॰ ।

** यद्यपि गुरुत्वादयः सामान्यगुणास्तथापि गुणान्तरेभ्यो व्यावर्तमाना गुणविशेषा इत्युच्यन्ते । ता॰ टी॰ ।

†† किमिदमवयविद्रव्यलक्षणमाहो पदार्थत्वेन त्रयाणां प्रसक्तानां जात्याकृतिव्यवच्छेदकं लक्षणमिति । मयं तु भूमो नात्रावयवी व्यवच्छेद्योऽपि तु जात्याकृतिपदव्यतिरिक्तस्य व्यक्तिपदस्यार्थो वक्तव्य इति । सा च व्यक्तिर्या न जातिर्नाकृतिस्तस्या अनेन सूत्रेण संग्रहः । गुणविशेषास्तदाश्रयश्चात्र तद्धत्वलोपात्गुणविशेषाश्रयशब्देन द्रव्यमुच्यते । कर्मापि गुणविशेषशब्दाल्लभ्यते गुणेभ्यो विशेषो गुणविशेष इति । विशेषग्रहणं गुणपदार्थेन संगृहीताया आकृतेर्निराकरणार्थम् । आकृतेः संयोगविशेषत्वात् । गुणविशेष इति चात्र द्विरूपो विग्रहः गुणाश्च ते

## आकृतिर्जातिलिङ्गाख्या ॥ ६५ ॥

यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात् । सा च नान्या सत्त्वावयवानां* तदवयवानां च नियताद् व्यूहादिति । नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गं शिरसा पादेन गामनुमिन्वन्ति । नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत† इति । अनाकृतिव्यङ्ग्यायां जातौ मृत्सुवर्णं रजतम् इत्येवमादिष्वाकृतिर्निवर्तते‡ जहाति पदार्थत्वमिति ।

## समानप्रसवात्मिका जातिः ॥ ६६ ॥

या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया§ बहूनीतरेतरतो न व्यावर्तन्ते यो ऽर्थो ऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम्‖ । यच्च केषां चिदभेदं कुतश्चिद्भेदं¶ करोति तत् सामान्यविशेषो जातिरिति ।

इति वात्स्यायनीये न्यायभाष्ये द्वितीयो ऽध्यायः ॥ २ ॥



---

विशेषा इति । मूर्तिशब्देन द्रव्यमुच्यते । एवं चैतल्लक्षणं रूपाद्याकाशान्तमनुगतं भवति । अथ वा गुणविशेषाणामाश्रय इति गुणाश्च विशेषाश्च तेषामाश्रयो द्रव्यं तत्र मूर्छन्ते इति मूर्तिः । न्या॰ वा॰ ।

* नानासत्त्वावयवानामिति २ । ३ पु॰ पा॰ । † न प्रख्यायत इति ४ ।

‡ आकृतौ नियमो न जातौ सर्वा ऽऽकृतिर्जातिं लिङ्गयति न पुनः सर्वा जातिराकृत्या लिङ्ग्यते । न्या॰ वा॰ । § यथा इति २ । ४ । ५ ।

‖ समानप्रत्ययोत्पत्तौ कारणं जातिरिति जातौ नियमो न समानप्रत्ययोत्पत्तौ पाचकादिषु जातिमन्तरेणापि दृष्टत्वात् । गवादिष्वनुवृत्तप्रत्ययः पिण्डव्यतिरिक्तात्लिङ्गाद्भवति विशेषवत्त्वाच्चीलादिप्रत्ययवदिति । गोतो ऽर्थान्तरं गोत्वं भिन्नप्रत्ययविषयत्वाद्रूपस्पर्शप्रत्ययवदिति । न्या॰ वा॰ ।

¶ केषां चिद्भेदमिति १ । ३ ।

परीक्षितानि प्रमाणानि प्रमेयमिदानीं परीक्ष्यते* । तत्रात्मादीत्यात्मा विविच्यते किं देहेन्द्रियमनोबुद्धिवेदनासंघातमात्रमात्मा आहो स्वित्तद्व्यतिरिक्त इति । कुतः संशयः ।

व्यपदेशस्योभयथा सिद्धेः क्रियाकरणयोः कर्त्रा संबन्धस्याभिधानं व्यपदेशः । स द्विविधः अवयवेन समुदायस्य मूलैर्वृक्षस्तिष्ठति स्तम्भैः प्रासादो ध्रियत इति† अन्येनान्यस्य व्यपदेशः परशुना वृश्चति प्रदीपेन पश्यति । अस्ति चायं व्यपदेशः चक्षुषा पश्यति मनसा विजानाति बुद्ध्या विचारयति शरीरेण सुखदुःखमनुभवतीति । तत्र नावधार्यते किमवयवेन समुदायस्य देहादिसंघातस्य अथान्येनान्यस्य तद्व्यतिरिक्तस्येति । अन्येनायमन्यस्य‡ व्यपदेशः । कस्मात् ।

---

* अनेन प्रमाणप्रमेयपरीक्षयोर्हेतुफलभावः प्रदर्श्यते । परीक्षितैर्हि प्रमाणैः प्रमेयपरीक्षा युज्यत इति ।

† यद्यपि वृक्षप्रासादयोरन्ययोरेवान्येनावयवेन समुदायिना व्यपदेशस्तथाप्यवयव्यभावं समुदायं च समुदाय्यनतिरिक्तं मन्वानस्य परस्योदाहरणं द्रष्टव्यम् । ता॰ टी॰

‡ अत्र सकलवादिसंमतस्याहमित्यादिप्रत्ययसिद्धस्यात्मनो देहादिभेदाभेदविषयैव विप्रतिपत्तिर्न तु धर्मिणि । असति धर्मिणि वक्ष्यमाणहेतूनां साध्यस्य नास्तित्वस्य चाश्रयासिद्धेरभावकोट्युपस्थानासंभवात् । न चाप्रसिद्धप्रतियोगिको ऽभावः सुवचः । घटो नास्तीत्यादेरप्यन्यत्र देशे काले वा प्रसिद्धस्यैवात्र देशे काले वा ऽभावस्य वक्तव्यत्वात् स्वरूपतो घटाभावस्य क्व चित्कदा चिद्वा घटसत्त्वेन दुर्वचत्वात् । विभूनां चावृत्तितया देशविशेषनिरूपितस्य कालविशेषनिरूपितस्य वा वृत्तित्वस्याप्यनभ्युपगमादेव तदभावसाधने सिद्धसाधनप्रसङ्गात् । आत्मा शरीरे नास्ति अन्यत्र चास्तीति प्रतीतिर्हि आत्मनि शरीरनिरूपितमन्यदेशकालनिरूपितं वा वृत्तित्वं प्रतिषेधति स चाभावो विभोरात्मनो ऽवृत्तित्वादेव सिद्ध इति न साध्यः । आत्मा ऽस्तीति बुद्धिस्तु आत्मनि सत्तासमवायं विषयीकुर्वती प्राक्प्रदर्शितधिया ऽविरुद्धैव । ध्वंसप्रतियोगिनो ऽतीतत्वेन प्रत्ययात् प्रागभावप्रतियोगिनश्च भविष्यत्त्वेन प्रत्ययादतीतप्रागभावाश्रयत्वे सत्यनागतप्रध्वंसप्रतियोगित्वस्य च वर्तमानत्वेन प्रत्ययान्नित्यस्यात्मनः प्रागभावप्रध्वंसयोरप्रतियोगित्वादतीतानागतत्वप्रतियोगित्वस्य चाप्यभावेन कालविशेषसम्बन्धस्योक्तविधया नित्येषु दुर्वचत्वेन तत्प्रतिषेधस्यात्मनि सिद्धत्वादेव साधनासम्भवात् । आत्मनो नित्यत्वं च १९ सूत्रे साधयिष्यते । आत्मनि सत्त्वाभावसाधनस्य च पक्षाभ्युपगमे बाधितत्वेनानभ्युपगमे स्वाश्रयासिद्ध्या ऽसंभवात् । आत्मनास्तित्ववादिना चात्मपदस्यार्थो वक्तव्यः । न हि पदमर्थशून्यं क्व चिद् दृष्टम् । अतश्चात्मपदं सार्थकं पदत्वाद् घटपदवदित्यनुमानेनात्मा सिध्यति । न च तत्पदं शरीरादिना ऽर्थवदिति सुवचं तथा सति आत्मा नास्तीत्युक्तेः शरीरादयो न सन्तीत्यत्र पर्यवसानेन प्रत्यक्षविरोधात् । अथात्मशब्दाभिधेयत्वेन नैयायिकादिभिः कल्पितं पक्षीकृत्य नास्तित्वं साध्यते तथापि पक्षतावच्छेदकं कल्पितत्वं तथाभूतस्य तथाप्रतीतिविषयत्वं तच्चासति धर्मिण्यनुपपन्नमिति पक्षाप्रसिद्धिः । सति तु तेनैव साध्यस्य बाधः । अतथाभूतायाः शुक्तेस्तथाभूतशुक्तिरूपतया प्रतीतौ साधर्म्यस्य प्रयोजकतायाः क्लृप्तत्वेनात्मनः सता साधर्म्यस्य वाच्यमत्वावश्यत्वेन कल्पितत्वरूपपक्षतावच्छेदकाप्रसिद्धिः । साधर्म्याधिकरणाभ्युपगमे [illegible] बाधः । क्षोदक्षमतया सिद्धेषु रूपादिषु पञ्चसु स्कन्धेषु प्रत्येकमात्मपदार्थतायाः अभावाद्

## दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्* ॥ १ ॥

दर्शनेन कश्चिदर्थो गृहीतः †स्पर्शनेनापि सोऽर्थो गृह्यते यमहमद्राक्षं चक्षुषा [illegible] स्पर्शनेनापि स्पृशामीति यं चास्प्राक्षं स्पर्शनेन तं चक्षुषा पश्यामीति । ‡एकविषयौ§ चेमौ प्रत्ययावेककर्तृकौ प्रतिसन्धीयेते॥ न च सङ्घातकर्तृकौ नेन्द्रियेणैककर्तृकौ । तद्योऽसौ चक्षुषा त्वगिन्द्रियेण चैकार्थस्य ग्रहीता भिन्ननिमित्तावनन्यकर्तृकौ¶ प्रत्ययौ समानविषयौ प्रतिसन्दधाति सोऽर्थान्तरभूत आत्मा । कथं पुनर्नेन्द्रियेणैककर्तृकौ इन्द्रियं खलु **स्वस्वविषयग्रहणमनन्यकर्तृकं प्रतिसन्धातुमर्हति नेन्द्रियान्तरस्य विषयान्तरग्रहणमिति । कथं न सङ्घातकर्तृकौ एकः खल्वयं भिन्ननिमित्तौ स्वात्मकर्तृकौ प्रतिसंहितौ वेदयते न सङ्घातः * कस्मात् अनिवृत्तं हि सङ्घाते प्रत्येकं विषयान्तरग्रहणस्याप्रतिसन्धानमिन्द्रियान्तरेणेवेति ।

---

मुख्यवृत्ते प्रदर्शितदिशा ऽवयवकत्वेनात्मा नास्तीति कथनानुपपत्तिः । एवं नास्तित्वे साध्ये ऽप्रा मत्वादिति हेतु पक्षस्यास्वीकार ऽसिद्ध स्वीकारे च तेनैव व्यभिचरित । वस्तुधर्मत्वाऽनन्ता भावस्य निराश्रयस्य सत्वानुपपत्ते । प्रत्यक्षत्वे साध्याव्यतिरेक । अकारणकत्वरूपत्वे सति धर्मिग्राहकप्रमाणबाधकतया नित्यत्वसाधकतया विरुद्ध । एवमन्येषु निर्हेतुकत्वादिस्वादिषु हेतुषु दोषा अनुसन्धेया । यत्तु पक्षत्वं नार्थवत्त्वसाध्य शून्यतम शब्दादौ व्यभिचारादिति । तन्न । शून्यशब्दनाभा वाश्रयस्य द्रव्याद्यसत्त्व उच्यते तेन संयोगाभाववद्द्रव्यत्वाभिधानादव्यभिचारात् । शशविषाणव दिति दृष्टान्तो ऽप्यसिद्ध । शशविषाणयो पृथक्प्रसिद्धत्वात्सामान्यता विषाणमात्रे शशसत्वस्य- ऽपि कस्य चित्तुच्छत्वेन शशकार्यतया अन्यत्र दृष्टाया एव विषाणो प्रतिषेद्धव्यत्वेनात्यन्ताभाव प्रतियोग्यसत्त्वे दृष्टान्ताभावात् । अनुपलब्धेरिति हेतुरपि पूर्वोक्तप्रत्यक्षत्वे ऽसिद्ध सत्त्वे च बाधित प्रत्यक्षत्वाच्चात्मनो ऽहमिति ज्ञानेन बाधित । यत्तु रूपादिविषयस्याहंप्रत्ययस्येति तन्न । अहं रूपमिति प्रतीतेरभावात् । गौरो ऽहमिति प्रतीतेस्तद्बुद्धिविषयत्वादन्यथा मम रूपमिति प्रतीत्यनुप पत्ते । रूपादिस्कन्धवाचकशब्दविषयव्यतिरिक्तवाचक आत्मशब्दो रूपादिभ्यो ऽन्यस्य सत्येकशब्द त्वात् घटशब्दवदित्यनुमानं चात्मास्तितायां साधकम् । यत्तु जीवच्छरीरं निरात्मकं सत्त्वाद् घट वदिति प्रत्यनुमानं तत्रात्मानुपकारकत्व चेत्साध्य दृष्टान्तविकलता । शरीरभेद शरीरशक्तित्व वा चेत्सिद्धसाधनम् । शरीरसंबन्धसामान्याभाववद् दृष्टान्तहानि घटादावपि सत्संबन्धात् । अथात्मशब्द पक्षीकृत्यानित्यवाचकस्य शब्दात्मकत्वेन साध्यतर्हि नित्यशब्दादौ व्यभिचार इत्यवा दिक ।

* भावस्य अभिन्नपेक्षत्वाच्चेति सूत्रार्थ । न्या वा । दर्शनस्पर्शनक्रिययोर्निराश्रयोरनुपपत्तेरिति भाव । † चार्थ्यन्तर इति २ । ५ ।

‡ स्पर्शनेनापि तं स्पृशामि स्पर्शनेन यावदर्थो गृहीतः चक्षुषा तं पश्यामीति २ पु ।

§ न च दर्शनादे रूपादिमात्रविषयकत्वेनैकविषयत्वमसिद्ध रूपाग्रहणे ऽपि तदाश्रयग्रहणस्य नीलाद्युपरिस्थितस्फटिकादौ रात्रौ बलाकागतरूपाग्रहणे ऽपि तत्सत्त्वस्य ज्ञायमानत्वेन घटादे रूपादिभ्यो व्यतिरेकसिद्धेः ।

॥ अनुव्यवसायेनैककर्तृत्वेन दर्शनस्पर्शनयोर्विषयीकरणात्सङ्घातस्य नानात्वेनैकत्वाभावादेक स्येन्द्रियस्य द्विविधविषयग्रहणासामर्थ्यात्सामर्थ्याभ्युपगमे चेन्द्रियान्तरवैयर्थ्यप्रसङ्गादिति भाव ।

¶ एककर्तृकाविति २ । ५ । ** स्वं स्वमिति १ । ४ ।

## न विषयव्यवस्थानात् ॥ २ ॥

न देहादिसंघातादन्यश्चेतनः । कस्माद्विषयव्यवस्थानात् । व्यवस्थित-विषयाणीन्द्रियाणि चक्षुष्यसति रूपं न गृह्यते सति च गृह्यते । यच्च यस्मिन्नसति न भवति सति भवति तस्य तदिति विज्ञायते । तस्माद्रूपग्रहणं चक्षुषः चक्षू रूपं पश्यति । एवं घ्राणादिष्वपीति* । तानीन्द्रियाणीमानि स्वस्वविषय-ग्रहणाच्चेतनानि इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावात्† । एवं सति किमन्येन चेतनेन ।

सन्दिग्धत्वादहेतुः‡ । योऽयमिन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावः स किं (मयं) चेतनत्वादाहोस्विच्चेतनोपकरणानां ग्रहणनिमित्तत्वादिति सन्दिह्यते । चेतनोपकरणत्वेऽपीन्द्रियाणां ग्रहणनिमित्तत्वाद्भवितुमर्हति । यच्चोक्तं विषयव्यवस्थानादिति ।

## तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥

यदि खल्वेकमिन्द्रियमव्यवस्थितविषयं सर्वज्ञं सर्वविषयग्राहि चेतनं स्यात् कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात् । यस्मात्तु व्यवस्थितविषयाणीन्द्रियाणि तस्मात्तेभ्योऽन्यश्चेतनः सर्वज्ञः सर्वविषयग्राही§ विषयव्यवस्थितिमतीतोऽनुमीयते‖ । तत्रेदं प्रत्यभिज्ञानमप्रत्याख्येयं चेतनवृत्तमुदाह्रियते । रूपदर्शी खल्वयं रसं गन्धं वा पूर्वगृहीतमनुमिनोति । गन्धप्रतिवेदी च रूपरसावनुमिनोति एवं विषयशेषेऽपि वाच्यम् । रूपं दृष्ट्वा गन्धं जिघ्रति घ्रात्वा च गन्धं रूपं पश्यति । तदेवमनियतपर्यायं¶ सर्वविषयग्रहणमेकचेतनाधिकरणमनन्य-

---

* घ्राणं जिघ्रतीति ३ ।

† यद्भावाभावानुविधायिनौ ज्ञानभावाभावौ तच्चेतनमिन्द्रियभावाभावानुविधायिनौ तावेताविति तदेव चेतनमित्यर्थः । ता॰ टी॰ ।

‡ सिद्धान्तभाष्यं संदिग्धत्वादहेतुः । अनन्यथासिद्धान्वयव्यतिरेकौ कारणत्वमात्रे प्रमाणं न तु न कर्ता चेतनश्चेतनं करणमित्यत्रेत्यर्थः । ता॰ टी॰ ।

( ) अयमिति नास्ति ३ । ४ ।

§ सर्वेषामिन्द्रियान्तराणां च ये विषयास्तद्ग्राही । इन्द्रियान्तराणि च पुनर्व्यवस्थितविषयाणि । तेनार्थाभ्युपगमे सर्वज्ञ इत्यादि सिद्धम् । ता॰ टी॰ ।

‖ अत्र च व्यतिरेकी हेतुः । आत्मा चेतनः स्वतन्त्रत्वे सत्यव्यवस्थानात् । ये स्वतन्त्राः व्यवस्थितश्च न स चेतनो यथा घटादिस्तथा च चक्षुरादि तस्माच्च चेतनमिति ।

¶ अनियतक्रममित्यर्थः । ता॰ टी॰ ।

कर्तृकं प्रतिसन्धत्ते प्रत्यक्षानुमानागमसंशयान् प्रत्ययांश्च नानाविषयान्*स्वात्मकर्तृकान् प्रतिसंदधाति प्रतिसन्धाय वेदयते । सर्वविषयं† च शास्त्रं प्रतिपद्यते ऽर्थमविषयभूतं श्रोत्रस्य क्रमभाविनो वर्णान् श्रुत्वा पदवाक्यभावेन‡ प्रतिसन्धाय शब्दार्थव्यवस्थां च बुध्यमानो ऽनेकविषयमर्थजातमग्रहणीयमेकैकेनेन्द्रियेण गृह्णाति । सेयं सर्वज्ञस्य ज्ञेयाव्यवस्था ऽनुपदं न शक्या परिक्रमितुम् । आकृतिमात्रं तूदाहृतम् । तत्र यदुक्तमिन्द्रियचैतन्ये सति किमन्येन चेतनेन तदयुक्तं भवति । इतश्च देहादिव्यतिरिक्त आत्मा न देहादिसंघातमात्रम् ।

## शरीरदाहे पातकाभावात्§ ॥ ४ ॥

शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासंघातः प्राणिभूतो गृह्यते । प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतपापं पातकमित्युच्यते । तस्याभावः तत्फलेन कर्तुरसंबन्धात् । अकर्तुश्च संबन्धात्‖ शरीरेन्द्रियबुद्धिवेदनाप्रबन्धे¶ खल्वन्यः सङ्घात उत्पद्यते ऽन्यो निरुध्यते । उत्पादनिरोधसन्ततिभूतः प्रबन्धो नान्यत्वं बाधते देहादिसङ्घातस्यान्यत्वाधिष्ठानत्वात् । अन्यत्वाधिष्ठानो** ह्यसौ प्रख्यायत इति †† । एवं सति यो देहादिसंघातः‡‡ प्राणिभूतो हिंसां करोति नासौ हिंसाफलेन सबध्यते यश्च संबध्यते न तेन हिंसा कृता । तदेवं सत्त्वभेदे कृतहानमकृताभ्यागमः प्रसज्यते । सति च सत्त्वोत्पादे§§ सत्त्वनि-

---

* विषयादिति २ । † सर्वार्थविषयमिति । ३ । ४ । ‡ पदवाक्यभावमिति २ । ५ ।

§ प्राणातिपाते पातकाभावप्रसङ्गादित्यर्थः । अयं च भूतचैतन्निकानां नानिष्टप्रसङ्गस्तथा ऽपि शाक्यान् प्रति द्रष्टव्यः । एवं च न बुद्धिरात्मेति वक्तव्ये देहादिग्रहणं विचित्राभिसंधित्वात्सूत्रं यद्वि कश्चिद् भूतचैतन्निकः प्राणातिपातकृतं पातकमिच्छेत्तं प्रति दूषणं भविष्यतीत्येवमर्थमिति मन्तव्यम् । ता॰ टी॰ ।

‖ शास्त्रचोदितं फलमनुष्ठातरीत्युत्सर्गो यत्र पुनः शास्त्रमन्यस्याह यथा श्राद्धे वैश्वानरीयेष्ट्यादौ च तत्र भवतु पुत्रकृतस्य श्राद्धस्य पितृगामि फलं पितृकृतायाः वा जातेष्टेः पुत्रगामि फलमिति भावः । ता॰ टी॰ ।

¶ प्रबन्धेनेति २ । ५ । ** अनन्यत्वाधिष्ठानइति २ ।

†† तदिदं सूत्रं यस्यात्मा नास्ति तस्यायं दोष इति प्रतिपादनार्थं न साधनार्थमिति । न्या॰ वा॰ ।

‡‡ देहादेरुपचयापचयाभ्यामन्यत्वस्य प्रत्यक्षसिद्धत्वेन तद्घटितसमुदायस्य भेदात् ।

§§ सत्त्व चेतन आत्मा तस्योत्पादे नाशे वा देहचैतन्यपक्षे देहनाशादेव तद्गतधर्मादीनां नाशे स्थिरस्यात्मनो ऽभावाद्देहान्तरोत्पादो धर्मादिनिमित्तक इति वक्तुं न शक्यते । ततश्च मुमुक्षूणां ब्रह्मचर्यादि नोपपद्यते । देहस्य स्वतःदशाया मुक्तेरभावात्ताहे स्यात एवं मुक्तस्य देहान्तरोत्पादस्य धर्मस्यकृतकर्मानिमित्तकत्वादेतत्कृतकर्मणा तत्प्रतिबन्धासम्भवादिति भावः ।

रोधे पापकर्मनिमित्तः सत्त्वसर्गः प्राप्नोति तत्र मुक्त्यर्थो ब्रह्मचर्यवासो न स्यात् । तद्यदि देहादिसङ्घातमात्रं सत्त्वं स्यात् शरीरदाहे पातकं न भवेत् । अनिष्टं चैतत् तस्माद्देहादिसङ्घातव्यतिरिक्त आत्मा नित्य इति ।

## तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥

यस्यापि नित्येनात्मना सात्मकं शरीरं दह्यते तस्यापि शरीरदाहे पातकं न भवेद्दग्धुः । कस्मान्नित्यत्वादात्मनः । न जातु कश्चिन्नित्यं हिंसितुमर्हति अथ हिंस्यते नित्यत्वमस्य न भवति । सेयमेकस्मिन्पक्षे हिंसा निष्फला ऽन्यस्मिंस्त्वनुपपन्नेति ।

## न कार्याश्रयकर्तृवधात्* ॥ ६ ॥

न ब्रूमो नित्यस्य सत्त्वस्य वधो हिंसा अपि त्वनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तृणामिन्द्रियाणामुपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा वधो हिंसेति । कार्यं तु सुखदुःखसंवेदनं तस्या†यतनमधिष्ठानमाश्रयः शरीरं कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तृणामिन्द्रियाणां वधो हिंसा न नित्यस्यात्मनः । तत्र यदुक्तं तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वादित्येतदयुक्तम् । यस्य सत्त्वोच्छेदो हिंसा तस्य कृतहानमकृताभ्यागमश्चेति दोषः । एतावच्चैत‡त्स्यात् सत्त्वोच्छेदो वा हिंसानुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयकर्तृवधो वा न कल्पान्तरमस्ति । सत्त्वोच्छेदश्च प्रतिषिद्धः तत्र किमन्यच्छेषं यथाभूतमिति । अथ वा कार्याश्रयकर्तृवधादिति कार्याश्रयो देहेन्द्रियबुद्धिसङ्घातो नित्यस्यात्मनस्तत्र सुखदुःखप्रतिसंवेदनं तस्याधिष्ठानमाश्रयः तदायतनं तद्भवति न ततोऽन्य दिति स एव कर्ता । तन्निमित्ता हि सुखदुःखसंवेदनस्य निर्वृत्तिः न तमन्तरेणेति । तस्य वध उपघातः पीडा प्रमापणं वा हिंसा न नित्यत्वेनात्मोच्छेदः । तत्र यदुक्तं तदभावः सात्मकप्रदाहेऽपि§ तन्नित्यत्वादेतन्नेति । इतश्च देहादिव्यतिरिक्त आत्मा ।

---

* तत्र कार्याश्रयशब्देन शरीरमुच्यते तन्निमित्तत्वात्सुखभोगस्येति । कर्तृशब्देनेन्द्रियाणि तत्साधनत्वात् । अथ वा समानाधिकरणसमासाच्छरीरमेव कार्याश्रयकर्तृशब्दाभ्यामुच्यते । न्या॰ वा॰ । एवं च तदवच्छेदकशरीरतदुपकरणेन्द्रियादिविनाशजनितदुःखसमर्थायित्वादात्मनो नित्यत्वेऽपि तद्धन्तुः प्रत्यवाय उपपद्यते अतिरिक्तचेतनानभ्युपगमे तु शरीरान्तरसमवेतदुःखोत्पादकशरीरान्तरविनाशे तदनिमित्तशरीरस्य तत्प्रत्यवायजनितफलोपभोक्तृत्वं कृतनाशाकृताभ्यागमप्रसङ्गादनुपपन्नमिति भावः । † स्वाधिष्ठानमिति २।५। ‡ एतावच्च तत्स्यादिति २। § ३ पुस्तके ऽपिर्नास्ति ।

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्* ॥ ७ ॥**

पूर्वापरयोर्विज्ञानयोरेकविषये प्रतिसन्धिज्ञानं प्रत्यभिज्ञानं तमेवैतर्हि पश्यामि यमज्ञासिषं स एवायमर्थ इति सव्येन चक्षुषा दृष्ट†मयेतरेणापि चक्षुषा प्रत्यभिज्ञानाद् यमद्राक्षं तमेवैतर्हि पश्यामीति । इन्द्रियचैतन्ये तु नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानुपपत्तिः‡ । §अस्ति त्विदं प्रत्यभिज्ञानं तस्मादिन्द्रियव्यतिरिक्तश्चेतनः ।

**नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥**

‖एकमिदं चक्षुर्मध्ये नासास्थिव्यवहितं तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतो मध्यव्यवहितस्य दीर्घस्येव ।

**एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥**

एकस्मिन्नुपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुर्विषयग्रहण¶लिङ्गं तस्मादेकस्य व्यवधानानुपपत्तिः ।

**अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥**

एकविनाशे द्वितीयाविनाशादित्यहेतुः । कस्मात् वृक्षस्य हि कासुचिच्छाखासु छिन्नासूपलभ्यत एव वृक्षः ।

**दृष्टान्तविरोधादप्रतिषेधः** ॥ ११ ॥**

---

* पूर्वप्रकरणेन शरीरात्मभेदे सिद्धे इन्द्रियभेदप्रतिपादनार्थमिदं प्रकरणमिति केचित् । पूर्वप्रकरणेनैव तस्यापि सिद्धत्वात्समुच्चयार्थमित्यन्ये । समुच्चीयमानहेतोः पूर्वहेत्वपेक्षया ऽभेदावि-शेषमपि न युक्तमिति इन्द्रियगतद्वित्वनिराकरणार्थमित्यपरे । सव्येन चक्षुषा दृष्टं वस्तु नष्टे ऽपि तस्मिन्वामेन प्रत्यभिजानातीति चक्षुरेकम् । द्वित्वपक्षे ऽणोर्मनसो नेत्रद्वयेन संयोगस्य युगपदसंभवादुभयकरणकैककालिकप्रत्यक्षासंभवः । मनसा ऽसंयुक्तस्यैकस्य प्रत्यक्षे सामर्थ्यकल्पनायामपरस्यापि भविष्यतीति मनःकल्पनानुपयोगः । आत्मसंयोगस्य सदातनत्वेन मनःसंयोगस्यैवाव्यवहितप्राक्कालिकव्यापारकतया तद्ग्राहित्वे कारणस्यानुपपत्तिश्च । इन्द्रियपञ्चत्वप्रतिपादकप्रकरणविरोधश्चेति । † दृष्टस्येतरेणापीति २ ५ । ‡ प्रत्यभिज्ञानानुपपत्तिरिति २ । ५ ।

§ अस्त्विदमिति क्व चित्पाठः ।

‖ एकमिदं द्रव्यं द्व्यधिष्ठानमभिन्नम् । को ऽधिष्ठानार्थः तैजसस्य चक्षुषः पार्थिवेन कृष्णसारेण उपकारविकारभेदानुविधानम् । यस्मात् कृष्णसारे उपक्रियमाणे उपक्रियते विक्रियमाणे विक्रियते तस्मादस्य कृष्णसारमधिष्ठानमुच्यते । न्या० वा० ।

¶ विभक्तिरहितः सर्वत्र पाठः ।

** अत्र भाष्यमते चक्षुरिन्द्रिये द्वित्वम् । एकेन गृहीतस्यापरेण प्रत्यभिज्ञानाच्च ताभ्यां कारणाभ्यां भिन्न. स्थिर आत्मा सिध्यति । चैकत्वं पूर्वपक्षिणः द्वित्वं तु काल्पनिकम् । कल्पनायां च व्यवधानं निमित्तम् । एकविनाशे इतीति सूत्रं भेदसाधकम् । तत्रावयवनाशेऽपीत्याक्षेपः । दृष्टान्तविरोधादिति तत्परिहारः । तस्माच्चक्षुरिन्द्रियं द्वित्ववदिति सिध्यति । वार्तिकमते तु

न कारणद्रव्यविभागे कार्यद्रव्यमवतिष्ठते नित्यत्वप्रसङ्गात् । बहुष्ववयविषु यस्य कारणानि विभक्तानि तस्य विनाशः येषां कारणान्यविभक्तानि तानि अवतिष्ठन्ते । अथ वा दृश्यमानार्थविरोधो दृष्टान्तविरोधः । मृतस्य हि शिरःकपाले द्वाववटौ नासास्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते न चैतदेकस्मिन्नासास्थिव्यवहिते संभवति । अथ चैकविनाशस्याऽनियमाद् द्वाविमावर्थौ तौ च पृथगावरणोपघातौ अनुमीयेते विभिन्नाविति । अवपीडनाच्चैकस्य चक्षुषो रश्मिविषयसन्निकर्षस्य भेदाद्दृश्यभेद इव गृह्यते तच्चैकत्वे विरुध्यते । अवपीडननिवृत्तौ चाभिन्नप्रतिसंधानमिति तस्मादेकस्य व्यवधानानुपपत्तिः । अनुमीयते* चायं देहादिसंघातव्यतिरिक्तश्चेतन इति ।

## इन्द्रियान्तरविकारात्† ॥ १२ ॥

कस्य चिदम्लफलस्य गृहीततद्रससाहचर्ये रूपे गन्धे वा केन चिदिन्द्रियेण गृह्यमाणे रसनस्येन्द्रियान्तरस्य विकारः रसानुस्मृतौ रसगर्धि‡प्रवर्तितो दन्तोदकसंप्लवभूतो गृह्यते । तस्येन्द्रियचैतन्ये ऽनुपपत्तिः नान्यदृष्टमन्यः स्मरति ।

## न स्मृतेः स्मर्तव्यविषयत्वात्§ ॥ १३ ॥

स्मृतिर्नाम धर्मो निमित्तादुत्पद्यते तस्याः स्मर्तव्यो विषयः तत्कृत इन्द्रियान्तरविकारो नात्मकृत इति ।

---

चक्षुरैकत्वं सिद्धान्तः । तत्रोपपत्तिर्दर्शितैव । तस्यैव द्वित्वेनोपलम्भोपपादकं नैकस्मिन्निति सूत्रम् । अधिष्ठानं गोलकं भिन्नमिति प्रतिपादनाय एकविनाशे ऽपीत्यादि सूत्रम् । गोलकस्य तेन भिन्नत्वे सिद्धेऽपि नेन्द्रियभेदः इन्द्रियस्य गोलकादभेदात् । अवयवनाशे ऽपीत्यादि परिहारान्तरम् । ततश्च गोलकद्वयाधिष्ठितैकचक्षुरवयवनाशेऽप्यवयविनो ऽनाशाद्ग्रहणोपपत्तेर्न द्वित्वसिद्धिरिति भावः । अस्योत्तरं दृष्टान्तविरोधादिति । ततश्च कारणद्रव्यनाशे कार्यद्रव्यनाशावश्यकत्वेन नावयविस्थितिः संभवतीति भावः । ततश्च गोलकमात्रं भिन्नमिन्द्रियं त्वेकमेव तच्चानष्टमेवेति ।

* तदेवं प्रतिसंधानद्वारेणात्मनि प्रत्यक्षं प्रमाणयित्वा ऽनुमानमिदानीं प्रमाणयति । ता॰ टी॰ ।

† इन्द्रियान्तरविकारेण तत्कारणीभूता ऽनुमीयमाना स्मृतिरात्मानमनुमापयतीति विकारस्यात्माव्यतित्वे ऽपि नानुपपत्तिरिति बोध्यम् ।

‡ रसगन्धप्रवर्तित इति २ ।

§ स्मृतिरात्मानं कारणत्वेन गमयेद्विषयत्वेन वा । न तावत्कारणत्वेन तस्याः संस्कारकारणकत्वाद् न विषयत्वेन तस्याः स्मर्तव्यविषयत्वात् स्मृताच्च तस्मादिन्द्रियविकारोत्पत्तेरित्यर्थः । ता॰ टी॰ ।

## तदात्मगुणसद्भावादप्रतिषेधः* ॥ १४ ॥

तस्या आत्मगुणत्वे सति सद्भावादप्रतिषेध आत्मनः । यदि स्मृतिरात्मगुणः एवं सति स्मृतिरुपपद्यते नान्यदृष्टमन्यः स्मरतीति । इन्द्रियचैतन्ये† तु नानाकर्तृकाणां विषयग्रहणानामप्रतिसंधानं प्रतिसंधाने वा विषयव्यवस्थानुपपत्तिः । एकस्तु चेतनो ऽनेकार्थदर्शी भिन्ननिमित्तः । पूर्वदृष्टमर्थं स्मरतीति एकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानात् स्मृतेरात्मगुणत्वे सति सद्भावः विपर्यये चानुपपत्तिः । स्मृत्याश्रयाः प्राणभृतां सर्वे व्यवहाराः । आत्मलिङ्गमुदाहरणमात्रमिन्द्रियान्तरविकार इति ।

## अपरिसंख्यानाच्च स्मृतिविषयस्य‡ ॥ १५ ॥

अपरिसंख्याय च स्मृतिविषयमिदमुच्यते न स्मृतेः स्मर्तव्यविषयत्वादिति । येयं स्मृतिरगृह्यमाणे ऽर्थे ऽज्ञासिषमहममुमर्थमिति एतस्या ज्ञातृज्ञानविशिष्टः पूर्वज्ञातोऽर्थो विषयो नार्थमात्रं ज्ञातवानहममुमर्थम् असावर्थो मया ज्ञातः अस्मिन्नर्थे मम ज्ञानमभूदिति । चतुर्विधमेतद्वाक्यं स्मृतिविषयज्ञापकं समानार्थम् । सर्वत्र खलु ज्ञाता ज्ञानं ज्ञेयं च गृह्यते । अथ प्रत्यक्षे ऽर्थे या स्मृतिस्तया त्रीणि ज्ञानानि एकस्मिन्नर्थे प्रतिसन्धीयन्ते समानकर्तृकाणि न नानाकर्तृकाणि नाकर्तृकाणि किं तर्ह्येककर्तृकाणि । अद्राक्षममुमर्थं यमेवैतर्हि पश्यामि अद्राक्षमिति दर्शनं दर्शनसंविच्च न खल्वसंविदिते स्वे दर्शने स्यादेतदद्राक्षमिति । ते खल्वेते द्वे ज्ञाने । यमेवैतर्हि पश्यामीति तृतीयं ज्ञानमेवमेको ऽर्थस्त्रिभिर्ज्ञानैर्युज्यमानो नाकर्तृको न नानाकर्तृकः किं तर्ह्येककर्तृक इति । सोयं स्मृतिविषयो ऽपरिसंख्यायमानो§ विद्यमानः प्रज्ञातोऽर्थः|| प्रतिषिध्यते नास्त्यात्मा स्मृतेः स्मर्तव्यविषयत्वादिति । न चेदं स्मृतिमात्रं स्मर्तव्यमात्रविषयम्¶ इदं

---

* न स्मर्तव्यमात्रात् स्मृतिरुपपद्यते यदा ऽयमतीतमर्थं स्मरति तदा स्मृतिरनात्मधर्मा मनोवृत्तिः न चेयमनात्मधर्मा युक्ता गुणत्वात् । न चेयमिन्द्रिये संभवत्यननुभूतत्वात् । न विषये तस्यासत्त्वात् । न शरीरे शरीरगुणानां प्रत्यक्षाणामात्मप्रत्यक्षत्वात् । न चेयं नास्ति न चात्मन्यसत्यस्याः सद्भावो युक्त इति । न्या वा ।

† २ । ५ । ४ पुस्तकेषु इन्द्रियचैतन्ये तु इति दृश्यते ।

‡ पूर्वपक्षिणो ऽवधारणं खण्डयति । ता टी

§ अपरिसंख्येयमान इति ५ पाठान्तरम् ।

|| प्रज्ञातो ऽर्थ इति २ ।

¶ स्मर्तव्यमात्रविषय चेति २ । ४ । ५ ।

खलु ज्ञानप्रतिसन्धानवत्स्मृतिप्रतिसन्धानमेकस्य सर्वविषयत्वात् । एकोऽयं ज्ञाता सर्वविषयः स्वानि ज्ञानानि प्रतिसन्धत्ते अमुमर्थं ज्ञास्यामि अमुमर्थं विजानाम्यमुमर्थमज्ञासिषममुमर्थं जिज्ञासमानश्चिरमज्ञात्वा ऽध्यवस्यत्यज्ञासिषमिति । एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टां च प्रतिसन्धत्ते । संस्कारसन्ततिमात्रे तु सत्त्वे उत्पद्योत्पद्य संस्कारास्तिरोभवन्ति स नास्त्येकोऽपि संस्कारो यस्त्रिकालविशिष्टं ज्ञानं स्मृतिं चानुभवेत् । न चानुभवमन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसन्धानमहं ममेति चोत्पद्यते देहान्तरवत् । अतोऽनुमीयते अस्त्येकः सर्वविषयः प्रतिदेहं स्वज्ञानप्रबन्धं स्मृतिप्रबन्धं च प्रतिसन्धत्ते इति । यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसन्धानं भवतीति ।

## नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १६ ॥

न (देहादि*)संघातव्यतिरिक्त आत्मा । कस्मात् आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात् । दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादीनामात्म†प्रतिपादकानां हेतूनां मनसि सम्भवो यतः मनो हि सर्वविषयमिति तस्मान्न शरीरेन्द्रियमनो (बुद्धिसंघात‡) व्यतिरिक्त आत्मेति ।

## ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥

ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते चक्षुषा पश्यति घ्राणेन जिघ्रति स्पर्शनेन स्पृशति §(एवं मन्तुः सर्वविषयस्य मतिसाधनमन्तःकरणभूतं सर्वविषयं विद्यते येनायं मन्यतइति ।) एवं सति ज्ञातर्यात्मसंज्ञा न मृष्यते मनःसंज्ञाभ्यनुज्ञायते । मनसि च मनःसंज्ञा न मृष्यते मतिसाधनं‖ त्वभ्यनुज्ञायते । तदिदं संज्ञाभेदमात्रं नार्थे¶ विवाद इति । प्रत्याख्याने वा सर्वेन्द्रियविलोपप्रसङ्गः । अथ मन्तुः सर्वविषयस्य मतिसाधनं** सर्वविषयं प्रत्याख्यायते नास्तीति एवं रूपादिविषयग्रहणसाधनान्यपि न सन्ति इति सर्वेन्द्रियविषयलोपः†† प्रसज्यतइति ।

## नियमश्च निरनुमानः ॥ १८ ॥

---

* ( ) इदं २ पु॰ नास्ति ।
† आत्मप्रतिपादकानां मनसि सम्भवादिति १
‡ ( ) २ पु॰ नास्ति । § ( ) एवं मन्तुः सर्वविषये मतिसाधनं मनः करणभूतमिति २ ।
‖ मतिसाधनसंज्ञा मृष्यते ।
¶ नात्मनि विवाद इति २ ।
** मतिसाधनमिति २ ।
†† सर्वेन्द्रियविलोपइति १ । ४ । ५ इत्यधिकं २ पु ।

योऽयं नियम इष्यते रूपादिग्रहणसाधनान्यस्य सन्ति मतिसाधनं सर्वविषयं नास्तीति। अयं नियमो निरनुमानो नात्रानुमानमस्ति येन नियमं प्रतिपद्यामहइति। रूपादिभ्यश्च विषयान्तरं सुखादयस्तदुपलब्धौ करणान्तरसद्भावः। यथा चक्षुषा गन्धो न गृह्यतइति करणान्तरं घ्राणमेवं चक्षुर्घ्राणाभ्यां रसो न गृह्यत इति करणान्तरं रसनम् एवं शेषेष्वपि। तथा चक्षुरादिभिः सुखादयो न गृह्यन्तइति करणान्तरेण भवितव्यं तच्च ज्ञानायौगपद्यलिङ्गम्। यच्च सुखाद्युपलब्धौ करणं तच्च ज्ञानायौगपद्यलिङ्गं तस्येन्द्रियमिन्द्रियं प्रति सन्निधेरसन्निधेः न युगपज्ज्ञानान्युत्पद्यन्ते इति तत्र यदुक्तमात्मप्रतिपत्तिहेतूनां मनसि संभवादिति तदयुक्तम्। *किं पुनरयं देहादिसंघातादन्यो नित्य उतानित्य इति। कुतः संशयः उभयथा दृष्टत्वात् संशयः। विद्यमानमुभयथा भवति नित्यमनित्यं च। प्रतिपादिते चात्मसद्भावे† संशयानिवृत्तेरिति। आत्मसद्भावहेतुभिरेवास्य प्राग् देहभेदादवस्थानं‡ सिद्धमूर्द्ध्वमपि देहभेदादवतिष्ठते कुतः।

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य
§हर्षभय शोकसंप्रतिपत्तेः ॥ १९ ॥

जातः खल्वयं कुमारको ऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयान्‖। ते च स्मृत्यनुबन्धादुत्पद्यन्ते

---

* शास्त्रानुभूताभ्युदयनिःश्रेयसोपयोगिनं परलोकं विवक्षुः परीक्षाहेतुभूतं संशयमाह। ता॰ टी॰।

† आत्मसंभवे इति २।

‡ देहभेदादिति ल्यब्लोपे पञ्चमी बाल्यकौमारयौवनवार्धकदेहभेदमभिसमीक्ष्य प्रतिसंधानादस्यावस्थानं सिद्धमित्यर्थः। ता॰ टी॰।

§ जन्म निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः संबन्धः। अभिप्रेतविषयकप्रार्थनाप्राप्तौ सुखानुभवो हर्षः। अनिष्टविषयसाधनोपनिपाते तज्जिहासोर्हानाशक्यता भयम्। इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः। तदनुभवः संप्रतिपत्तिः। एकविषयानेकविज्ञानोत्पादो ऽभ्यासः। प्रत्यक्षबुद्धिनिरोधे तदनुसंधानविषयः प्रत्ययः स्मृतिः। तदनुगृहीतस्तदनुसंधानविषयः प्रत्ययस्तद्भावविषयः प्रत्यभिज्ञानम्। अनुबन्धो भावनास्मृतिहेतुः संस्कारः। न्या॰ वा॰।

‖ स्मितरुदिते तयोर्लिङ्गे। शोकादिमदात्मवती बाल्यावस्था स्मितरुदितादिमत्त्वात्। बाल्यावस्था धर्मिणी यौवनावस्थावत्। ततश्च शोकादिमदात्मवत्त्वेन स्मृतिमदात्मवत्त्वं तेन संस्कारवदात्मवत्त्वं तेन पूर्वानुभववदात्मवत्त्वं तेन पूर्वशरीरसंबन्धवदात्मवत्त्वं साध्यं सर्वत्र यौवनावस्था दृष्टान्तः।

नान्यथा। स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति पूर्वाभ्यासश्च पूर्वजन्मनि सति नान्यथेति सिद्ध्यत्येतदवतिष्ठते ऽयमूर्द्ध्वं शरीरभेदादिति।

## पद्मादिषु प्रबोधसंमीलनविकारवत्तद्विकारः* ॥ २० ॥

यथा पद्मादिष्वनित्येषु प्रबोधः सम्मीलनं विकारो भवति एवमनित्यस्यात्मनो हर्षभयशोकसंप्रतिपत्ति(र्विकारः†) स्यात्। हेत्वभावादयुक्तम्। अनेन हेतुना पद्मादिषु प्रबोधसंमीलनविकारवदनित्यस्यात्मनो हर्षादिसंप्रतिपत्तिरिति नात्रोदाहरणसाधर्म्यात्साध्यसाधनं हेतुर्न वैधर्म्यादस्ति हेत्वभावात्। असंबद्धार्थकमपार्थकमुच्यते इति। दृष्टान्ताच्च हर्षादिनिमित्तस्यानिवृत्तिः या चेयमासेवितेषु विषयेषु हर्षादिसंप्रतिपत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते सेयं पद्मादिसंमीलनदृष्टान्तेन न निवर्त्यते। यथा चेयं न निवर्तते तथा जातस्यापीति। क्रियाजातश्च पर्णविभागः‡ संयोगप्रबोधसंमीलने क्रियाहेतुश्च क्रियानुमेयः। एवं च सति§ किं दृष्टान्तेन प्रतिषिध्यते। अथ निर्निमित्तः पद्मादिषु प्रबोधसंमीलनविकार इति मतमेवमात्मनोऽपि हर्षादिसंप्रतिपत्तिरिति। तच्च।

## नोष्णशीतवर्षकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥२१॥

उष्णादिषु सत्सु भावादसत्स्वभावात्तन्निमित्ताः पञ्चभूतानुग्रहेण निर्वृत्तानां पद्मादीनां प्रबोधसंमीलनविकारा इति न निर्निमित्ताः। एवं हर्षादयोऽपि विकारा निमित्ताद्भवितुमर्हन्ति न निमित्तमन्तरेण। न चान्यत्पूर्वाभ्यस्तस्मृत्यनुबन्धान्निमित्तमस्तीति। न चोत्पत्तिनिरोधकारणानुमानमात्मनो दृष्टान्तात्॥। न हर्षादीनां निमित्तमन्तरेणोत्पत्तिः नोष्णादिवन्निमित्तान्तरोपादानं हर्षादीनां तस्मादयुक्तमेतत्। इतश्च नित्य आत्मा।

* अनित्ये ऽपि विकारदर्शनादनैकान्त इति सूत्रार्थः। पद्मपत्रावयवविभागो विनश्यत्कार्यः प्रबोधः। पद्मपत्रावयवानामारब्धकार्याणां यत्पुनः परस्परेण प्राप्तयस्तत् संमीलनम्। न्या॰ वा॰।    ( ) † २ पु॰ नास्ति।

‡ पर्णसंयोगविभाग इति ४।    § सतीति २ नास्ति।

|| द्रव्यत्वे सति सर्वदा ऽमूर्तत्वादकारणक आत्मा आकाशवदित्यनुमानेनात्मनित्यत्वसिद्धेः दृष्टान्तमात्रेणोत्पत्तिविनाशकारणकल्पनं न युक्तमित्यर्थः। घटादीनामपि प्रथमक्षणे ऽमूर्तत्वाद् व्यभिचारवारणाय सर्वदेति।

*प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥

जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते । स च नान्तरेणाहाराभ्यासम् । कया युक्त्या । दृश्यते हि शरीरिणां क्षुधा पीड्यमानानामाहाराभ्यासकृतात्स्मरणानुबन्धादाहाराभिलाषः । †न च पूर्वशरीराभ्यासमन्तरेणासौ जातमात्रस्योपपद्यते । तेनानुमीयते भूतपूर्वं शरीरं यत्रानेनाहारोभ्यस्त इति । स खल्वयमात्मा पूर्वशरीरात्प्रेत्य शरीरान्तरमापन्नः क्षुत्पीडितः पूर्वाभ्यस्तमाहारमनुस्मरन् स्तन्यमभिलषति । तस्मान्न देहभेदादात्मा भिद्यते भवत्येवोर्द्ध्वं देहभेदादिति ।

अयसो ऽयस्कान्ताभिगमनवत्तदुपसर्पणम्‡ ॥ २३ ॥

यथा खल्वयो ऽभ्यासमन्तरेणायस्कान्तमुपसर्पति एवमाहाराभ्यासमन्तरेण बालः स्तन्यमभिलषति । किमिदमयसो ऽयस्कान्ताभिसर्पणं§ निर्निमित्तमथ निमित्तादिति । निर्निमित्तं तावत् ।

नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥

यदि निर्निमित्तं लोष्टादयोऽप्ययस्कान्तमुपसर्पेयुर्न जातु नियमे कारणमस्तीति । अथ निमित्तात्तत्केनोपलभ्यत इति । क्रियालिङ्गः क्रियाहेतुः क्रियानियमलिङ्गश्च क्रियाहेतुनियमः‖ । तेनान्यत्र प्रवृत्त्यभावः बालस्यापि नियतमुपसर्पणक्रियोपलभ्यते¶ न च स्तन्याभिलाषलिङ्गमन्यदाहाराभ्यासकृतात्स्मरणानुबन्धात् । निमित्तं दृष्टान्तेनोपपाद्यते न चासति निमित्ते कस्य चिदुत्पत्तिः । न च दृष्टान्तो दृष्टमभिलाषहेतुं बाधते तस्मा(दयसो ऽय)स्का**न्ताभिगमनमदृष्टान्त इति । अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति न जात्वयो लोष्ट-

---

* किमर्थं पुनरिदं सूत्रमारभ्यते यदा ऽयमर्थः पूर्वाभ्यस्तसूत्रे ऽवगतः । सामान्यतो ऽधिगतस्य विशेषज्ञापनार्थं सूत्रमित्यदोषः । न्या· वा· ।

† न च पूर्वशरीरमन्तरेणेति १ । ४ ।

‡ प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थं सूत्रमिदम् । न्या· वा· । न पूर्वाभ्यस्तस्मृत्यनुबन्ध एव प्रवृत्तिकारणमयसो ऽयस्कान्तोपसर्पणे तदभावात् । यदि च बालकस्य स्मृत्यनुबन्धो भवेज्जात्यन्धबधिरादयस्तज्जन्मानुभूतानिव रसस्पर्शगन्धादीन् जात्यन्तरानुभूतान् रूपशब्दादीनपि व्याचक्षीरन्नित्यभिप्रायः । ता· टी· ।

§ अभिगमनमिति २ । ५ । ‖ क्रियानियमहेतुनियम इति २ ।

¶ उपसर्पणं क्रियोपलभ्यत इति ४ । ** ( ) अयस इति २ नास्ति ।

मुपसर्पतीति किंकृतोऽस्य* नियम इति यदि कारणनियमात्स च क्रियानियमलिङ्गः† एवं बालस्यापि नियतविषयोऽभिलाषः कारणनियमाद्भवितुमर्हति । तच्च कारणमभ्यस्तस्मरणमन्यद्वेति दृष्टेन विशिष्यते । दृष्टो हि शरीरिणामभ्यस्तस्मरणादाहाराभिलाषः‡ इति । इतश्च नित्य आत्मा । कस्मात् ।

## वीतरागजन्मादर्शनात्§ ॥ २५ ॥

सरागो जायतइत्यर्थादापद्यते । अयं जायमानो रागानुबद्धो जायते रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः । पूर्वानुभवश्च विषयाणामन्यस्मिन्‖ जन्मनि शरीरमन्तरेण नोपपद्यते । सोऽयमात्मा पूर्वशरीरानुभूतान् विषयान् अनुस्मरन् तेषु तेषु रज्यते तथा चायं द्वयोर्जन्मनोः प्रतिसंधिः एवं पूर्वशरीरस्य पूर्वतरेण पूर्वतरस्य¶ पूर्वतमेनेत्यादिना ऽनादिश्चेतनस्य शरीरयोगः । अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति । कथं पुनर्ज्ञायते पूर्वविषयानुचिन्तनजनितो जातस्य रागो न पुनः ।

## सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः** ॥ २६ ॥

यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत उत्पद्यन्ते तथोत्पत्तिधर्मकस्यात्मनो रागः कुतश्चिदुत्पद्यते । अथायमुदितो††नुवादो निदर्शनार्थः ।

---

* किंकृतो ऽस्यानियम इति ४ ।

† यदि कारणनियमः सर्वक्रियानियमलिङ्गः । यदि कारणनियमः सर्वक्रियानियमलिङ्गा इति ३ पु· ।

‡ यौवनाद्यवस्थायां हि चेतनस्य प्रवृत्तिः वीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य तद्धेतुकैव भवितुमर्हति तेन हेतुना चेतनप्रवृत्तेः स्वाभाविकसंबन्धावगमाद् वन्हिनेव धूमस्य । एवं व्यवस्थिते यत्र स्मृतेः कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते नान्यत्र । न च य एकस्य स्मरति तेनापरमपि स्मर्तव्यमिति नियमहेतुरस्ति येन जात्यन्धबधिरादयो रूपादीनाचक्षीरन् । अदृष्टपरिपाकोद्बोधितस्य संस्कारस्य तन्नियमेन नियमोपपत्तेः । अद्यत्वेपि चानुभूतेषु कस्य चिदेव स्मरति न सर्वस्येति । ता· टी· ।

§ न च रागस्यादृष्टहेतुकत्वाच्चानुपपत्तिः । तावता ऽप्यदृष्टाव्यपतया तत्कारणकर्मकल्पनायां पूर्वशरीरसंबन्धकल्पनोपपत्तेः । सूत्रस्यात्रैव तात्पर्यात् ।    ‖ पूर्वस्मिन् जन्मनीति ५ ।

¶ पूर्वतरशरीरस्येति ३ । ५ ।    ** अनैकान्तिकत्वप्रतिपादनार्थं सूत्रम् ।

†† उदितमिदं चोद्यमयस्कान्तदृष्टान्तवादेन तथापि तस्यानुवादो निदर्शनार्थः पूर्वमयस्कान्तो निदर्शनमिदानीं घटादीनामुत्पद्यमानानां रूपादयो निदर्शनमिति तदर्थं इत्यर्थः । ता· टी· ।

## न संकल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥

न खलु सगुणद्रव्योत्पत्तिवदुत्पत्तिरात्मनो रागस्य च । कस्मात्सङ्कल्पनिमित्तत्वाद्रागादीनाम् । अयं खलु प्राणिनां विषयानासेवमानानां संकल्पजनितो रागो गृह्यते संकल्पश्च पूर्वानुभूतविषयानुचिन्तनयोनिः । तेनानुमीयते जातस्यापि पूर्वानुभूतार्थचिन्तनकृतो राग इति । आत्मोत्पादाधिकरणात्तु *रागोत्पत्तिर्भवन्ती सङ्कल्पादन्यस्मिन् रागकारणे सति वाच्या कार्यद्रव्यगुणवत् । न चात्मोत्पादः† सिद्धो नापि संकल्पादन्यद्रागकारणमस्ति । तस्मादयुक्तं सगुणद्रव्योत्पत्तिवत्तयोरुत्पत्तिरिति । अथापि संकल्पादन्यद्रागकारणं धर्माधर्मलक्षणमदृष्टमुपादीयते तथापि पूर्वशरीरयोगोऽप्रत्याख्येयः । तत्र हि तस्य निर्वृत्तिः नास्मिन् जन्मनि । तन्मयत्वाद्राग‡ इति विषयाभ्यासः खल्वयं भावनाहेतुः तन्मयत्वमुच्यत इति जातिविशेषाच्च रागविशेष इति । कर्म खल्विदं जातिविशेषनिर्वर्तकं तादर्थ्यात्ताच्छब्द्यं विज्ञायते । तस्मादनुपपन्नं संकल्पादन्यद्रागकारणमिति । अनादिश्चेतनस्य शरीरयोग इत्युक्तं स्वकृतकर्मनिमित्तं चास्य शरीरं सुखदुःखाधिष्ठानं तत्परीक्ष्यते§ किं घ्राणादिवदेकप्रकृतिकमुत नानाप्रकृतीति|| । कुतः संशयः । विप्रतिपत्तेः¶ संशयः । पृथिव्यादीनि भूतानि संख्याविकल्पेन शरीरप्रकृतिरिति प्रतिजानत इति । किं तत्र तत्त्वम् ।

## पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

तत्र मानुषं शरीरं पार्थिवम् । कस्माद् गुणान्तरोपलब्धेः । गन्धवती

---

* यथा चोत्पत्तिरिति २ । ५ ।　　† आत्मोत्पादाधिकरणानान्त्यमिति २ ।

‡ अभ्युपेत्यादृष्टकारणत्वं रागादीनां पूर्वं परिहृतं परमार्थस्तु तन्मयत्वाद्राग इत्यर्थः । स्यादेतत् । यदि पूर्वाभ्यस्तस्मृत्यनुबन्धाद्रागद्वेषादीनामुत्पादो हन्त मनुष्यजन्मानन्तरं प्राप्तकरभभावस्य मनुष्यजन्मोचितानां भावनानामानन्तर्यात्तदनुरूपा एवास्य रागादयो भवेयुर्न करभानुरूपाः करभजातेरस्य विजातीयजन्मसहस्रव्यवायादत आह । जातिविशेषाच्चेति । कर्मणः संस्कारोद्बोधकत्वात् करभत्वजात्यनुबद्धेन कर्मणा जन्मसहस्रव्यवहितापि करभभावनोद्बोध्यते नानन्तरापि मनुष्यभावना प्रायणाभिभूतेति भावः । ता॰ टी॰ ।

§ आत्मपरीक्षानन्तरं शरीरपरीक्षाया अवसरप्राप्तत्वादात्मना ज्ञानादिसंबन्धाच्च शरीरपरीक्षेति वार्तिकम् ।

|| प्रकृतिकर्मिति २ । ४ ।　　¶ विप्रतिपत्तेश्चेति २ ।

पृथिवी गन्धवच्च शरीरम् । अबादीनामगन्धत्वात् तत्प्रकृत्यगन्धं स्यात्* । न त्विदमबादिभिरसंपृक्तया पृथिव्यारब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्पते† इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति । भूतसंयोगो हि मिथः पञ्चानां न निषिद्ध इति । आप्यतैजसवायव्यानि लोकान्तरे शरीराणि तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति । स्थाल्यादिद्रव्यनिष्पत्तावपि निःसंशयाः‡ नाबादिसंयोगमन्तरेण निष्पत्तिरिति । पार्थिवाप्यतैजसं तद्गुणोपलब्धेः निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकं गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं तइमे संदिग्धा हेतव इत्युपेक्षितवान्सूत्रकारः । कथं संदिग्धाः§ सति च प्रकृतिभावे भूतानां धर्मोपलब्धिरसति च संयोगाप्रतिषेधात्‖ सन्निहितानामिति । यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति । तदिदमनेकभूतप्रकृति शरीरमगन्धमरसमरूपमस्पर्शं च प्रकृत्यनुविधानात्स्यात् । न त्विदमित्थंभूतं तस्मात्पार्थिवं गुणान्तरोपलब्धेः ।

## श्रुतिप्रामाण्याच्च ॥ २९ ॥

सूर्यं ते चक्षुर्गच्छतादित्यत्र मन्त्रे पृथिवीं ते शरीरमिति श्रूयते । तदिदं प्रकृतौ विकारस्य प्रलयाभिधानमिति । सूर्यं ते चक्षुः¶स्पृणोमि इत्यत्र मन्त्रान्तरे पृथिवीं ते शरीरं स्पृणोमीति* श्रूयते । सेयं कारणाद्विकारस्य† सृ-

---

* मानुषशरीरमेकात्मकं गन्धवत्त्वात्पार्थिवपरमाणुवदिति न्यायाकारः । अयमभिसंधिः । पृथिव्याप्यपरमाणू तावदेकं द्व्यणुकमारब्धुमर्हतः तयो रूपस्पर्शवत्त्वेन तदारम्भसंभवेऽपि गन्धवत्त्वाभावप्रसङ्गात् । एकपार्थिवाणुसमवेतस्य गन्धस्यैकत्वेनानारम्भकत्वात् । नापि पार्थिवपरमाणुद्वयमेकश्च पाथसीयः परमाणुरित्यणूनामारम्भकत्वे गन्धवत्त्वोपपत्तिरिति वाच्यम् । परमाणूनां बहूनामनारम्भकत्वात् । तथा हि । त्रयः परमाणवो न कार्यद्रव्यमारभन्ते परमाणुत्वे सति बहुत्वसंख्यायुक्तत्वात् । घटोपगृहीतपरमाणुप्रचयवत् । आरम्भकत्वे तेषां घटोपगृहीतानां कपालशर्कराचूर्णक्रमो घटनाशे नोपलभ्येत । द्व्यणुके च विजातीयानारम्भकत्वं दृष्टं तेनैव दृष्टान्तेनान्यत्रापि विजातीयारम्भो निषेध्यः । एतेन पार्थिवावयवानां बहूनां सतां पाथसीयैरवयवैः शरीरारम्भः प्रत्युक्तः । विजातीयानामनारम्भकत्वस्य दृष्टान्तधर्मिणि विनिश्चयादिति । ता॰ टी॰ ।

† कल्पते इतः पञ्चानामिति ४ ।

‡ निःसंशय इति २ । ४ । ५ ।

§ सन्दिग्धा इति सतीति २ । ५ ।

‖ अनेकेषां प्रकृतित्वे इवानेकेषां संयोगमात्रे ऽपि सत्यनेकगुणोपलब्धिसंभवाद्यानेकगुणोपलब्धिरनेककार्यत्वानुमापिकेति भावः । अत्रानेकेषां प्रकृतित्वमभ्युपगमवादेन न तु वस्तुत उक्तयुक्तेः । ¶ स्पर्णोमि २ । ५ । * स्पर्णोमि २ । ५ । † स्मातिरभिप्रेतइति २ । ५ ।

तिरभिधीयते* इति । स्थाल्यादिषु च तुल्यजातीयानामेककार्यारम्भदर्शनाद् भिन्नजातीयानामेककार्यारम्भानुपपत्तिः । अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते किमाव्यक्तिकान्याहो स्विद् भौतिकानीति† । कुतः संशयः ।

**कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात्संशयः ॥ ३० ॥**

कृष्णसारं भौतिकं तस्मिन्ननुपहते रूपोपलब्धिः उपहते चानुपलब्धि‡रिति । व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्य उपलम्भो न कृष्णसारप्राप्तस्य न चाप्राप्यकारित्वमिन्द्रियाणां तदिदमभौतिकत्वे विभुत्वात्सम्भवति । एवमुभयधर्मोपलब्धेः संशयः । अभौतिकानीत्याह । कस्मात् ।

**§महदणुग्रहणात् ॥ ३१ ॥**

महदिति महत्तरं महत्तमं चोपलभ्यते यथा न्यग्रोधपर्वतादि । अण्विति अणुतरमणुतमं च गृह्यते न्यग्रोधधानादि । तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते । भौतिकं हि यावत्तावदेव व्याप्नोति अभौतिकं तु विभुत्वात्सर्वव्यापकमिति । न महदणु‖ग्रहणमात्रादभौतिकत्वं विभुत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम् । इदं खलु ।

---

* अस्यापि मन्त्रस्यायमर्थो यद्यस्मादायाति तत्तस्मिन्नेव प्रलयं गच्छतीति प्रकृतौ विकारस्य प्रलयाभिधानं प्रकृतिशब्देन कार्यशून्यं कारणमुच्यते न पुनः कार्यस्य कारणे लयः । एवं चासदुत्पद्यते सन्निरुध्यत इत्ययमर्थ उक्तो भवति । न्या वा ।

† उपलक्षणं चैतत् । यद्यपि भौतिकानि तदापि कृष्णसारं यदेतदुपलभ्यते तदेवेन्द्रियमाहो तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः । तत्र पूर्वः संशयः साङ्ख्यनैयायिकयोर्विप्रतिपत्तेरुत्तरस्तु सौगतनैयायिकयोरिति । आव्यक्तिकत्वमाहङ्कारिकत्वं द्रष्टव्यम् । अहङ्काराद्धि बुद्धिविकाराद्वैकारिकादेकादशेन्द्रियाणि जायन्त इति साङ्ख्याः । आव्यक्तिकत्वं त्वव्यक्तस्य मूलकारणत्वादुक्तम् । ता टी ।

‡ कृष्णसारे सति रूपोपलब्धेरसत्यनुपलब्धेः कृष्णसारमेव चक्षुः । अत्र प्रदीपेन व्यभिचारो वार्तिके दर्शितः । तेनान्वयव्यतिरेकयोः सतोरपि तस्य चक्षुष्ट्वाभावात् । कृष्णसारस्य चक्षुष्ट्वे च सन्निकृष्टविप्रकृष्टयोस्तुल्योपलब्धिप्रसङ्गः । कृष्णसारेण हि न विषयः संयुज्यते असंयोगे चाविशेषादुभयोस्तुल्योपलब्धिः प्राप्नोति । अथ सन्निकृष्टस्यैव विषयता न विप्रकृष्टस्येति न विप्र- ८
कृष्टस्यापि विषयत्वात् ।

§ एवं कोट्यन्तरे व्यभिचारिते भौतिकानीति साध्ये हेतुप्रतिपादकं सूत्रम् ।

‖ अणुग्रहणं समपातायातं न तु तदत्र विवक्षितमसाधकत्वादिति । ता टी । भौतिकानामपि दीपादीनां महदणुप्रकाशकत्वादयं हेतुर्व्यभिचरित इति वार्तिकम् । इन्द्रियाणामभूतात्मकत्वे व्यापकत्वे चाश्रीयमाणे व्यवहितस्यापि विषयस्य ग्रहणप्रसङ्गः । व्यापकत्वादेव कुड्यादेस्तदावरणसामर्थ्याभावात् । न च तद्वृत्तीनामावरणमिन्द्रियव्यतिरेकेण तद्वृत्तौ प्रमाणाभावात् ।

**रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम्* ॥ ३२ ॥**

तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेरर्थस्य च सन्निकर्षविशेषाद्भवति यथा प्रदीपरश्मेरर्थस्य चेति । रश्म्यर्थसन्निकर्षश्चावरणलिङ्गः चाक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति यथा प्रदीपरश्मिरिति । आवरणानुमेयत्वे सतीदमाह ।

**तदनुपलब्धेरहेतुः† ॥ ३३ ॥**

रूपस्पर्शवद्धि तेजो महत्त्वादनेकद्रव्यवत्त्वाद्रूपवत्त्वाच्चोपलब्धिरिति‡ प्रदीपवत् प्रत्यक्षत उपलभ्येत चाक्षुषो रश्मिर्यदि स्यादिति ।

**नानुमीयमानस्य प्रत्यक्षतो ऽनुपलब्धिरभावहेतुः ॥ ३४ ॥**

सन्निकर्षप्रतिषेधार्थेनावरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतो ऽनुपलब्धिर्नासावभावं प्रतिपादयति यथा चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्य ।

**द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३५ ॥**

भिन्नः खल्वयं द्रव्यधर्मो गुणधर्मश्च महदनेकद्रव्यवच्च विषक्तावयवमाप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते§ स्पर्शस्तु शीतो गृह्यते । तस्य द्रव्यस्यानुबन्धात् हेमन्तशिशिरौ कल्प्येते । तथाविधमेव च तैजसं द्रव्यमनुद्भूतरूपं सह रूपेण नोपलभ्यते स्पर्शस्त्वस्योष्ण उपलभ्यते तस्य द्रव्यस्यानुबन्धाद् ग्रीष्मवसन्तौ कल्प्येते यत्र त्वेषा भवति ।

---

* भूयोऽवयवसंनिकर्षोनुग्रहः । यस्मादयं संनिकर्षो विशेषप्रतिपत्तिहेतुर्भूयोऽवयवसंयोगैरनुगृह्यते । सोऽयमवान्तरसंयोगापेक्षया ऽवयवीन्द्रियसन्निकर्षः संनिकर्षविशेष इत्युच्यते स च रश्म्यर्थसंनिकर्षविशेषो महदण्वोस्तुल्यो भवतीत्यन्यथा महदण्वोर्ग्रहणं सिध्यति । न्या॰ वा॰ ।

† न चाक्षुषो रश्मिर्विद्यतइति सूत्रार्थः । न्या॰ वा॰ ।

‡ महत्त्वं तावत्कारणमहत्त्वबहुत्वप्रचयेभ्यः । अनेकद्रव्यवत्त्वमपि कारणबहुत्वादेव । रूपस्पर्शवद्धि तेज इति नाल्पं तत् । एवमशेषोपलब्धिकारणसंनिधाने सति येन नोपलभ्यते तेन गम्यते नास्तीति । न्या॰ वा॰ ।

§ सत्यमुपलब्धिलक्षणप्राप्तमनुपलभ्यमानं न शक्यमनुमातुं न तु महत्त्वादेवोपलब्धिलक्षणप्राप्तिरपि तु रूपविशेषो ऽपि न चासौ विशेष उद्भूतसमाख्यातः कृष्णसाराधिष्ठानस्य चक्षुषो ऽस्तीत्यर्थः । ता॰ टी॰ ।

**अनेकद्रव्य*समवायात् रूपविशेषाच्च रूपोपलब्धिः ॥ ३६ ॥**

यत्र रूपं च द्रव्यं च तदाश्रयः प्रत्यक्षत उपलभ्यते रूपविशेषस्तु यद्भावात्क्व चिद्रूपोपलब्धिः यदभावाच्च द्रव्यस्य क्व चिदनुपलब्धिः †स रूपधर्मोयमुद्भवसमाख्यात इति । अनुद्भूतश्चायं‡ नायनो रश्मिः तस्मात्प्रत्यक्षतो नोपलभ्यतइति । दृष्टश्च तेजसो धर्मभेद उद्भूतरूपस्पर्शं प्रत्यक्षं तेजो यथा आदित्यरश्मयः । उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षं यथा प्रदीपरश्मयः । उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षं यथाब्वादिसंयुक्तं तेजो ऽनुद्भूतरूपस्पर्शो ऽप्रत्यक्षः चाक्षुषो रश्मिरिति ।

**कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः§ ॥ ३७ ॥**

यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्पते तथेन्द्रियाणि व्यूढानि विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रकॢप्त्यर्था द्रव्यविशेषे च प्रतीघातादावरणोपपत्तिर्व्यवहारार्था । सर्वद्रव्याणां विश्वरूपो व्यूह इन्द्रियवत् कर्मकारितः पुरुषार्थतन्त्रः । कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति ।

---

* अनेकद्रव्येण समवायादिति वार्त्तिककृत्संमतः पाठः । इदं सूत्रं वैशेषिकसूत्रेषु अ० ४ आ० १ सू० ८ दृश्यते । अत्र रूपविशेषग्रहणेन रूपविशेष उद्भवसमाख्यो ऽभिधीयते न रूपत्वं न रूपान्तराद्रूपं विशिनष्टि अपि तूद्भवो विशेषकत्वाद्विशेष इत्युच्यते । उद्भवश्च कार्यगम्यः यस्याभावाद्विपक्वावयवमाप्यद्रव्यं हेमन्ते न गृह्यते तेजसो ग्रीष्मे ऊष्मा । यस्य भावात्प्रदीपरश्मिरुपलभ्यते आदित्यरश्मिश्च स उद्भवो नाम विशेषः । न्या० वा० ।

† स च रूपधर्म उद्भवसमाख्यात इति २।५। ‡ अनुद्भूतरूपस्येति छापकाग्रेनेति २।४।

§ रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रकॢप्त्यर्था । यदि नायनो रश्मिरुद्भूतस्पर्शो भवेत्तेन दृश्यविशेषे ऽनेकरश्मिसंनिपाते सति द्रव्यं दह्येत । अनेकरश्मिसंनिपाते च सति व्यवहितत्वाद् द्रव्यस्यानुपलब्ध्या भवितव्यम् । अथ मन्यसे यथा ऽऽदित्यरश्मिसंबद्धो ऽयं नायनो रश्मिर्न व्यवधीयते एवं रश्म्यन्तरसंनिपातेपीति तन्न । ज्योतिर्भिश्चानुग्राहकत्वात् । ज्योतिर्भिश्चादित्यरश्मिस्तत्संबद्धेन द्रव्येण संबध्यते । उद्भूतरूपस्पर्शवत्त्वे च चक्षुषो यस्य पूर्वं संनिपतितं चक्षुस्तदितरेण व्यवहितमपि नार्थं गृह्णीयात् । अथानेकरश्मिसंनिपाते सति समानजातीयद्रव्येण द्रव्यान्तरं रश्मिरुत्पद्यतइति । एवं सति समथासमथचक्षुषोस्तुल्योपलम्भः प्राप्नोति न चेतदिष्टमनुपलब्धेरिति व्यवहारप्रकॢप्त्यर्थं च नायनस्य रश्मेरनुद्भूतरूपस्पर्शवत्त्वमिति सर्वद्रव्याणां विश्वरूपो व्यूहः पुरुषार्थकारित इति । न्या० वा० ।

## अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः ॥ ३८ ॥

यश्चावरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतिघातः स भौतिकधर्मो न भूतानि व्यभिचरति नाभौतिकं प्रतिघातधर्मकं दृष्टमिति । अप्रतिघातस्तु व्यभिचारी भौतिकाभौतिकयोः समानत्वादिति । यदपि मन्यते प्रतिघाताद्भौतिकानीन्द्रियाणि अप्रतिघातादभौतिकानीति प्राप्तम् । दृष्टश्चाप्रतिघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः । तन्न युक्तम् । कस्मात् यस्माद्भौतिकमपि न प्रतिहन्यते काचाभ्रपटलस्फटिकान्तरितप्रकाशनात् प्रदीपरश्मीनां स्थाल्यादिषु पार्थकस्य तेजसो ऽप्रतिघातः । उपपद्यते चानुपलब्धिः कारणभेदात् ।

## मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ३९ ॥

यथा ऽनेकद्रव्येण समवायाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे मध्यन्दिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशेनाभिभूतः । एवं महदनेकद्रव्यवत्त्वाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरत. । तच्च व्याख्यातम*नुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतो ऽनुपलब्धिरिति । अत्यन्तानुपलब्धिश्चाभावकारणं यो हि ब्रवीति लोष्ठप्रकाशो मध्यदिने आदित्यप्रकाशाभिभवान्नोपलभ्यते इति तस्यैतत्स्यात् ।

## न रात्रावप्यनुपलब्धेः† ॥ ४० ॥

अप्यनुमानतो ऽनुपलब्धेरिति । एवमत्यन्तानुपलब्धेर्लोष्ठप्रकाशो नास्ति न त्वेवं चक्षुषो रश्मिरिति । उपपन्नरूपा चेयम् ।

## बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितो ऽनुपलब्धिः‡ ॥ ४१ ॥

* अनुद्भूतरूपस्येति २ पु पा० ।

† मध्यंदिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशादित्ययुक्तं सर्वरश्मिप्रसङ्गात् । एव सति लोष्ट रश्मिवत् प्राप्नोति । अथ लोष्टरश्मयः कस्मान्नोपलभ्यन्त इत्यभियुक्तो ब्रूयादादित्यरश्म्यभिभवादित्ययुक्तं तदेतदुत्तरद्वारकं सूत्रम् । अनुमानतश्च नोपलभ्यते लोष्टरश्मिरित्यपिशब्दाद् गम्यते । न्या० वा० ।

‡ दृष्टान्तस्थाने एतत् सूत्रम् । किमुक्तं भवति । यत् खलु बाह्यप्रकाशमपेक्षते तस्यानुपलब्धौ रूपानभिव्यक्तित इत्यनुद्भूतेर्यथा विपक्वावयवस्याप्यद्रव्यस्य रूपानुद्भूतेरग्रहणम् । तथा चाक्षुषो रश्मिर्बाह्यप्रकाशानुग्रहमपेक्षते तस्मादस्यापि रूपस्यानुद्भूतेरग्रहणमिति । न्या० वा० ।

वाह्येन* प्रकाशेनानुगृहीतं चक्षुर्विषयग्राहकं तदभावे ऽनुपलब्धिः । सति च प्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषा ग्रहणं रूपस्यानुद्भूतत्वात्सेयं रूपानभिव्यक्तितो रूपाश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा तत्र यदुक्तं तदनुपलब्धेरहेतुरित्येतदयुक्तम् । कस्मात्पुनरभिभवो ऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यतइति ।

## अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥

बाह्यप्रकाशानुग्रहनिरपेक्षतायां चेति चार्थः । यद्रूपमभिव्यक्तमुद्भूतं बाह्यप्रकाशानुग्रहं च नापेक्षते तद्विषयो ऽभिभवो विपर्यये ऽभिभवाभावात् । अनुद्भूतरूपत्वाच्चानुपलभ्यमानं बाह्यप्रकाशानुग्रहाच्चोपलभ्यमानं नाभिभूयतइति एवमुपपन्नमस्ति चाक्षुषो रश्मि*रिति ।

## नक्तंचरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

दृश्यन्ते हि नक्तं नयनरश्मयो नक्तंचराणां वृषदंशप्रभृतीनां तेन शेषस्यानुमानमिति† । जातिभेदवदिन्द्रियभेद इति चेद् ‡धर्मभेदमात्रं§ चानुपपन्नमावरणस्य प्राप्तिप्रतिषेधार्थस्य‖ दर्शनादिति । इन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वानुपपत्तिः । कस्मात् ।

## अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४४ ॥

---

* बाह्यप्रकाशेनेति ४ ।

† विप्रतिपत्तिविषयः कृष्णसारं रश्मिवद् द्रव्यत्वे सति रूपोपलब्धौ नियतस्य साधनस्य निमित्तत्वात् प्रदीपवदिति । अथ वा रश्मिवच्चक्षुः द्रव्यत्वे सति नियतत्वे सति स्फटिकादिव्यवहितार्थप्रकाशकत्वात्प्रदीपवदिति । न्या॰ वा॰

‡ मानुषं चक्षुः रश्मिवत् अप्राप्तिस्वभावत्वे रूपाद्युपलब्धिनिमित्तत्वान्नक्तंचरचक्षुर्वदिति । न्या॰ वा॰ । § धर्मभेदमात्रञ्चेति १ धर्ममात्रभेदे चेति ४ । ५ ।

‖ यथा बिडालत्वजातिर्वृषदंशे वर्तते न मनुष्ये एवं रश्मिवद्बिडालस्यैव चक्षुर्भविष्यति न मानुषस्येति चेन्न आवरणसामर्थ्यात् । सत्येतस्मिन् जातिभेदे यथा वृषदंशप्रभृतीनां कुड्यादिभो रश्मय आव्रियन्ते तथा मनुष्याणामपीति समानमेवेति । इतश्च भौतिकानीन्द्रियाणि प्रतिघातित्वाद् घटादिवदिति । भूतं श्रोत्रं द्रव्यत्वे सति बाह्यार्थप्रकाशकत्वाद् घ्राणवदिति । न्या वा॰ ।

¶ वृषदंशनयनस्य रश्मिवत्त्वं धर्मो मनुष्यनयनस्य गु न तत्त्वमिति यो ऽयं धर्मभेदः स एव धर्मभेदमात्रं तच्चानुपपन्नं चो ऽवधारणे भिन्नक्रमः अनुपपन्नमेवेति योजना । ता॰ टी॰ ।

तृणादिसर्पद् द्रव्यं काचे ऽभ्रपटले वा प्रतिहतं दृष्टमव्यवहितेन सन्निकृष्यते व्याहन्यते वै प्राप्तिर्व्यवधानेनेति । यदि च रश्म्यर्थसन्निकर्षो ग्रहणहेतुः स्याद् न व्यवहितस्य सन्निकर्ष इत्यग्रहणं स्यात् । अस्ति चेयं काचाभ्रपटलस्फटिकान्तरितोपलब्धिः सा *ज्ञापयत्यप्राप्यकारीणीन्द्रियाणि । अत एवाभौतिकानि प्राप्यकारित्वं हि भौतिकधर्म इति न ।

कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥

अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यान्तरितस्यानुपलब्धिर्न स्यात् । प्राप्यकारित्वे ऽपि तु काचाभ्रपटलस्फटिकान्तरितोपलब्धिर्न स्यात् ।

अप्रतीघातात्सन्निकर्षोपपत्तिः ॥ ४६ ॥

न च काचो†ऽभ्रपटलं वा नयनरश्मिं विष्टभ्नाति सो ऽप्रतिहन्यमानः सन्निकृष्यत इति यश्च मन्यते न भौतिकस्याप्रतीघात इति तन्न‡ ।

आदित्यरश्मेः स्फटिकान्तरितेऽपि§ दाह्ये ऽविघातात् ॥ ४७ ॥

||नादित्यरश्मेरविघातात् स्फटिकान्तरिते ऽप्यविघाताद् दाह्ये ऽविघातात् । अविघातादिति च पदाभिसंबन्धभेदाद्वाक्यभेद इति ॥ ¶प्रतिवाक्यं चार्थभेद इति । आदित्यरश्मिः कुम्भादिषु न प्रतिहन्यते ऽविघातात् । कुम्भस्थमुदकं तपति प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्य स्पर्शस्य ग्रहणं तेन च शीतस्पर्शाभिभव इति । स्फटिकान्तरिते ऽपि प्रकाशनीये प्रदीपरश्मीनामप्रतिघातः अप्रतिघातात्प्राप्तस्य ग्रहणमिति । भर्जनकपालादिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते तत्राविघातात्प्राप्तिः प्राप्तौ तु दाहो नाप्राप्यकारि तेज इति । अविघातादिति च केवलं पदमुपादीयते को ऽयमविघातो नाम । अव्यूह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याविष्टम्भः क्रियाहेतोरप्रतिबन्धः प्राप्तेरप्रतिषे**ध इति । दृष्टं हि कलशनिषक्तानामपां बहिः शीतस्पर्श-

* तस्माज्ज्ञापयतीति २ । † काचाभ्रपटमिति ४ ।
‡ अप्रतिघात इति न इति २ । § स्फटिकान्तरेऽपीति ४ । || आदित्यरश्मेरिति ४ ।
¶ प्रतिवाक्यं चार्थभेद इति ४ पुस्तके ऽधिकम् ।
** यस्य द्रव्यस्यावयवा न व्यूह्यन्ते तस्यान्तरवयवैरव्यूह्यमानस्य यो ऽभिसंबन्धः सो ऽविघात इति । अन्तर्व्यवस्थितस्य वा द्रव्यस्याव्यूह्यमानावयवद्रव्यस्य बहिरवस्थितद्रव्यप्राप्तिः । न्या· वा· ।

ग्रहणम् । न चेन्द्रियेणासन्निकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः दृष्टो च प्रस्यन्दपरिस्रवौ । तत्र काचाभ्रपटलादिभिर्नायनरश्मेरप्रतिघाताद्विभिद्यार्थेन सह सन्निकर्षादुपपन्नं ग्रहणमिति ।

## नेतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥

काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतीघातः कुड्यादिवद्वा काचाभ्रपटलादिभिः प्रतीघात इति प्रसज्यते नियमे कारणं वाच्यमिति ।

## आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ॥ ४९ ॥

आदर्शोदकयोः प्रसादो रूपविशेषः* स्वो धर्मो नियमदर्शनात् प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम् । यथा ऽऽदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन सन्निकर्षे सति स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाख्यमादर्शरूपानुग्रहात्तन्निमित्तं भवति । आदर्शरूपोपघाते तदभावात् कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति । एवं काचाभ्रपटलादिभिरविघातश्चक्षूरश्मेः कुड्यादिभिश्च प्रतिघातो द्रव्यस्वभावनियमादिति ।

## दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥

प्रमाणस्य तत्त्वविषयत्वात् । न खलु भोः परीक्षमाणेन दृष्टानुमिता अर्थाः शक्या नियोक्तुमेवं भवतेति । नापि प्रतिषेद्धुमेवं न भवतेति । न हीदमुपपद्यते रूपवद्गन्धो ऽपि चाक्षुषो भवत्विति गन्धवद्वा रूपं चाक्षुषं मा भूदिति अग्निप्रतिपत्तिवद्धूमेनोदकप्रतिपत्तिरपि भवत्विति उदकाप्रतिपत्तिवद्वा धूमेनाग्निप्रतिपत्ति(रपि) माभूदिति । किं कारणं यथा खल्वर्था भवन्ति य एषां स्वो भावः स्वो धर्म इति तथाभूताः प्रमाणेन प्रतिपद्यन्त इति । तथाभूतविषयकं हि प्रमाणमिति । इमौ खलु नियोगप्रतिषेधौ भवता देशितौ काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातो भवतु कुड्यादिवद्वा काचाभ्रपटलादिभिरप्रतीघातो मा भूदिति । न दृष्टानुमिताः खल्विमे द्रव्यधर्माः प्रतिघाताप्रतीघातयोर्ह्युपलब्ध्यनुपलब्धी व्यवस्थापिके । व्यवहितानुपलब्ध्या ऽनुमीयते कुड्या-

---

* द्रव्यान्तरासयुक्तद्रव्यसमवायः । तस्य वा रूपोपलम्भसामर्थ्यं धर्मः । न्या वा । ( ) नास्ति । ५ । २ ।

दिभिः प्रतिघातो व्यवहितोपलब्ध्या ऽनुमीयते काचाभ्रपटलादिभिरप्रतिघात* इति । अथापि खल्वेकमिदमिन्द्रियं बहूनीन्द्रियाणि वा । कुतः संशयः ।

**स्थानान्यत्वे नानात्वा†दवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥**

बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते नानास्थानश्च सन्नेको ऽवयवी चेति । तेनेन्द्रियेषु भिन्नस्थानेषु संशयः‡ इति । एकमिन्द्रियम्।

**त्वगव्यतिरेकात् ॥ ५२ ॥**

त्वगेकमिन्द्रियमित्याह कस्मात् अव्यतिरेकात् । न त्वचा किं चिदिन्द्रियाधिष्ठानं न प्राप्तं न चासत्यां त्वचि किं चिद्विषयग्रहणं भवति यया सर्वेन्द्रियस्थानानि व्याप्तानि यस्यां च सत्यां विषयग्रहणं भवति सा त्वगेकमिन्द्रियमिति ।

**नेन्द्रियान्तरार्थानुपलब्धेः§ ॥** स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्शे इन्द्रियान्तरार्था रूपादयो न गृह्यन्ते अन्धादिभिः । न स्पर्शग्राहका(॥दिन्द्रिया)दिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन् रूपादयो न च गृह्यन्ते तस्मान्नैकमिन्द्रियं त्वगिति ।

**त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः ॥** यथा त्वचो ऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति नान्य एवं त्वचो ऽवयवविशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति ।

**व्याहतत्वादहेतुः ॥** त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा त्वगवयवविशेषेण धूमोपलब्धिवद्रूपाद्युपलब्धिरित्युच्यते । एवं च सति नानाभू-

---

*. अथेन्द्रियस्य प्राप्यकारित्वे ऽञ्जनशलाकादि कस्मान्नोपलभ्यते । इन्द्रियेणासंबन्धात् । अधिष्ठानस्यानिन्द्रियत्वात् । रश्मिरिन्द्रियं नाधिष्ठानं न च रश्मिना ऽञ्जनशलाका संबद्धेति न्या० वा ।

† अवयविनानात्वादिति अधिकम् ४ ।

‡ शरीरव्यतिरिक्तं द्रव्यं यथा दृष्टमेकमनेकं चेति तदपि संशयबीजमिति वार्तिकम् ।

§ नेन्द्रियान्तरार्थानुपलब्धेः त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः व्याहतत्वादहेतुरिति भाष्यमेव न सूत्रत्रयं सिद्धान्तभाष्य नेन्द्रियेति इत्युपक्रम्य एव भाष्यकारीयं सिद्धान्तमुक्त्वा सौत्रं सिद्धान्तमाह सूत्रेण चाभिसंबन्धः सिद्धान्तस्येत्युपसंहृत्य न युगपदर्थानुपलब्धेरिति तात्पर्यटीकायामुक्तत्वात् । कलिकातामुद्रितपुस्तके तु भ्रमात्सूत्रत्वेन लेखः ।

( ) इन्द्रियादिति ४ पुस्तके नास्ति । ॥ बाधक इति ४ ।

तानि विषयग्राहकाणि विषयव्यवस्थानात् तद्भावे विषयग्रहणस्य भावात्तदुपघाते चाभावात् तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यतइति* ।

संदिग्धश्चाव्यतिरेकः । पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि न च तेष्वसत्सु विषयग्रहणं भवतीति । तस्मान्न त्वगन्यद्वा सर्वविषयमेकमिन्द्रियमिति ।

†न युगपदर्थानुपलब्धेः ॥ ५३ ॥

आत्मा मनसा संबध्यते मन इन्द्रियेण इन्द्रियं सर्वार्थैः सन्निकृष्टमिति आत्मेन्द्रियमनोर्थसन्निकर्षेभ्यो युगपद्ग्रहणानि स्युः । न च युगपद्रूपादयो गृह्यन्ते तस्मान्नैकमिन्द्रियं सर्वविषयमस्तीति‡ । असाहचर्याच्च§ विषयग्रहणानां नैकमिन्द्रियं सर्वविषयकं साहचर्ये हि विषयग्रहणानामन्धाद्यनुपपत्तिरिति ।

विप्रतिषेधाच्च न त्वगेका ॥ ५४ ॥

न खलु त्वगेकमिन्द्रियं व्याघातात् । त्वचा रूपाण्यप्राप्तानि गृह्यन्त, इति । अप्राप्यकारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः स्पर्शादीनां च प्राप्तानां ग्रहणाद्रूपादीनां प्राप्तानामग्रहणमिति|| प्राप्तम् । ¶प्राप्यकारित्वमिति चेद् आवरणा-

---

* अथैकमिन्द्रियं त्वगित्युपगम्येदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिषेधमभ्यनुजानाति । न ह्यवयव्यनतिरिक्ता अवयवा इति । यांश्चावयवान् रूपादिग्राहकांस्त्वचो मन्यन्ते ते किमिन्द्रियात्मका उत नेति । किं चातः यदीन्द्रियात्मका नैकमिन्द्रियम् । अथेन्द्रियात्मका न भवन्ति न तर्हीन्द्रियग्राह्या रूपादय इति । न्या॰ वा॰ ।

† नायुगपदर्थानुपलब्धेः ३ ।

‡ अथानेकेन्द्रियवादे ऽपि घटस्य चाक्षुषे त्वाचे च युगपत्क्रमापेक्षायां फलवर्तन बुभुत्सायाः सहकारित्वाश्रयणेन दोषवारणे त्विन्द्रियैकत्वपक्षे ऽपि तथैव दोषवारणं संभवतीति भाष्योक्तं दूषणं परिहृत्य करणस्य युगपदनेकक्रियाकारित्वाभावेन युगपदनेकज्ञानवारणेऽपीन्द्रियैकत्वपक्षेऽव्यवस्थेयोपपत्तेः त्वच अवयवित्वे तस्य प्राप्यकारित्वाप्राप्यकारित्वयोर्विरोधेन प्राप्यकारित्वे त्वचा प्राप्तानां रूपादीनामग्रहणप्रसङ्गादप्राप्यकारित्वे च दूरस्थद्रव्यगतस्पर्शस्यापि ग्रहणप्रसङ्गादेकस्यैव प्राप्यकारित्वाप्राप्यकारित्वयोरनुपपत्तेरनेकेन्द्रियपक्षे प्रत्येकेन्द्रियगतेषु करणस्याभावेन युगपदनेकक्रियाकारित्वाभावोपपादनयोरिन्द्रियैकत्वपक्षे समाधानाभावादनेकमिन्द्रियमिति वार्तिकम् ।

§ साहचर्यं नाम यस्यैकं विषयग्रहणं तस्य द्वितीयमपीत्यन्धबधिराद्यभावप्रसङ्गः । न्या॰ वा॰ ।

|| प्राप्तानां ग्रहणमिति । २ ४ ।　　¶ प्राप्याप्राप्यकारित्वमिति । २ । ४ ।

नुपपत्तेर्विषयमात्रस्य ग्रहणम्। अथापि मन्येत प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते रूपाणि त्वप्राप्तानीति एवं सति नास्त्यावरणम् आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य चाव्यवहितस्य चेति। दूरान्तिकानुविधानं च रूपोपलब्ध्यनुपलब्ध्योर्न स्यात्। अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्याग्रहणमन्तिके च ग्रहणमित्येतन्न स्यादिति। *प्रतिषेधाच्च† नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते।

## इन्द्रियार्थपञ्चत्वात्‡ ॥ ५५ ॥

अर्थः प्रयोजनं तत् पञ्चविधमिन्द्रियाणां स्पर्शनेनेन्द्रियेण स्पर्शग्रहणे सति न तेनैव रूपं गृह्यतइति रूपग्रहणप्रयोजनं चक्षुरनुमीयते। स्पर्शरूपग्रहणे च ताभ्यामेव न गन्धो गृह्यतइति गन्धग्रहणप्रयोजनं घ्राणमनुमीयते। त्रयाणां ग्रहणे न तैरेव रसो गृह्यतइति रसग्रहणप्रयोजनं रसनमनुमीयते। न चतुर्णां ग्रहणे तैरेव शब्दः श्रूयते इति शब्दग्रहणप्रयोजनं श्रोत्रमनुमीयते। एवमिन्द्रियप्रयोजनस्यानितरेतरसाधनसाध्यत्वात्पञ्चैवेन्द्रियाणि।

## न तदर्थबहुत्वात् ॥ ५६ ॥

न खल्विन्द्रियार्थपञ्चत्वात्पञ्चेन्द्रियाणीति सिद्ध्यति। कस्मात्तेषामर्थानां बहुत्वात्। बहवः खल्विमे इन्द्रियार्थाः स्पर्शास्तावच्छीतोष्णानुष्णाशीता इति। रूपाणि शुक्लहरितादीनि। गन्धा इष्टानिष्टोपेक्षणीयाः। रसाः कटुकादयः। शब्दा वर्णात्मानो ध्वनिमात्राश्च भिन्नाः। तद्यस्येन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि तस्येन्द्रियार्थबहुत्वाद्बहूनि इन्द्रियाणि प्रसज्यन्तइति।

## गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५७ ॥

---

* एकस्यप्रतिषेधाच्चेति ७।४।५।

† एकस्यप्रतिषेधमात्रेणार्थाच्चानात्वे सिद्धेऽपि नानात्वसिद्धये वक्ष्यमाणो हेतुरप्युच्यतइत्यर्थः। अथ वा प्रतिषेधादित्यस्यार्थे ऽनन्तरमिति पूरयित्वा स्थापनाहेतुरुपादीयतइति व्याख्यातं वार्तिके।

‡ अत्र विषयगतं प्रयोजनगतं वा पञ्चत्वं व्यधिकरणत्वात् कथमिन्द्रियगतपञ्चत्वसाधकमित्याशङ्क्य कर्तारमात्मानं पक्षीकृत्य रूपादिषु नानाविषयेष्वेकेन करणेनैकस्य विषयीकरणे ऽप्यन्यविषयकज्ञानक्रियानिष्पत्तये करणान्तरापेक्षित्वे साध्ये इन्द्रियपञ्चत्वं सिध्यति यथा लोके एकस्य कर्तुरेकेन करणेनैकस्यां क्रियायां पर्यवसितायां क्रियान्तरनिष्पत्तये करणान्तरापेक्षेति वार्तिकम्।

गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थानां गन्धादीनां यानि गन्धादिग्रहणानि तान्यसमानसाधनसाध्यत्वाद्* ग्राहकान्तराणि† न प्रयोजयन्ति अर्थसमूहोऽनुमानमुक्तो‡ नार्थैकदेशः । अर्थैकदेशं चाश्रित्य विषयपञ्चत्वमात्रं भवान्प्रतिषेधति तस्मादयुक्तोऽयं प्रतिषेध इति । कथं पुनर्गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादय इति । स्पर्शः खल्वयं त्रिविधः शीत उष्णोऽनुष्णाशीतश्च स्पर्शत्वेन स्वसामान्येन संगृहीतः । गृह्यमाणे च शीतस्पर्शे नोष्णस्यानुष्णाशीतस्य वा स्पर्शस्य ग्रहणं ग्राहकान्तरं प्रयोजयति स्पर्शभेदानामेकसाधनसाध्यत्वाद् येनैव शीतस्पर्शो गृह्यते तेनैवेतरावपीति । एवं गन्धत्वेन गन्धानां रूपत्वेन रूपाणां रसत्वेन रसानां शब्दत्वेन शब्दानामिति । गन्धादिग्रहणानि पुनरसमानसाधनसाध्यत्वाद् ग्राहकान्तराणां प्रयोजकानि । तस्मादुपपन्नमिन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति । यदि सामान्यं संग्राहकं प्राप्तमिन्द्रियाणाम् ।

विषयत्वाव्यतिरेकादेकत्वम् ॥ ५८ ॥

विषयत्वेन हि सामान्येन गन्धादयः संगृहीता इति ।

न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ५९ ॥

न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहकान्तरनिरपेक्षा एकसाधनग्राह्या अनुमीयन्ते । अनुमीयन्ते च पञ्च गन्धादयो गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था इन्द्रियान्तरग्राह्यास्तस्मादसंबद्धमेतत् । अयमेव चार्थोऽनूद्यते बुद्धिलक्षणपञ्चत्वादिति । बुद्धय एव लक्षणानि विषयग्रहणलिङ्गत्वादिन्द्रियाणां तदेतदिन्द्रियार्थपञ्चत्वादित्येतस्मिन्सूत्रे कृतभाष्यमिति । तस्माद् बुद्धिलक्षणपञ्चत्वात्पञ्चेन्द्रियाणि । अधिष्ठानान्यपि खलु पञ्चेन्द्रियाणां सर्वशरीराधिष्ठानं स्पर्शनं स्पर्शग्रहणलिङ्गं कृष्णताराधिष्ठानं चक्षुः बहिर्निःसृतं रूपग्रहणलिङ्गं नासाधिष्ठानं घ्राणं जिह्वाधिष्ठानं रसनं कर्णच्छिद्राधिष्ठानं श्रोत्रं गन्धरसरूपस्पर्शशब्दग्रहणलिङ्गत्वादिति । गतिभेदादपीन्द्रि-

---

* असमानमसाधारणं यत्साधनं घ्राणादि तत्साध्यत्वादेकेन घ्राणेनैव सर्वविषयग्रहणासंभवादिति यावत् । रूपस्पर्शादीनां स्वैकेन्द्रियग्राह्यत्वं न संभवति दूषितत्वादिति भावः ।

† नेति नास्ति ।

‡ अर्थानां विषयाणां समूह एकजातीयानामिति यावत् । अनुमानमनुमितिसाधनं न प्रत्येकं विषया इत्यर्थः ।

यभेदः । कृष्णसारोपनिबद्धं चक्षुर्बहिर्निःसृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति । स्पर्शनादीनि त्विन्द्रियाणि विषया एवाश्रयोपसर्पणात्प्रत्यासीदन्ति । सन्तानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति । आकृतिः खलु परिमाणमियत्ता सा पञ्चधा । स्वस्थानमात्राणि घ्राणरसनस्पर्शनानि विषयग्रहणेनानुमेयानि । चक्षुः कृष्णसाराश्रयं बहिर्निःसृतं विषयव्यापि । श्रोत्रं नान्यदाकाशात् तच्च विभु शब्दमात्रानुभवानुमेयं पुरुषसंस्कारोपग्रहाच्चाधिष्ठाननियमेन शब्दस्य व्यञ्जकम्*इति । जातिरिति योनिं प्रचक्षते† । पञ्च खल्विन्द्रिययोनयः पृथिव्यादीनि भूतानि तस्मात्प्रकृतिपञ्चत्वादपि पञ्चेन्द्रियाणीति सिद्धम् ।

कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति ।

**भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ६० ॥**

दृष्टो हि वाय्वादीनां भूतानां गुणविशेषाभिव्यक्तिनियमः । वायुः स्पर्शव्यञ्जकः आपो रसव्यञ्जिकाः तेजो रूपव्यञ्जकं पार्थिवं किञ्चिद् द्रव्यं कस्य चिद् द्रव्यस्य गन्धव्यञ्जकम् । अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः । तेन भूतगुणविशेषोपलब्धेर्मन्यामहे भूतप्रकृतीनीन्द्रियाणि ‡नाव्यक्तप्रकृतीनीति । गन्धादयः पृथिव्यादिगुणा इत्युपदिष्टम् उद्देशश्च पृथिव्यादीनामेकगुणत्वे चानेकगुणत्वे समान इत्यत आह ।

---

* धर्माधर्मसहितया दृष्टानिष्टोपेक्षणीयशब्दसाधनभूतया कर्णशष्कुल्या च आकाशस्य संबन्धस्तत्सम्बन्धानुविधाय्याकाशं न विवरान्तरेणास्यादिना शब्दमुपलक्षयति नान्यत्रेति तदुपकारप्रतीकारभेदाद्वा उपक्रियते चेति न पुनराकाशनित्यत्वादुपक्रियते न प्रतिक्रियत इति । प्रकृष्टाप्रकृष्टश्रोत्रभेदो ऽत एव । न्या॰ वा॰

† इन्द्रियाणां योनिस्तादात्म्यं न पुनस्तत्कार्यत्वमाकाशे संभवति नित्यत्वात् । न्या॰ वा॰ ।

‡ तत्र पार्थिवं घ्राणं रूपरसस्पर्शगन्धेषु नियमेन गन्धस्य व्यञ्जकत्वात् बाह्यपार्थिववदिति । यथा हि मृगमदादिगन्धव्यञ्जकाः पार्थिवाः कुक्कुटोच्चारादय इत्यर्थः । न चातपेनानेकान्तः । न ह्यातपो गन्धव्यञ्जको ऽपि तु जलाभिभूतो द्रव्याणां गन्धो नोपलभ्यते केवलं जलमातपो ऽपनयति न तु द्रव्यस्य गन्धमभिव्यनक्ति तस्मान्नानेकान्तः । एवं रसनमिन्द्रियमाप्यं गन्धादिषु मध्ये नियमेन रसस्य व्यञ्जकत्वात् दन्तान्तरस्यन्दमानोदबिन्दुवत् । न खलु विस्यन्दास्यो मोदकादिरसमनुभवति । एवं तैजसं चक्षुर्गन्धादिषु मध्ये नियमेन रूपव्यञ्जकत्वात्प्रदीपादि-

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ॥ ६१ ॥**

**अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः* ॥ ६२ ॥**

स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः । आकाशस्योत्तरः शब्दः स्पर्शपर्यन्तेभ्य इति । कथं तर्हि तरनिर्द्देशः । स्वतन्त्रविनियोगसामर्थ्यात्† । तेनोत्तरशब्दस्य परार्थाभिधानं विज्ञायते । उद्देशसूत्रे हि स्पर्शपर्यन्तेभ्यः परः शब्द इति । तन्त्रं वा स्पर्शस्य विवक्षितत्वात् स्पर्शपर्यन्तेषु नियुक्तेषु योऽन्यस्तदुत्तरः शब्द इति ।

**न सर्वगुणानुपलब्धेः ॥ ६३ ॥**

नायं गुणनियोगः साधुः । कस्माद् यस्य भूतस्य ये गुणा न ते तदात्मकेनेन्द्रियेण सर्वेऽपलभ्यन्ते । पार्थिवेन हि घ्राणेन स्पर्शपर्यन्ता न गृह्यन्ते गन्ध एवैको गृह्यते एवं शेषेष्वपीति । कथं तर्हीमे गुणा विनियोक्तव्या इति ।

**एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तराणां तदनुपलब्धिः ॥ ६४ ॥**

गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः अतस्तदनुपलब्धिः तेषां तयोः तस्य चानुपलब्धिः । घ्राणेन रसरूपस्पर्शानां रसनेन रूपस्पर्शयोः चक्षुषा स्पर्शस्येति । कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति ।

---

वत् । एवं वायवीयं त्वगिन्द्रियं गन्धादिषु मध्ये नियमेन स्पर्शस्य व्यञ्जकत्वात् स्वेदोदबिन्दुशीतस्पर्शव्यञ्जकव्यजनवातवत् । नियमग्रहणं मनोनिवृत्त्यर्थम् । गन्धादिषु मध्ये इति चावधारणसिद्ध्यर्थम् । अन्यथा घ्राणादीनां गन्धत्वादिव्यञ्जकत्वेनावधारणं न स्यादिति । एवं चेन्द्रियपञ्चत्वेन हस्तपादपायूपस्थवाचामिन्द्रियत्वनिषेधोऽपि दृष्टोत इन्द्रियलक्षणविरहात् । यच्छरीरसंयुक्तं संस्कारकदोषव्यतिरिक्तसाक्षात्प्रतीतिसाधनं तदिन्द्रियमिति हीन्द्रियलक्षणं न चैतदस्ति हस्तादिषु । ज्ञानेन्द्रियाणां तल्लक्षणमिमानि तु कर्मेन्द्रियाणीति चेद्धन्तैषामिन्द्रियत्वे लक्षणान्तरं वक्तव्यम् । शरीराश्रितमसाधारणकार्यकारीन्द्रियमिति लक्षणमिति चेदुक्तव्यमेषामसाधारणं कार्यम् । उक्तं वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानामिति नन्वादानविहरणोत्सर्गास्तावद्धस्तादिभिरपि कर्तुं शक्याः । अपि चास्ति कण्ठकूपामाशयपक्वाशयादीनामपि निगरणादि तत्तदसाधारणं कार्यमिति तान्यपीन्द्रियाणि प्रसज्येरन् तस्मादुक्तं किंचिदेतदिति । ता॰ टी॰ ।

* नियमार्थं सूत्रे । न्या॰ वा॰ अत एकसूत्रत्वेन लेख पामादिक ।

† स्वतन्त्रस्यानवधारणीयानपेक्षस्य विनियोगो बोधार्थं व्युत्पत्ते प्रयोगस्तत्सामर्थ्यादुक्तेरिति यावत् ।

## संसर्गाच्चानेकगुणग्रहणम् ॥ ६५ ॥

अबादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते एवं शेषेष्वपीति। नियमस्तर्हि न प्राप्नोति संसर्गस्यानियमाच्चतुर्गुणा पृथिवी त्रिगुणा आपो द्विगुणं तेज एकगुणो वायुरिति। नियमश्चोपपद्यते कथम् ।

## विष्टं ह्यपरं परेण ॥ ६६ ॥

पृथिव्यादीनां पूर्वंपूर्वमुत्तरेणोत्तरेण विष्ट*मतः संसर्गनियम इति। तच्चैतद्भूतसृष्टौ† वेदितव्यं नैतर्हीति।

## न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६७ ॥

नेति त्रिसूत्रीं प्रत्याचष्टे। कस्मात्पार्थिवस्य द्रव्यस्याप्यस्य च प्रत्यक्षत्वात्। महत्त्वानेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात्‡। न पार्थिवमाप्यं वा रूपाभावात्। तैजसवत्तु पार्थिवाप्ययोः प्रत्यक्षत्वाद् न संसर्गादनेकगुणग्रहणं भूतानामिति। भूतान्तररूपकृतं च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते नियमे वा कारणमुच्यतामिति। रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् पार्थिवो रसः षड्विधः आप्यो मधुर एव न चैतत्संसर्गाद्भवितुमर्हति। रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात्§ तैजसरूपानुगृहीतयोः संसर्गे हि व्यञ्जकमेव रूपं न व्यङ्ग्यमस्तीति। एकानेकविधत्वे च पार्थिवाप्ययोः प्रत्यक्षत्वाद् रूपयोः पार्थिवं हरितलोहितपीताद्यनेकविधं रूपमाप्यं तु शुक्लमप्रकाशकं न चैतदेकगुणानां संसर्गे सत्युपलभ्यत इति। उदाहरणमात्रं चैतत्। अतः परं प्रपञ्चः। स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात्

---

* विष्टत्वं संयोगविशेषः । न्या वा. । संयोगविशेषो व्याप्तिरित्यर्थः । ता टी. ।

† भूतसृष्टिप्रतिपादकेषु पुराणेषु । नैतर्हीति नेदानीमननुभवादित्यर्थः । ता. टी. ।

‡ त्रिविधं द्रव्यं चाक्षुषमिष्यते पार्थिवमाप्यं तैजसं च । तत्र रूपवत्त्वेन तैजसमेव चाक्षुषं स्यादितरदरूपत्वात् । न हि रूपिद्रव्यसंसर्गाच्चाक्षुषत्वमरूपयोरपि पार्थिवाप्ययोरिति युक्तं नभोनभस्वतोरपि चाक्षुषत्वप्रसङ्गात् । अस्ति हि तयोरपि रूपवत्तेजसा संयोग इति । ता. टी. ।

§ तैजसरूपानुगृहीतयोः प्रत्यक्षत्वादित्यधिकम् २ । ५ ।

## न शब्दगुणोपलब्धेः ॥ ७२ ॥

स्वगुणान्नोपलभन्त इन्द्रियाणीति' एतन्न भवति । उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति ।

## तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७३ ॥

न शब्देन गुणेन सगुणमाकाशमिन्द्रियं भवति । न शब्दः शब्दस्य व्यञ्जकः न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षं नाप्यनुमीयते । अनुमीयते तु श्रोत्रेणाकाशेन शब्दस्य ग्रहणं शब्दगुणत्वं चाकाशस्येति । परिशेषश्चानुमानं वेदितव्यम् । आत्मा तावत् श्रोता न करणं मनसः श्रोत्रत्वे बधिरत्वाभावः पृथिव्यादीनां घ्राणादिभावे सामर्थ्यं श्रोत्रभावे चासामर्थ्यम् । अस्ति चेदं श्रोत्रमाकाशं च शिष्यते परिशेषादाकाशं श्रोत्रमिति* ।

इति श्रीवात्स्यायनीये भाष्ये तृतीयस्याद्यमाह्निकम् ॥

परीक्षितानीन्द्रियाण्यर्थाश्च बुद्धेरिदानीं परीक्षाक्रमः सा किमनित्या नित्या वेति । कुतः संशयः ।

## कर्माकाशसाधर्म्यात्संशयः ॥ १ ॥

अस्पर्शवत्त्वं ताभ्यां समानो धर्म उपलभ्यते बुद्धौ विशेषश्चोपजनापायधर्मवत्त्वं विपर्ययश्च यथास्वमनित्यनित्ययोस्तस्यां बुद्धौ नोपलभ्यते तेन संशय इति । अनुपपन्नः खल्वयं संशयः सर्वशरीरिणां हि प्रत्यात्मवेदनीया अनित्या बुद्धिः सुखादिवत् । भवति च संवित्तिर्ज्ञास्यामि जानामि

---

* मनसः श्रोत्रत्वे बधिराद्यभावः सर्वविषयत्वाच्च मनसः सर्वविषयं श्रोत्रं प्राप्नोति । पृथिव्याद्यपि न श्रोत्रम् घ्राणादिभावे विनियोगात् । घ्राणादिविनियुक्ताः पृथिव्यादयः श्रोत्रभावे च घ्राणादीनां तद्वैकल्ये शब्दानुपलब्धिप्रसङ्गः । त्वचः श्रोत्रत्वे बधिराभावः सर्वोपघाते च प्रायणम् । दिक्कालयोः श्रोत्रत्वे च शब्दस्यान्यगुणत्वादग्रहणप्रसङ्गः । तद्गुणत्वमिति चेन्नास्ति विवादः । यस्य शब्दो गुणस्तदाकाशं भवता संज्ञामात्रं भिद्यते तौ दिक्कालाविति । आकाशप्रत्याख्यानं वा ऽन्यगुणत्वाच्छब्दस्य । यदि शब्दो दिक्कालगुणो भवति आकाशं तर्हि प्रत्याख्यातम् । न हि शब्दमन्तरेणाकाशास्तित्वे लिङ्गमस्ति यथा दिक्कालयोः परापरादि लिङ्गमिति न द्रव्यान्तरं शिष्यत इति । न च गुणानां श्रोत्रभावो युक्तः । न चाकार्याणां सामान्यविशेषसमवायानां सामर्थ्यानुपलब्धेः । न चेदं श्रोत्रं नास्ति शब्दोपलब्धिलिङ्गम् । न्या॰ वा॰ ।

अज्ञासिषमिति न चोपजनापायावन्तरेण त्रैकाल्यव्यक्तिस्ततश्च त्रैकाल्यव्यक्तेरनित्या बुद्धिरित्येतत्सिद्धम् । प्रमाणसिद्धं चेदं शास्त्रेऽप्युक्तमिन्द्रियार्थसन्निकर्षोत्पन्नं युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्येवमादि तस्मात्संशयप्रक्रियानुपपत्तिरिति । *दृष्टिप्रवादोपालम्भार्थं तु प्रकरणम् । एवं हि पश्यन्तः प्रवदन्ति सांख्याः पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति । साधनं च प्रचक्षते ।

## विषयप्रत्यभिज्ञानात्† ॥ २ ॥

किं पुनरिदं प्रत्यभिज्ञानं पूर्वमज्ञासिषमर्थं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धिज्ञानं प्रत्यभिज्ञानमेतच्चावस्थिताया बुद्धेरुपपन्नम् । नानात्वे तु बुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः नान्यज्ज्ञातमन्यः प्रत्यभिजानातीति ।

## साध्यसमत्वादहेतुः‡ ॥ ३ ॥

यथा खलु नित्यत्वं बुद्धेः साध्यमेवं प्रत्यभिज्ञानमपीति । किं कारणं चेतनधर्मस्य करणे ऽनुपपत्तिः । पुरुषधर्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोधः प्रत्ययो ऽध्यवसाय इति । चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानाति तस्यैतस्माद्धेतोर्नित्यत्वं युक्तमिति । करणचैतन्याभ्युपगमे तु चेतनस्वरूपं वचनीयं नानिर्दिष्टस्वरूपमात्मान्तरं शक्यमस्तीति प्रतिपत्तुम् । ज्ञानं चेद्बुद्धेरन्तःकरण-

---

* सांख्यानां हि दर्शने प्रवादो महदन्तःकरणं बुद्धिरिति तदुपालम्भनार्थं प्रकरणमिति । अयमभिप्रायो नेह नित्यानित्यविचारः प्रधानतो ऽपि त्वनया द्वारा वृत्तिरतिरिक्ता सांख्याभिमता बुद्धिर्निराक्रियते सामान्यतो बुद्धिमात्रस्य नित्यानित्यत्वविचारेण । यदि हि नित्या बुद्धिः स्यात्ततो वृत्तिभ्य उदयव्ययवतीभ्यो व्यतिरिक्तं महत्तत्त्वमन्तःकरणं स्यात् । अथ तु नित्यत्वसाधनानि प्रतिसंधानादीनि न बुद्धिनित्यत्वमीयते ततो वृत्तय एव बुद्धयो न तदतिरिक्तं बुद्धितत्त्वं सिध्यतीति । ता. टी ।

† वृत्तिमान् किल विषयं प्रत्यभिजानन्नात्मानमपि प्रत्यभिजानाति न च चेतनो वृत्तिमान् तस्य कूटस्थनित्यत्वात् । अन्यथा तु पूर्वापरावस्थाभेदवान् कूटस्थनित्यः स्यात् । परिणामिनित्या तु बुद्धिरुदयव्ययवदनेकवृत्तिमती युज्यते इति भावः । ता. टी ।

‡ वृत्तयो हि वृत्तिमतो भिन्नाः तेन तासामनित्यत्वे ऽपि न वृत्तिमान् कौटस्थ्याच्च्यवेत । तथा च प्रत्यभिज्ञानात् ऽऽत्मैव प्रत्यभिज्ञानान्नित्यः सिध्यति न त्वन्तःकरणं बुद्धिसंज्ञकं न हि तस्य प्रत्यभिज्ञाने प्रकाशातदत्यर्थः । ता. टी ।

स्याऽभ्युपगम्यते चेतनस्येदानीं किं स्वरूपं को धर्मः किं तत्त्वं ज्ञानेन च बुद्धौ वर्तमानेनायं चेतनः किं करोतीति ।

चेतयतइति चेद् न ज्ञानादर्थान्तरवचनम् । पुरुषश्चेतयते बुद्धिर्जानातीति नेदं ज्ञानादर्थान्तरमुच्यते चेतयते जानीते पश्यति उपलभते इत्येको ऽयमर्थ इति। बुद्धिर्ज्ञापयतीति चेद् अद्धा जानीते पुरुषो बुद्धिर्ज्ञापयतीति सत्यमेतत् । एवं चाभ्युपगमे ज्ञानं पुरुषस्येति सिद्धं भवति न बुद्धेरन्तःकरणस्येति ।

प्रतिपुरुषं च शब्दान्तरव्यवस्थाप्रतिज्ञाने प्रतिषेधहेतुवचनम् । *यश्च प्रतिजानीते कश्चित्पुरुषश्चेतयते कश्चिद्बुध्यते कश्चिदुपलभते कश्चित्पश्यतीति पुरुषान्तराणि खल्विमानि चेतनो बोद्धोपलब्धा द्रष्टेति नैकस्यैते धर्मा इति अत्र कः प्रतिषेधहेतुरिति ।

अर्थस्याभेदो इति चेत् समानम् । अभिन्नार्था एते शब्दा इति तत्र व्यवस्थानुपपत्तिरित्येवं चेन्मन्यसे समानं भवति पुरुषश्चेतयते बुद्धिर्जानीते इत्यत्राप्यर्थो न भिद्यते तत्रोभयोश्चेतनत्वादन्यतरलोप इति । यदि पुनर्बुध्यते ऽनयेति बोधनं बुद्धिर्मन एवोच्यते तच्च नित्यम् अस्त्वेतदेवं न तु मनसो विषयप्रत्यभिज्ञानान्नित्यत्वम् । दृष्टं हि करणभेदे ज्ञातुरेकत्वात् प्रत्यभिज्ञानं सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति । चक्षुर्वत् प्रदीपवच्च प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति । तस्माज् ज्ञातुरयं नित्यत्वे हेतुरिति । यच्च मन्यते बुद्धेरवस्थिताया यथाविषयं वृत्तयो ज्ञानानि निश्चरन्ति वृत्तिश्च वृत्तिमतो नान्येति तच्च ।

न युगपदग्रहणात्‡ ॥ ४ ॥

वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतो ऽवस्थानाद् वृत्तीनामवस्थानमिति यानीमानि विषयग्रहणानि तान्यवतिष्ठन्तइति युगपद् विषयाणां ग्रहणं प्रसज्यतइति ।

अप्रत्यभिज्ञाने च विनाशप्रसङ्गः§ ॥ ५ ॥

अतीते च प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः

---

* कोऽपीति २ ।  + अर्थस्य भेद इति २ ।

‡ वृत्तिमतो ऽवस्थानाद् वृत्त्यवस्थानप्रसङ्ग इति सूत्रार्थः । न्या० वा०

§ वृत्तीनामपगमे वृत्तिमतो ऽप्यपगम इति सूत्रार्थः । न्या० वा०

प्रसज्यते विपर्यये च नानात्वमिति । अविभु चैकं मनः पर्यायेणेन्द्रियैः संयुज्यतइति ।

## क्रमवृत्तित्वादयुगपद् ग्रहणम् ॥ ६ ॥

इन्द्रियार्थानां वृत्तिवृत्तिमतोर्नानात्वमिति । एकत्वे च प्रादुर्भावतिरोभावयोरभाव इति ।

## अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥

अप्रत्यभिज्ञानमनुपलब्धिः अनुपलब्धिश्च कस्य चिदर्थस्य विषयान्तरव्यासक्ते मनस्युपपद्यते वृत्तिवृत्तिमतोर्नानात्वादेकत्वे हि अनर्थको व्यासङ्ग इति । विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगः ।

## न गत्यभावात्* ॥ ८ ॥

प्राप्तानीन्द्रियाण्यन्तःकरणेनेति प्राप्त्यर्थस्य गमनस्याभावः । तत्र क्रमवृत्तित्वाभावादयुगपद् ग्रहणानुपपत्तिरिति । गत्यभावाच्च प्रतिषिद्धं विभुनोऽन्तःकरणस्यायुगपद्ग्रहणं न लिङ्गान्तरेणानुमीयते इति । यथा चक्षुषो गतिः प्रतिषिद्धा सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात्पाणिचन्द्रमसोर्व्यवधानेन प्रतीघाते सानुमीयतइति सोऽयं नान्तःकरणे विवादो न तस्य नित्यत्वे । सिद्धं हि मनोऽन्तःकरणं नित्यं चेति । क्व तर्हि विवादः तस्य विभुत्वे तच्च प्रमाणतोऽनुपलब्धेः प्रतिषिद्धमिति । एकं चान्तःकरणं नाना चैता ज्ञानात्मिका वृत्तयः चक्षुर्विज्ञानं घ्राणविज्ञानं रूपविज्ञानं गन्धविज्ञानम् । एतच्च वृत्तिवृत्तिमतोरेकत्वे ऽनुपपन्नमिति पुरुषो जानीते नान्तःकरणमिति । †एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः । विषयान्तरग्रहणलक्षणो विषयान्तरव्यासङ्गः‡ पुरुषस्य नान्तःकरणस्येति केन क्व चिदिन्द्रियेण सन्निधिः केन क्व चिदसन्निधिरित्ययं व्यासङ्गोऽनुज्ञायते मनस इति एकमन्तःकरणं नानावृत्तय इति । सत्यभेदे वृत्तेरिदमुच्यते ।

---

* प्राप्तान्यन्तःकरणेनेन्द्रियाणीति सूत्रार्थः न्या० वा० ।

† यदपि सांख्या आचचक्षिरे विषयान्तरव्यासक्ते ऽन्तःकरणे चक्षुरादिसंबद्धस्याप्यर्थस्याज्ञानादन्तःकरणशक्तिर्ज्ञानमिति तन्निराकरणपरं भाष्यम् । ता० टी० ।

‡ अभीष्टविषयो ऽनेकविज्ञानोत्पादः । न्या० वा०

## स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः* ॥ ९ ॥

तस्यां वृत्तौ नानात्वाभिमानो यथा द्रव्यान्तरोपहिते स्फटिके अन्यत्वाभिमानो नीलो लोहित इति एवं विषयान्तरोपधानादिति ।

न हेत्वभावात्† । स्फटिकान्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमानो गौणो न पुनर्गन्धाद्यन्यत्वाभिमानवदिति हेतुर्नास्ति हेत्वभावादनुपपन्न इति । समानो हेत्वभाव इति चेद् न ज्ञानानां क्रमेणोपजनापायदर्श-

---

* एतदुक्तं भवति । यद्यपि वृत्तयो नाना प्रतिभान्ति तथापि भ्रान्तिरियमेकस्मादन्तःकरणादभिन्नानां नानात्वानुपपत्तेः । तस्मात्स्फटिकस्य यथैकस्यापि तापिच्छजपाकर्णिकारादिकुसुमोपधानाद्भेद औपाधिक एवमन्तःकरणेऽपि स्वकस्वेन्द्रियप्रणालिकया तत्तदर्थोपरक्तस्यौपाधिकं नानात्वं वृत्तिरिति च प्रत्यय इति च ज्ञानमिति चाख्यायतइत्यर्थः । ता॰ टी॰ ।

† हेत्वभावादिति भाष्यं व्याचष्टे इति तात्पर्यटीकायां दर्शनाचेदं सूत्रम् । योऽयं दृष्टान्तः स्फटिकवदिति विकल्पोऽत्र किमयं स्फटिक उपधानभेदेन भिद्यते उत नेति । किं चातः । यदि भिद्यते न दृष्टान्तः । अथ न भिद्यते नानात्वाभिमानः कथम् । यत्तूपधानभेदाद् भिन्नमुपधानमिति कथं प्रतिपद्यसे । यदि प्रत्ययभेदाद् व्याघातः । अभिन्ना वृत्तिः प्रत्ययश्च । व्याघातः प्रत्ययपर्यायत्वाद् वृत्तेः । अथ भवतां वृत्तीनां भेदे किं प्रमाणम् । ज्ञानानां क्रमेणोपजनापायदर्शनम् । ज्ञानान्युपजायन्तेऽपयन्ति चेति दृश्यते । एकानेकविषयत्वाच्च प्रत्ययनानात्वाभिमानस्यैकानेकविषयाधिगतिः । कथमेकस्मिन्नेव विषये नानात्वाभिमानः स्फटिके दृष्टान्तः । नानाभूतेषु गन्धादिषु नानात्वाभिमानो दृष्टः । तेन नानात्वाभिमानस्योभयथा दृष्टत्वादिदमेकमिदमनेकमिति न युक्तः प्रत्यय इति । यश्चायमभिन्ने स्फटिके भेदप्रत्ययः सोऽपि प्रत्ययभेदमन्तरेण न युक्तः । न हि प्रत्ययाभेदवादिनः स्फटिके नीलादिप्रत्ययभेदो युक्त इति । स्फटिके नीलादिप्रत्ययोऽसम्बन्धान्न युक्तः । न हि नीलं द्रव्यं चक्षुः सन्निकृष्टमिति । अथ सन्निकृष्टं तदेव नीलं न स्फटिक इति । स्फटिके समानाधिकरणः स्फटिके नीलप्रत्ययो न युक्तः । न नैरन्तर्यदलनात् । नैरन्तर्येणावस्थिते स्फटिकनीलद्रव्ये चक्षुषा संनिकृष्येते । ततः संनिकर्षान्नीलगुणाध्यारोपेण स्फटिके मिथ्याप्रत्ययो नील इति । यथा सान्तरेष्वन्तरालादलनात्संयुक्तप्रत्यय इति । यस्य च प्रत्ययो न भिद्यते तस्य चत्वारि प्रमाणानीति शास्त्रं बाध्यते । न हि प्रत्ययाभेदे प्रमाणभेदः संभवति । विषयभेदात् त्रित्वमिति चेदथ मन्यसे विषयस्त्रेधा भिन्नस्तेनानुरञ्जितः प्रत्ययस्त्रेधा भवति । तच्च युक्तं प्रमाणाभेदे विषयभेदानधिगतेः । न हि प्रमाणभेदमन्तरेण विषयभेदोऽवगन्तुं शक्यत इति । विषयतादात्म्यादिति चेदथ मन्यसे विषय एवासौ तथाऽवस्थितस्तत्तादात्म्यात्तथा ख्यातिरिति प्रमाणवैयर्थ्यं चैव प्रसङ्गात् । एवं सति व्यर्थं प्रमाणं न विषयभेदे प्रमाणभेदो

नात् । क्रमेण हीन्द्रियार्थेषु ज्ञानान्युपजायन्ते चापयन्ति चेति दृश्यते । तस्माद् गन्धाद्यन्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमान इति । स्फटिकान्यत्वाभिमानवदित्येतदमृष्यमाणः क्षणिकवाद्याह ।

## स्फटिकेप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ १० ॥

स्फटिकस्याभेदेनावस्थितस्योपधानभेदान्नानात्वाभिमान इत्ययमविद्यमानहेतुकः पक्षः । कस्मात् स्फटिके ऽप्यपरापरोत्पत्तेः । स्फटिकेपि अन्या व्यक्तय उत्पद्यन्ते अन्या निरुद्ध्यन्तइति । कथं क्षणिकत्वाद् व्यक्तीनाम् । क्षणश्चाल्पीयान्कालः*क्षणस्थितिकाः क्षणिकाः । कथं पुनर्गम्यते क्षणिका व्यक्तय इति । उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु †पक्तिनिर्वृत्तस्या‡हाररसस्य शरीरे रुधिरादिभावेनोपचयो ऽपचयश्च प्रबन्धेन प्रवर्तते§ उपचयाद्व्यक्तीनामुत्पादः अपचयाद्व्यक्तिनिरोधः । एवं च सत्यवयवपरिणामभेदेन वृद्धिः शरीरस्य कालान्तरे गृह्यते इति सोयं व्यक्तिविशेषधर्मो व्यक्तिमात्रे वेदितव्य इति ।

## नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ ११ ॥

सर्वासु व्यक्तिषु उपचयापचयप्रबन्धः शरीरवदिति नायं नियमः । कस्माद्धेत्वभावात् । नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति । तस्माद्यथादर्शनमभ्यनुज्ञा यत्रयत्रोपचयापचयप्रबन्धो दृश्यते तत्रतत्र व्यक्तीनामपरापरोत्पत्तिरुपचयापचयप्रबन्धदर्शनेनाभ्यनुज्ञायते यथा शरीरादिषु । यत्रयत्र न दृश्यते तत्रतत्र प्रत्याख्यायते यथा ग्रावप्रभृतिषु । स्फटिकेप्युपचया-

---

ऽवगमयति विषयस्तु तादात्म्यात्तथा व्यवतिष्ठतइति । यथा ऽध्यवस्यति तथा चेतयतइति व्याहतः अप्रकारत्वात् । प्रकारवत्येतद् युक्तमप्रकारे न युक्तम् । बुद्धिस्तं प्रत्ययमुपलभतइति च विरोधो ऽधिकरणाधेययोरभेदात् । यः प्रत्ययः स बुद्धिरित्यधिकरणाधेययोरभेद । एवं च बुद्धिस्तं प्रत्ययमुपलभतइति व्याहतम् । न्या वा ।

* अल्पीय काल इति २ ।    † पक्तिवृंतस्येति २ ।

‡ अस्य प्रयोगः । प्रतिक्षणं शरीरमन्यच्चान्यच्च भवति । बाह्यप्रत्ययाभेदे सत्यन्ते विशेषदर्शनात् पच्यमानभूमिपाकजवदिति । न्या वा । पटस्य कुङ्कुमादिद्रव्यसंयोगे सत्यन्ते ऽरुणिमलक्षणो विशेषो दृश्यते न चास्यारुणिमा प्रतिक्षणमावोत्पन्न उक्तं बाह्यप्रत्ययाभेदे सतीति । ता॰ टी ।    § वर्तते इति ५ ।

पचयप्रबन्धो न दृश्यते तस्माद्युक्तं स्फटिकेऽप्यपरापरोत्पत्तिरिति* । यथा चार्कस्य कटुकिम्ना सर्वद्रव्याणां कटुकिमानमापादयेत्तादृगेतदिति । यस्त्वशेषनिरोधेनापूर्वोत्पादं निरन्वयं द्रव्यसन्ताने क्षणिकतां मन्यते तस्यैतत् ।

नोत्पत्तिविनाशकारणोपलब्धेः† ॥ १२ ॥

उत्पत्तिकारणं तावदुपलभ्यते अवयवोपचयो वल्मीकादीनां विनाशकारणं चोपलभ्यते घटादीनामवयवविभागः । यस्य त्वनपचितावयवं निरुध्यते अनुपचितावयवं चोत्पद्यते तस्याशेषनिरोधे निरन्वये वा पूर्वोत्पादे न कारणमुभयथाप्युपलभ्यतइति ।

क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः ॥ १३ ॥

यथानुपलभ्यमानं क्षीरविनाशकारणं दध्युत्पत्तिकारणं चाभ्यनुज्ञायते तथा स्फटिके परापरासु व्यक्तिषु विनाशकारणमुत्पत्तिकारणं‡ चाभ्यनुज्ञेयमिति ।

लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १४ ॥

क्षीरविनाशलिङ्गं क्षीरविनाशकारणं दध्युत्पत्तिलिङ्गं दध्युत्पत्तिकारणं च गृह्यते ऽतो नानुपलब्धिः विपर्ययस्तु स्फटिकादिषु द्रव्येषु

---

* यो ऽयं हेतुर्यत्रोपलभ्यते तत्र क्षणिकत्वं साधयेद् न पुनः सर्वभावानाम् । योऽमिति येनैव हेतुना ऽयमर्थः सिध्येत् [illegible] क्षणिकत्वम् । हेतोरव्याप्यत्वोपपत्तेः क्षणिकत्वं विना नानुपपत्तिः । पूर्वशरीरावयवा हि आहारावयवसहिताः पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यमानाः शरीरान्तरमुत्पादयन्तीति युक्तो भेद इत्यहेतुरेवः । क्षणिकत्वमेव भेदहेतुः कुतो नेति चेत्तत्साधनेन निर्दिष्टेन हेतुनैव भेदसिद्धेः कृतं क्षणिकत्वस्य तद्धेतुत्वकल्पनयेति । विशेषदत्तेन वाक्येनोपपन्नं क्षणिकत्वे न साधनमिति ।

† उपचयापचयवत्स्थितयः सुविषयौ क्षणिकत्वे सर्वभावानां न संलक्ष्येयाताम् । न हि जायमानोऽपर्धन्त इत्युच्यते विनश्यन्वा ऽपचित इति । उपचयापचयोत्पत्तिविनाशकारणोपलब्धेरिति सूत्रार्थः । न्या० वा० । उपचयापचयौ च तावुत्पत्तिविनाशकारणे चेति कर्मधारयः । ता० टी० । यद्यपि अत्र कारणपदेनाधारो ग्राह्यः । आधाराधेयभावप्रतीतिर्न क्षणिकत्वम् । प्रयोगश्च कार्यकारणे एककालवर्तिनो आधाराधेयभावात्कुण्डबदरवदिति । क्षणिकत्वमते आधाराधेयभावो ऽसिद्ध इति चेन्न सिद्धान्तविरोधात् । त्वया ऽपि हि रूपस्य रूपं आधारो ऽभ्युपगत इति । आधाराधेयभावाभावे ऽपि कार्यकारणभावमनुमानमनेनात्मनपेक्षं इति चेत् । गुरुत्ववद्द्रव्यसंयोगस्येवोभयं प्रति कारणत्वात् ।

‡ पा ३ । ५ ।

अपरापरोत्पत्तीनां* न लिङ्गमस्तीत्यनुत्पत्ति+रेवेति‡ । अथ कश्चित्परीहार§माह ।

---

* अपरापरोत्पत्तौ २।४।५।   + त्वनुवृत्तिरिति ४।   § परिहारं म० २।५।

‡ नन्वत्रापि शीतोष्णस्पर्शभेदादवान्तरमनुमिमः कार्यादिति चेन्न । तस्यापतेजोऽवयवानुप्रवेशनिमित्तकत्वेन तस्य स्फटिकगतत्वाभावात् । ननु न शैत्यौष्ण्ययोरपतेजोऽवयवानुप्रवेशनिमित्तकत्वं हेमन्ते ऽनावृतानां काष्ठभूम्यश्मलोहानां शैत्यतारतम्यस्य ग्रीष्मे चौष्ण्यतारतम्यस्यानुपपत्तेः । न हि तेषु क्वचिदधिकावयवानुप्रवेशो क्वचिदल्पावयवानुप्रवेशो कार्यो संभवति तस्माद् बाह्यनिमित्तान्तरानपेक्षो भावानां स्वभावादेव भिन्नभिन्नरूपेण परिणाम इति चेन्न । अन्वयव्यतिरेकाभ्यामपतेजोऽवयवानुप्रवेशे कारणताया दुर्वारत्वात् । स्वभावस्य सर्वदातनत्वेनाहेतुत्वात् । अप्तेजोऽवयवानुप्रवेशे हेतुत्वमुपेत्य स्वभावस्य भेदहेतुत्वे स्वरसेऽप्यौरणात्मकानि भूतानीति स्वसिद्धान्तविरोधः । एकस्यैव द्वित्रिस्वभावकत्वेन व्यावर्तकत्वरूपलक्षणत्वासंभवात् । ननु न विशेषमात्रस्य नानात्वसाधकत्वमपि तु विरुद्धविशेषस्य तेन काञ्चने एकदैवौष्ण्यकाठिन्यद्रवत्वानां दर्शनादविरुद्धत्वेन न भेदसाधकता । शैत्यौष्ण्ययोस्त्वेकदैकत्रादर्शनेन भेदहेतुतेति चेन्न । सामानाधिकरण्याभ्युपगमे लक्षणत्वासंभवस्योक्तत्वात् । न हि काठिन्यादिकमन्यत्रापि विद्यमानं पृथिव्यादीनां लक्षणं भवितुमर्हति । मम तु काठिन्यादेः पृथिव्यादिमात्रवृत्तितया ऽन्यत्रोपलम्भस्य च तत्तदवयवानुप्रवेशेन तत्तदवयवनिष्ठौष्ण्याद्यविषयकतया ऽसाधारण्येन लक्षणत्वस्य नानुपपत्तिः । स्फटिके साध्यं वाम्यत्वं परीक्षणीयं कीदृशं तदिति । यदि भेदमात्रं ततः सिद्धसाधनं स्तम्भादिभेदस्येष्टत्वात् । यदि स्फटिकान्तराद्भेदः स एव दोषः । पूर्वस्फटिकाद्भेद इति चेन्न । प्रतियोग्यप्रसिद्धेः । न हि तस्य क्षणिकस्य प्रतीतिविषयता प्रतीतिकाले ऽभावात् । अथोभयथादिसिद्धं पूर्वप्रतीते स्फटिकान्तरमपेक्ष्य भेदः साध्यते तदा सिद्धसाधनम् । यद्यतीते स्फटिके वर्तमानस्फटिकभेदः हेत्वसिद्धिः अतीतत्वेन सर्वाभेदस्य तत्रासमवायात्वात् । पूर्वक्षणोत्पत्त्यावृत्तित्वविशिष्टयोर्भेदस्य सिद्धत्वेन सिद्धसाधनं च । अथ तस्मिन्नेव भेदः साध्यते तर्हि बाधः । अथैकस्मिन्युगपत्कालिकप्रत्ययविषयत्वं साध्यते तदा दृष्टान्ताभावः । प्रदीपो दृष्टान्त इति चेन्न । तत्र स्वकारणसत्तासंबन्धकालस्य स्वाभिव्यक्तिकालस्यावयवविभागकालस्यावयवसंयोगविनाशकालस्य चानन्तरं द्रव्यविनाशस्य चेत्येकैकस्योक्तकालचतुष्टयवृत्तिप्रत्ययविषयत्वात् । एवं सर्वत्र बोध्यम् । अकारणकविनाशानुपपत्तेः । विनाशहेत्वभावाच्च विनाशः सकारणको ऽपि नु भावः स्वभावत एवोत्पन्नो नश्यतीति चेन्न । तथा सति विनाशे तुच्छत्वस्य वा नित्यत्वस्य प्रसङ्गात् । तथा सति भावानां सर्वदातनत्वमत्यन्तानुपलब्धिर्वा स्यात् । अथाविनाशित्वादकारणको विनाश इति चेन्न । हेत्वसिद्धेः । कार्यस्य पुनरुत्पत्तिप्रसङ्गाद्विनाशो ऽविनाशीति चेन्न । कारणसामग्र्यामसत्यां विनाशनाशमात्रेणैव भावोत्पत्तेरनुपपत्तेः । तस्याभावाभावमात्रत्वाभावात् । अभावस्य सकारणकत्वे ऽपि भावस्याभावेन नाशाभावोपपत्तेश्च । सकारणकत्वे सति भावस्यैव नाशनियमात् । न च विनाशस्य सकारणकत्वे ऽग्निसंयोगस्य पाकजरूपाद्युत्पत्तिं प्रति तन्नाशं प्रति कारणत्वोपगमे जनकस्यैव विनाशकत्वप्रसङ्ग इति वाच्यम् । अग्निसंयोगान्तरस्य तद्विनाशकत्वोपगमात् । ननु जनकसजातीयस्य न विनाशकत्वमिति नियमः । नायं नियमः अङ्कुरजनकस्याप्यप्संयोगस्य तद्विनाशकत्वदर्शनात् । अकारणकविनाशाभ्युपगमे पूर्वोक्तदोषाणां दुष्परिहरत्वात् । किं चेदं भावानां क्षणिकत्वं यदि विनाशित्वं तदा सिद्धसाधनम् । यद्याशुविनाशित्वं तदा विशेषणं व्यर्थं त्वन्मते स्थिरानभ्युपगमात् । अथोत्पन्नविनाशित्वं तदापि सिद्धसाधनम् । अथोत्पत्तिविनाशयोरेककालत्वं तदा ऽनुत्पन्नस्यैव विनाशापत्तिः । अथोत्पन्नस्य विनाश इत्युत्पत्तेः कादाचित्कत्वेन सकारणकत्ववद्विनाशस्यापि सकारणकत्वापत्तेः स्वसिद्धान्तविरोधः । क्षणिक इति मत्वर्थीयश्च कथम् । यदि क्षणो ऽत्र क्षणशब्दार्थः तदा क्षणतद्वतोरेककालिकत्वाभावेन भावस्य तद्वत्तानुपपत्तिः । यदि भावस्यान्तरविशिष्टं भावान्तरं क्षणशब्दार्थस्तदापि स एव दोषः । अथ प्राक्तनभाव एव क्षणस्तदापि स एव दोषः स्ववैशिष्ट्यस्य स्वस्मिन्नभावात् । यदि सर्वान्त्यकालः क्षणशब्दार्थस्तर्हि कालाभ्युपगमात्सिद्धान्तविरोधः । तस्य कल्पनामात्रसिद्धत्वे विशेषणत्वानुपपत्तिः । न चात्र दृष्टान्तः प्रदीपादेस्तत्त्वाभावस्य प्राक् साधितत्वात् । अत्रोक्ता हेतवश्चासिद्धा अन्यथासिद्धा विरुद्धा वा उत्पत्तिधर्मिणां विशे-

## न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १५ ॥

पयसः परिणामो न विनाश इत्येक आह । परिणामश्चावस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति । गुणान्तरप्रादुर्भाव इत्यपर आह । सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यतइति । स खल्वेकपक्षीभाव* इव । अत्र† तु प्रतिषेधः ।

## व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १६ ॥

संमूर्छनलक्षणादवयवव्यूहाद् द्रव्यान्तरे दध्युत्पन्ने गृह्यमाणे पूर्वं पयो द्रव्यमवयवविभागेभ्यो निवृत्तमित्यनुमीयते यथा मृदवयवानां व्यूहान्तराद् द्रव्यान्तरे स्थाल्यामुत्पन्नायां पूर्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्त्ततइति । मृद्वच्चावयवान्वयः पयोदध्नोर्नाशेषनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटत‖इति । अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं दध्युत्पादं च प्रतिषेध उच्यतइति ।

---

घटत्वाऽनुपपत्तेः । तदभ्युपगमे [illegible] विशेषाश्रयकालवर्त्तिनि दधित्वस्याभावाद्धेतोरपि सत्त्वाद् व्यभिचारः । अपि तु विशेषदर्शनस्य हेतुत्वे तु विनाशकाले विशेषानुपलब्धेर्दोषः । अथापि तम वस्त्वेवाऽनन्यथासिद्धस्तथा हस्त्येकस्मिन्विशेषाभ्युपगमेन तस्य स्वैर्थसाधकतया विरुद्धत्वम् । दीपस्य दशाभेदेन दर्शनादर्शनयोस्तत्तत्क्षणभेदेनोत्पादविनाशहेतुकत्ववद् देवदत्तादेरपि देशभेदेन दर्शनादर्शनयोस्तत्र तयोरुत्पादविनाशहेतुकत्वमिति तु न । दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि तत्तत्क्षणसंयोगविभागनिमित्तकत्वेनोत्पादविनाशहेतुकत्वाभावात् । प्रदीपस्य तत्क्षणाऽवस्थस्य सत एव ध्वस्तस्य संस्काराणामाधारत्वेन देशान्तर उत्पत्तुमयोग्यत्वात् । यदप्याकाशे विप्रुतो वायुनाऽपचयाच्चातुल्यकालपातदर्शनात्व विकल्पितलक्षणावस्थायत्व कल्प्यतइति । तदपि न क्व चिद् गुरुत्ववद्वयवसमवेतायाः समुदितानां क्व चिद् गुरुत्ववदवयवैरेव क्व चिद्गुरुत्वमात्रस्य पाते करणस्य वैलक्षण्यादेव पातवैलक्षण्योपपत्तेः । स्वैर्थे प्रमाणं स्वाधाराधेयभाव । न हि कार्यकाले विद्यमानं कारणं तदाधारं संभवति न चानाधारं कार्यमिति । अतएव विप्रतिपत्तिविषया अयुगपत्काला प्रत्यया एकविषया अभ्रान्ततत्प्रत्ययत्वात् सामानाधिकरण्ये सति समानशब्दवाच्यत्वात् । वर्तमानैकत्वानेकपुरुषप्रत्ययवत् । यथा वर्त्तमानैकविषयाणामनेकपुरुषप्रत्ययानामभ्रान्ततत्प्रत्ययविषयाणामेकविषयकत्वमेवमयुगपत्कालानामप्यभ्रान्ततत्प्रत्ययविषयाणामप्येकविषयत्वमिति । प्रत्यात्मं प्रत्यया नानेककर्तृका अप्रतिसंधानप्रसङ्गात् यद्दत्तादिप्रत्ययवदिति । रूपरसगन्धस्पर्शप्रत्यया नानेकनिमित्ता समेति प्रतिसंधानात् कृतसमयानां बहूनां वर्तमानैकक्षणानेकविज्ञानवदिति । अद्यतनाद्यतनविज्ञानान्यकर्तृकतयाऽनेकनिमित्तानि समेति प्रतिसंधानात्पूर्ववदिति ।

* पक्षद्वयेपि द्रव्यमवतिष्ठते एकस्य तिरोभावाभिव्यक्ती अपरस्य विनाशप्रादुर्भावाविद्युपमार्थं ।

† अयन्तु प्रतिषेध इ० ३। ५।

‖ न ह्यनपहृतस्य पूर्वावस्थातो ऽभिव्यत्यनभिव्यक्ती भवतो विनाशप्रादुर्भावौ वेति तस्मादयुक्तमवस्थितस्य परिणाम इति । न्या० वा० ।

**क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥१७॥**

क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकव्यक्तीनामिति नायमेकान्त इति । कस्माद् हेत्वभावाद् नात्र हेतुरस्ति । अकारणौ विनाशोत्पादौ* स्फटिकादिव्यक्तीनां क्षीरदधिवद् न पुनर्यथा† विनाशकारणभावात्‡ कुम्भस्य विनाश उत्पत्तिकारणाभावाच्चा§नुत्पत्तिरेवं स्फटिकादिव्यक्तीनां ||विनाशोत्पत्तिकारणभावाद्विनाशोत्पत्तिभाव इति ।

निरधिष्ठानं¶ च **दृष्टान्तवचनम् । गृह्यमाणयोर्विनाशोत्पादयोः स्फटिकादिषु स्यादयमाश्रयवान् दृष्टान्तः क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्चेति†† तौ तु न गृह्येते तस्मान्निरधिष्ठानोऽयं दृष्टान्त इति ।

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः । कुम्भवन्न निष्कारणौ विनाशोत्पादौ स्फटिकादीनामित्यभ्यनुज्ञेयोऽयं दृष्टान्तः प्रतिषेद्धुमशक्यत्वात् । क्षीरदधिवत्तु निष्कारणौ विनाशोत्पादाविति शक्योऽयं प्रतिषेद्धुं कारणतो विनाशोत्पत्तिदर्शनात् । क्षीरदध्नोर्विनाशोत्पत्ती पश्यता तत्कारणमनुमेयं कार्यलिङ्गं हि कारणमित्युपपन्नमनित्या‡‡ बुद्धिरिति ।

इदं तु चिन्त्यते कस्येयं बुद्धिरात्मेन्द्रियमनोऽर्थानां गुण§§ इति । प्रसिद्धो|||| पि खल्वयमर्थः परीक्षाशेषं प्रवर्तयामीति प्रक्रियते । सोऽयं बुद्धौ सन्निकर्षोत्पत्तेः संशयः विशेषस्याग्रहणादिति ¶¶ तत्रायं विशेषः ।

---

* विनाशोत्पादौ स्फटिकादिव्यक्तीनामिति कस्माद् हेत्वभावाद् नात्र हेतुरस्ति ह्यकारणौ विनाशोत्पादौ च स्फटिकादिरिति २ । † यथेति नास्ति १ । ४ ।

‡ कारणाभावादिति ४ । § चानुत्पत्तिरिति १ चोत्पत्तिरिति २ । ४ । ५ ।

|| विनाशकारणोत्पत्तिभावादिति २ ।

¶ को ऽधिष्ठानार्थः । आश्रयार्थः किमुक्तं भवति निरधिष्ठानमिति धर्मो नास्तीति यावदुक्तं भवति । न हि स्फटिकस्योत्पादविनाशौ प्रतिक्षणमुपलभ्येते यत इयं चिन्ता भवेत् किमेतौ सकारणकावाहो स्विदकारणकाविति । यथा ऽनभ्युपगतशब्दतत्त्वं प्रति कश्चिद् ब्रूयात्कृतकत्वादनित्यः शब्द इति तादृगेतदिति । धर्म्यसिद्धेश्च दृष्टान्ताभाव इति च समानम् । न्या॰ वा॰ ** चेति नास्ति ।

†† दध्युपलब्धिवच्चेति १ दध्युत्पत्तिकारणानुपलब्धिवच्चेति ५ ।

‡‡ इतश्चानित्या बुद्धिः गुणत्वे सति प्रत्यक्षाया व्यापकद्रव्यसमवायात् शब्दवत् । जातिमत्त्वे सत्यस्मदादिप्रत्यक्षत्वादाश्रितत्वाद् शब्दवत् । न्या॰ वा॰ ।

§§ न गुणभावासिद्धेः अनित्यत्वे सत्यचाक्षुषप्रत्यक्षत्वाद् गुणभावः । सन्निकर्षोत्पत्तेः संशय इति । न्या॰ वा॰ । |||| प्रसिद्धोऽपि चेति १ । ५ ।

## नेन्द्रियार्थयोस्तद्विनाशेपि ज्ञानाऽवस्थानात् ॥ १८ ॥

नेन्द्रियाणामर्थानां वा गुणो ज्ञानं तेषां विनाशे ज्ञानस्य भावात् । भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानमद्राक्षमिति । न च ज्ञातरि विनष्टे ज्ञानं भवितुमर्हति । अन्यत् खलु वै तदिन्द्रियार्थसन्निकर्षजं ज्ञानं यदिन्द्रियार्थविनाशे न भवति । इदमन्यदात्ममनःसन्निकर्षजं* तस्य युक्तो भाव इति । स्मृतिः खल्वियमद्राक्षमिति पूर्वदृष्टविषया न च विज्ञातरि नष्टे पूर्वोपलब्धेः स्मरणं युक्तं न चान्यदृष्टमन्यः स्मरति । न च मनसि ज्ञातर्यभ्युपगम्यमाने शक्यमिन्द्रियार्थयोर्ज्ञातृत्वं प्रतिपादयितुम् । अस्तु तर्हि मनोगुणो ज्ञानम् ।

## युगपज् ज्ञेयानुपलब्धेश्च न मनसः ॥ १९ ॥

युगपज् ज्ञेयानुपलब्धिरन्तःकरणस्य लिङ्गं तत्र युगपज् ज्ञेयानुपलब्ध्या †यदनुमीयते अन्तःकरणं न तस्य गुणो ‡ज्ञानम् । कस्य तर्हि ज्ञस्य वशित्वात् । वशी ज्ञाता वश्यं करणं§ ज्ञानगुणत्वे वा करणभावनिवृत्तिः । घ्राणादिसाधनस्य च ज्ञातुर्गन्धादिज्ञानभावादनुमीयते अन्तःकरणसाधनस्य सुखादिज्ञानं स्मृतिश्चेति तत्र यद्‖ ज्ञानगुणं मनः¶ स आत्मा यत्तु सुखाद्युपलब्धिसाधनमन्तःकरणं मनस्तदिति संज्ञाभेदमात्रं नार्थभेद इति । युगपज् ज्ञेयानुपलब्धेश्च योगिन इति वा चार्थः । योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय

---

* आत्ममन सन्निकर्षं आत्ममनसोः सन्निकर्षजमिति २ । † यदिति नास्ति १ । ४ ।

‡ तत् खलु युगपज् ज्ञेयानुपलब्ध्या समधिगतं मनो नातस्तद्गुणो ज्ञानम् । विशेषणोपादानादन्तःकरणबहुत्वप्रसङ्ग इति चेन्न सर्वेन्द्रियस्य निमित्तत्वान्मनननिमित्तत्वात् । सर्वमिन्द्रियं मनननिमित्तत्वान्मन इत्युच्यते । एवं च सति विशेषणं युक्तं युगपज्ज्ञेयानुपलब्ध्या समधिगतं मनो न तस्य गुणो ज्ञानमिति । एवमपि व्यर्थं विशेषणमन्यस्यानभ्युपगमात् । यदि तस्यान्तःकरणस्य न भवत्यन्यस्य तर्हि साधनस्य ज्ञानं गुण इति प्राप्तम् । अन्यस्यानभ्युपगमात् । अन्यस्योपपत्तेरप्रतिषेधः । अनवस्थितत्वात्प्रमाणप्रमेयभावस्य यदाऽयं योगी पुरुषान्तरेण पुरुषान्तरं परिच्छिनत्ति तदा पुरुषान्तरपरिच्छेदे पुरुषान्तरं साधनमिति तस्य ज्ञानं गुणो भवतीति युक्तं विशेषणमिति । तस्मान्न तस्य गुणो ज्ञानमिति । न्या॰ वा॰ ।

§ न चैवं ज्ञातरि नियमो ज्ञाता वश्येव वश्यपि भवतीति । अचेतने तु नियमः अचेतनं सर्वं वश्यमिति । वश्यं मनो ऽचेतनत्वाद् घ्राणवदिति । न्या॰ वा ।

‖ यत्तु २ । ¶ मन इति नास्ति ४ ।

सेन्द्रियाणि शरीरान्तराणि तेषु तेषु युगपज् ज्ञेयान्युपलभते तच्चैतद्विभो र्ज्ञातर्युपपद्यते नाणौ मनसीति । विभुत्वे वा मनसो ज्ञानस्य नात्मगुणत्व-प्रतिषेधः । विभु* च मनस्तदन्तःकरणभूतमिति तस्य सर्वेन्द्रियैर्युगपत् संयोगाद्युगपज् ज्ञानान्युत्पद्येरन्निति ।

## तदात्मगुणत्वेऽपि तुल्यम् ॥ २० ॥

विभुरात्मा सर्वेन्द्रियैः संयुक्त इति युगपज् ज्ञानोत्पत्तिप्रसङ्ग इति ।

## इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः† ॥ २१ ॥

गन्धाद्युपलब्ध्योरिन्द्रियार्थसन्निकर्षवदिन्द्रियमनःसन्निकर्षोऽपि कारणं तस्य चायौगपद्यमणुत्वान्मनसः । अयौगपद्यादनुत्पत्तिर्युगपज्‡ ज्ञानाना-मात्मगुणत्वेऽपीति । यदि पुनरात्मेन्द्रियार्थसन्निकर्षमात्राद्§ गन्धादिज्ञानमु-त्पद्यते ।

## नोत्पत्तिकारणानपदेशात् ॥ २२ ॥

आत्मेन्द्रियसन्निकर्षमात्राद् गन्धादिज्ञानमुत्पद्यते इति नात्रोत्पत्ति-कारणमपदिश्यते येनैतत्प्रतिपद्येमहीति‖ ।

## विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २३ ॥

तदात्मगुणत्वेऽपि तुल्यमित्येतदनेन समुच्चीयते । द्विविधो हि गुणना-शहेतुः गुणानामाश्रयाभावो विरोधी च गुणः । नित्यत्वादात्मनोऽनुपपन्नः पूर्वः विरोधी च बुद्धेर्गुणो न गृह्यते तस्मादात्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्गः ।

---

* विभु मनस्तदन्तःकरणभूतमिति ४ । ५ विभुत्वमन्तःकरणभूतमिति ९ ।
† तदनुपपत्तिरिति ४ । ‡ युगपदिति नास्ति ३ । ५ ।
§ मात्र कारणमिति ३ । ५ गन्धादिज्ञानमिति च नास्ति ।
‖ अस्मादेवोत्पद्यतामिति न कारणमपदिश्यतइति सूत्रार्थः । आत्मेन्द्रि-यार्थसन्निकर्षाज्ज्ञानमुत्पद्यतइत्ययुगपदुत्पत्तौ वा न कारणान्तरमपदिश्यतइति । विदेहप्रत्ययानुत्पत्तौ वा यदेन्द्रियमर्थेन बहिरवस्थितेन संबध्यते आत्मसम्बन्धो ऽपि तत्रास्तीति कस्माद्विदेहप्रत्याख्याने च केवलमात्मा स्मृत्यादिकारणमिति कस्मान्न युगपदुत्पत्तिः स्मृतीनाम् । यदा चेन्द्रियमात्मा ऽर्थेन युगपत्सम्बद्धौ तदा किमिन्द्रियार्थसन्निकर्षः कारणमुतात्मार्थसन्निकर्ष उतात्मेन्द्रियसन्निकर्ष इति कार-णानपदेश इति न्या॰ वा॰ ।

## अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २४ ॥

अनित्या बुद्धिरिति सर्वशरीरिणां प्रत्यात्मवेदनीयमेतत् । गृह्यते च बुद्धिसन्तानस्तत्र बुद्धेर्बुद्ध्यन्तरं विरोधी गुण इत्यनुमीयते यथा* शब्दसन्ताने शब्दः शब्दान्तरविरोधीति† । असंख्येयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिहेतुष्वात्मसमवेतेष्वात्ममनसोश्च सन्निकर्षे समाने स्मृतिहेतौ सति न कारणस्यायौगपद्यमस्तीति युगपत्स्मृतयः प्रादुर्भवेयुः यदि बुद्धिरात्मगुणः स्यादिति । तत्र कश्चित्सन्निकर्षस्यायौगपद्यमुपपादयिष्यन्नाह ।

## ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २५ ॥

ज्ञानसाधनः संस्कारो ज्ञानमित्युच्यते ज्ञानसंस्कृतैरात्मप्रदेशैः पर्यायेण मनः संनिकृष्यते । आत्ममनःसन्निकर्षात्स्मृतयोऽपि पर्यायेण भवन्तीति ।

## नान्तःशरीरवृत्तित्वान्मनसः ॥ २६ ॥

सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते तत्रास्य प्राक् प्रायणादन्तःशरीरे वर्तमानस्य मनसः ‡ शरीराद्बहिर्ज्ञानसंस्कृतैरात्मप्रदेशैः संयोगो नोपपद्यत इति ।

## साध्यत्वादहेतुः ॥ २७ ॥

विपच्यमानकर्माशयमात्रं जीवनमेवं च सति साध्यमन्तःशरीरवृत्तित्वं मनसः§ इति ।

---

* तथा २ ।

† बुद्धेरनित्यत्वे साधिते बुद्ध्यन्तरात्संस्काराद्वा विनाश इति बोध्यम । तस्या युगपदुत्पत्तिप्रतिषेधे ऽपि युगपत्स्थितेरप्रतिषेधाद् द्वितीयक्षणोत्पन्नया बुद्ध्या प्रथमक्षणोत्पन्नाया बुद्धेर्नाशः शब्दवत् । अन्त्ययोस्तु बुद्धिशब्दयोः स्थितेर्हेत्वभावात्संस्काराद्वा कालाद्वा विनाशः । कारणायौगपद्यनिमित्तकश्चेज्ज्ञानायौगपद्यविग्रहः स्मृतीनां युगपदुत्पत्तिः प्राप्नोति कारणयौगपद्यात् । अत्र कारणस्य युगपदनेकक्रियानिर्वृत्तौ सामर्थ्यविरहादिति परिहारो मुख्यः । स्मृतिर्न युगपदुत्पद्यतेऽर्थपरिच्छेदत्वादनुभववदिति वा ।

‡ मनसः शरीरासमवेतत्वे ऽपि संयोगमात्रस्यातिप्रसक्तत्वे ऽपि चेन्द्रियार्थसन्निकर्षस्य मनःकार्यस्य शरीराद् बहिः सत्त्वेन शरीरान्तरेव कार्यकारित्वनियमाभावे ऽपि च येनात्मना यच्छरीरं कर्मोपार्जितं तत्संयुक्तस्य मनसो वैषयिकज्ञानादिलक्षणकार्यकारित्वं न तदसंयुक्तस्येति शरीराद्बहिःस्थस्य मनसो नान्यदित्यर्थः ।

§ अशरीरं मनः पुरुषार्थासमर्थमिति साध्यमेतत् । न्या० वा०

## स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २८ ॥

सुस्मूर्षया खल्वयं मनः प्रणिदधानः चिरादपि कं चिदर्थं स्मरति स्मरतश्च शरीरधारणं दृश्यते आत्ममनःसन्निकर्षजश्च प्रयत्नो द्विविधो धारकः प्रेरकश्च निःसृते च शरीराद्बहिर्मनसि धारकस्य प्रयत्नस्याभावाद् गुरुत्वात्पतनं स्यात् शरीरस्य *स्मरतः† इति ।

## न तदाशुगतित्वान्मनसः ॥ २९ ॥

आशुगति मनस्तस्य बहिः शरीरादात्मप्रदेशेन ज्ञानसंस्कृतेन सन्निकर्षः प्रत्यागतस्य च प्रयत्नोत्पादनमुभयं‡ युज्यतइति उत्पाद्य वा धारकं प्रयत्नं शरीरान्निःसरणं मनसो ऽतस्तत्रोपपन्नं धारण§मिति ।

## न स्मरणकालानियमात् ॥ ३० ॥

किं चित्क्षिप्रं स्मर्यते किं चिच्चिरेण यदा चिरेण तदा सुस्मूर्षया मनसि धार्यमाणे चिन्ताप्रबन्धे सति कस्य चिदर्थस्य लिङ्गभूतस्य चिन्तनमाराधितं‖ स्मृतिहेतुर्भवति । तच्चैतच्चिरनिश्चरिते मनसि नोपपद्यतइति । शरीरसंयोगानपेक्षश्चात्ममनःसंयोगो न स्मृतिहेतुः शरीरस्य ¶भोगायतनत्वाद् उपभोगायतनं पुरुषस्य ज्ञातुः शरीरं न ततो निश्चरितस्य मनस आत्मसंयोगमात्रं ज्ञानसुखादीनामुत्पत्तौ कल्पते क्लृप्तौ वा शरीरवैयर्थ्य**मिति ।

## आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥ ३१ ॥

आत्मप्रेरणेन वा मनसो बहिः शरीरात् संयोगविशेषः स्याद् यदृच्छया वा ऽऽकस्मिकतया ज्ञतया वा मनसः सर्वथा चानुपपत्तिः । कथं स्मर्तव्यत्वा-

---

* शरीरस्यात्मवत इति ५ ।

† स्मरणशरीरधारणे युगपद्भवत इति दृष्टम् । दृष्टं च सर्वथा प्रतिपत्तव्यम् । चिरनिश्चरिते च मनसि स्मरतः शरीरधारणं न स्यात् । न्या॰ वा॰ ।

‡ उभयतः युज्यतइति ७ ।

§ उभयं सिध्यति स्मरणं धारणं च । न्या॰ वा॰ ।   ‖ आरब्धितमिति ३ । ४ । ५ ।

¶ उपभोगायतनत्वादिति ३ । ५ ।

** अनियतः स्मृतिकालो ऽतो ऽयुक्तमेतत् । शरीरसंयोगानपेक्षं चात्ममनःसंयोगं स्मृतिकारणं ब्रुवतः शरीरस्य भोगायतनत्वं निवर्तते ततस्तन्निवृत्तौ शरीरोत्पत्तिवैयर्थ्यमिति । न्या॰ वा॰ ।

दिच्छात: स्मरणज्ञानासम्भवाच्च । यदि तावदात्मा अमुष्यार्थस्य स्मृतिहेतु: संस्कार: अमुष्मिन्नात्मप्रदेशे समवेतस्तेन मन: संयुज्यतामिति मन: प्रेरयति तदा स्मृत एवासावर्थो भवति न स्मर्तव्य: । न चात्मप्रत्यक्ष आत्मप्रदेश: संस्कारो वा तत्रानुपपन्नात्मप्रत्यक्षेण संवित्तिरिति । सुस्मूर्षया चायं मन: प्रणिदधानश्चिरादपि कं चिदर्थं स्मरति नाकस्मात् । ज्ञत्वं च मनसो नास्ति ज्ञानप्रतिषेधादिति एतच्च ।

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३२ ॥**

यदा खल्वयं व्यासक्तमना: क्व चित्* देशे शर्करया कण्टकेन वा पादव्यथनमाप्नोति तदात्ममन:संयोगविशेष एषितव्य: । दृष्टं हि दु:खं दु:खवेदनं चेति तत्रायं समान: प्रतिषेध: । यदृच्छया तु विशेषो नाकस्मिकी क्रिया नाकस्मिक: संयोग इति ।

**कर्मादृष्टमुपभोगार्थं क्रियाहेतुरिति चेत्समानम् ।**

कर्मादृष्टं पुरुषस्य पुरुषोपभोगार्थं मनसि क्रियाहेतुरेवं दु:खं दु:खसंवेदनं च सिध्यति चेत्येवं चेन्मन्यसे समानं स्मृतिहेतावपि सं† योगविशेषो भवितुमर्हति । तत्र यदुक्तमात्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेष इत्ययमप्रतिषेध इति । पूर्वस्तु प्रतिषेधो नान्त:शरीरवृत्तित्वान्मनस इति । क: खल्विदानीं कारणयौगपद्यसद्भावे युगपदस्मरणस्य हेतुरिति ।

**प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत्स्मरणम् ॥ ३३ ॥**

यथा खल्वात्ममनसो: सन्निकर्ष: संस्कारश्च स्मृतिहेतुरेवं प्रणिधानं लिङ्गादिज्ञानानि तानि च न युगपद्भवन्ति तत्कृता स्मृतीनां युगपदनुत्पत्तिरिति ।

**‡प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्ग: ॥ ३४ ॥**

यत्खल्विदं प्रातिभमिव ज्ञानं प्रणिधानाद्यनपेक्षं स्मार्तमुत्पद्यते कदा चित्तस्य युगपदुत्पत्तिप्रसङ्गो हेत्वभावात् अत: स्मृतिहेतोरसंवेदनात् प्रातिभेन समानाभिमान: । बह्वर्थविषये वै चिन्ताप्रबन्धे कश्चिदेवार्थ: कस्य चित्स्मृतिहेतु: तस्यानुचिन्तनात् तस्य स्मृतिर्भवति न चायं स्मर्ता सर्वं स्मृतिहेतुं संवेदयते अयं मे स्मृतिहेतुरुत्पन्न इत्यसंवेदनात्प्रातिभमिव ज्ञानमिदं स्मार्तमित्यभिमन्यते न त्वस्ति प्रणिधानाद्यपेक्षं स्मार्तमिति ।

---

* देशे २। ३। ५। † संमिति नास्ति २। ३। ‡ इदं सू° न दृश्यतास्मत्समीपे ।

**प्रातिभे कथमिति चेत् पुरुषकर्मविशेषा)दुपभोगवन्नियमः* ॥**

प्रातिभमिदानीं ज्ञानं युगपत् कस्मान्नोत्पद्यते यथोपभोगार्थं कर्म युगपदुपभोगं न करोति एवं पुरुषकर्मविशेषः प्रातिभहेतुर्न युगपदनेकं प्रातिभं ज्ञानमुत्पादयति ।

**हेत्वभावादयुक्तमिति चेद् न करणस्य प्रत्ययपर्याये सामर्थ्यात् ॥**

उपभोगवन्नियम इत्यस्ति दृष्टान्तो हेतुर्नास्तीति चेन्मन्यसे न करणप्रत्ययपर्याये सामर्थ्यात् नैकस्मिन् ज्ञेये युगपदनेकं ज्ञानमुत्पद्यते । न चानेकस्मिंस्तदिदं दृष्टेन प्रत्ययपर्यायेणानुमेयं करणसामर्थ्यमित्थंभूतमिति न ज्ञातुर्विकरणधर्मणो देहनानात्वे प्रत्ययौगपद्यादिति । अयं च द्वितीयः प्रतिषेधः व्यवस्थितशरीरस्य चानेकज्ञानसमवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात् क्व चिदे†शावस्थितशरीरस्य ज्ञातुरिन्द्रियार्थप्रबन्धेन न ज्ञानमनेकमेकस्मिन्नात्मप्रदेशे समवैति । तेन यदा मनः संयुज्यते तदा ज्ञातपूर्वस्यानेकस्य युगपत् स्मरणं प्रसज्यते‡ । प्रदेशसंयोगपर्यायाभावादिति । आत्मप्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याविशेषे स्मृतियौगपद्यप्रतिषेधानुपपत्तिः । शब्दसन्ताने तु श्रोत्राधिष्ठानप्रत्यासत्त्या शब्दश्रवणवत्संस्कारप्रत्यासत्त्या§ मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिप्रसङ्गः । पूर्व एव तु प्रतिषेधो नानेकज्ञानसमवायादेकप्रदेशे युगपत् स्मृतिप्रसङ्ग इति । पुरुषधर्मो ज्ञानमन्तःकरणस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा इति कस्य चिद्दर्शनं तत्प्रतिषिध्यते ।

**ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३५ ॥**

अयं खलु जानीते तावदिदं सुखसाधनमिदं मे दुःखसाधनमिति ज्ञात्वा|| स्वस्य सुखसाधनमाप्तुमिच्छति दुःखसाधनं हातुमिच्छति ¶प्राप्तुमिच्छा-

---

* ( ) एतन्मध्यग पाठः २ पु॰ नास्ति ।    † क्व चिद्देशे इति २।५।
‡ प्रसज्यतेति २।५।

§ का प्रत्यासत्तिः न हि संस्काराणां संनिकृष्टविप्रकृष्टभावो ऽस्ति समानदेशत्वात् । न ब्रूमः संनिकृष्टता प्रत्यासत्तिः । अपि तु संस्कारस्य सहकारिकारणसमवधानं प्रत्यासत्तिः । यथा शब्दाः सन्तानवर्त्तिनः सर्वे चैवाकाशे समवयन्ति समानदेशत्वे ऽपि यस्योपलब्धेः कारणानि सन्ति स उपलभ्यते नेतरे तथा संस्कारेष्वपीति । न्या॰ वा॰ ।    || ज्ञात्वा सुखसाधनमिति ४।५।    ¶ प्राप्तीच्छेति ५।

युक्तस्यास्य* सुखसाधनावाप्तये समीहाविशेष आरम्भो जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं निवृत्तिरेवं ज्ञानेच्छाप्रयत्नद्वेषसुखदुःखानामेकेनाभिसंबन्धः । एककर्तृत्वं ज्ञानेच्छाप्रवृत्तीनां समानाश्रयत्वं च तस्माज् ज्ञस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मो नाचेतनस्येति† आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानं वेदितव्यमिति । अत्र भूतचैतनिक आह ।

## तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः‡ ॥ ३६ ॥

आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति यस्यारम्भनिवृत्ती तस्येच्छाद्वेषौ तस्य ज्ञानमिति प्राप्तं पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति चैतन्यम् ।

## परश्वादिष्वारम्भनिवृत्तिदर्शनात्§ ॥ ३७ ॥

शरीरचैतन्यनिवृत्तिः आरम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति प्राप्तं परश्वादेः करणस्यारम्भनिवृत्तिदर्शनाच्चैतन्यमिति । अथ शरीरस्येच्छादिभिर्योगः परश्वादेस्तु करणस्यारम्भनिवृत्ती व्यभिचरतः न तर्ह्ययं हेतुः पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति । अयं तर्ह्यन्योऽर्थस्तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः पृथिव्यादीनां भूतानामारम्भस्तावत्‖ स स्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषः लोष्टादिषु लिङ्गाभावात् प्रवृत्तिविशेषाभावो निवृत्तिः आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति । पार्थिवाद्येष्वणुषु तद्दर्शनादिच्छाद्वेषयोस्तद्योगाज् ज्ञानयोग इति सिद्धं भूतचैतन्यमिति ।

---

* इच्छतीति १ नास्ति ।

† एतदुक्तं भवति । ज्ञानसामानाधिकरण्येनोपलब्धेरस्मदीयानामिच्छादीनामन्यस्याप्रत्यक्षीकरणात्तत्करणे वा मैत्रगताना चैत्रेण प्रत्यक्षप्रसङ्गादन्तःकरणवृत्तीनां च गुणान्तराणां नित्यप्रत्यक्षत्वादात्माश्रिता एवेच्छादयो नान्तःकरणाश्रया इति । ता॰ टी॰ ।

‡ प्रवृत्तिनिवृत्तिभ्यां सामानाधिकरण्याच्छरीरादिष्वप्रसङ्गः इति सूत्रार्थः । न्या॰ वा॰ ।

§ अनेकान्तो वाक्यार्थः । न्या॰ वा ।

‖ अथास्तु स्थावरशरीरेषु २ । अथस्था॰ ४ । आरम्भस्तु स स्थावर अ॰ १ ।

## कुम्भादिष्वनुपलब्धेरहेतुः ॥ ३८ ॥

कुम्भादिमृदवयवानां व्यूहलिङ्गः प्रवृत्तिविशेष आरम्भः सिकतादिषु प्रवृत्तिविशेषाभावो निवृत्तिः । न च मृत्सिकतानामारम्भनिवृत्तिदर्शनादिच्छाद्वेषप्रयत्नज्ञानैर्योगः तस्मात्तल्लिङ्गत्वादिच्छाद्वेषयोरित्यहेतुरिति ।

## नियमानियमौ तु तद्विशेषकौ ॥ ३९ ॥

तयोरिच्छाद्वेषयोर्नियमानियमौ* विशेषकौ भेदकौ ज्ञस्येच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती न स्वाश्रये किं तर्हि प्रयोज्याश्रये । तत्र प्रयुज्यमानेषु भूतेषु प्रवृत्तिनिवृत्ती स्तः न सर्वेष्वित्यनियमोपपत्तिः । यस्य तु †ज्ञत्वाद्भूतानामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये तस्य नियमः स्यात् । यथा भूतानां गुणान्तरनिमित्ता प्रवृत्तिर्गुणप्रतिबन्धाच्च निवृत्तिर्भूतमात्रे भवति नियमेनैवं भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्यातां न तु भवतः तस्मात् प्रयोजकाश्रिता ज्ञानेच्छाद्वेषप्रयत्नाः प्रयोज्याश्रये तु प्रवृत्तिनिवृत्ती इति सिद्धम् । एकशरीरे ज्ञातृबहुत्वं निरनुमानं भूतचैतनिकस्यैकशरीरे बहूनि भूतानि ज्ञानेच्छाद्वेषप्रयत्नगुणानीति ज्ञातृबहुत्वं प्राप्तम् । ओमिति ब्रुवतः प्रमाणं नास्ति यथा नानाशरीरेषु नानाज्ञातारो बुद्ध्यादिगुणव्यवस्थानात् । एवमेकशरीरेऽपि बुद्ध्यादिव्यवस्थानुमानं स्यात् ज्ञातृबहुत्वस्येति‡ ।

---

* प्रयुज्यमानभूतविषयत्वं प्रवृत्तिनिवृत्त्योर्नियमः । यानि भूतानि प्रयुज्यन्ते तेष्वेव प्रवृत्तिनिवृत्ती भवतो न सर्वेषु । यदि पुनर्ज्ञत्वाद् भूतानां प्रवृत्तिनिवृत्ती स्यातां भूतमात्रे स्याताम् । यथा गुरुत्वादिभ्यः । यानि गुरुत्वादिमन्ति भूतानि तानि स्वगुणात्पतन्तीति नियमश्च दृष्टः । तस्माच्च भूतानि चेतनानीति । न्या. वा. ।

† ज्ञत्वाद्भूतानामिति २।५। ज्ञानाद्भूतानामिति ४।

‡ यथा हि मदिरावयवेष्वपि प्रत्येकमेव मदशक्तिरस्ति न पुनः समुदायमात्रसमवायिनी एवं शरीरावयवेष्वपीति प्रत्येकमेव चैतन्येन भवितव्यम् । न च चैतन्यात्कायसमुदायाश्रयमेव चैतन्यं नावयवाश्रयमिति वक्तव्यमस्यात्तु त्रिचतुरावयवच्छेदे ऽपि चैतन्योपलम्भात् । तस्मादवयवानां प्रत्येकं चैतन्ये शरीरेऽस्मिन् बहवश्चेतनाः स्युः । भवतु किं नो बाध्यत इति चेत्र विरुद्धाभिप्रायत्वे स्वतन्त्राणां न किं चिदपि कार्यं जायेत । न च बहूनामेकाभिप्रायनियमो दृष्टः काकतालीयन्यायेन स्यादेकाभिप्रायत्वं न पुनरयं नियमो दृष्टश्च इति यमित्युक्त्यादेतद्दूषणमुपेत्य वार्तिककृता प्रत्ययव्यवस्थाऽनुमानं न भवेदिति दूषणमुक्तम् । एक-

**दृष्टश्चान्यान्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानां सोऽनुमानमन्यत्रापि ॥**

*दृष्टः करणलक्षणेषु भूतेषु परश्वादिषु उपादानलक्षणेषु† च मृत्प्रभृतिष्वन्यगुणनिमित्तः प्रवृत्तिविशेषः सोऽनुमानमन्यत्रापि स स्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषो‡ भूतानामन्यगुणनिमित्त इति । स च गुणः प्रयत्नसमानाश्रयः संस्कारो धर्माधर्मसमाख्यातः सर्वार्थः पुरुषार्थाराधनाय प्रयोजको भूतानां प्रयत्नवदिति । आत्मास्तित्वहेतुभिरात्मनित्यत्वहेतुभिश्च भूतचैतन्यप्रतिषेधः कृतो वेदितव्यः । नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानादिति च समानः प्रतिषेध इति । क्रियामात्रं क्रियोपरममात्रं चारम्भनिवृत्ती इत्यभिप्रेत्योक्तं तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः§ । अन्यथा त्विमे आरम्भनिवृत्ती आख्याते न च तथाविधे पृथिव्यादिषु दृश्येते तस्मादयुक्तं तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेध इति भूतेन्द्रियमनसां समानः प्रतिषेधो मनस्तूदाहरणमात्रम् ।

**यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ४० ॥**

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमित्यतःप्रभृति यथोक्तं संगृह्यते तेन भूतेन्द्रियमनसां चैतन्यप्रतिषेधः पारतन्त्र्यात् । परतन्त्राणि भूतेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात्प्रवर्तन्ते चैतन्ये पुनः स्वतन्त्राणि स्युरिति । ||अकृताभ्यागमाच्च प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति चैतन्ये भूतेन्द्रियमनसां परकृतं कर्म पुरुषेणोपभुज्यत इति स्याद् अचैतन्ये

---

स्मिन् शरीरे प्रत्ययानां परस्परप्रतिसंधानं पश्यामो न शरीरान्तर इति व्यवस्था सेयं यद्येकस्मिन् शरीर एक एव चेतनो न च शरीरान्तरे सतो भवेदान्यथेत्यर्थः । ता॰ टी॰ ।

* दृष्टश्चान्यगुणनिमित्त इति २।४।५। † भूतमात्रेषु इति २। ५ पुस्तके तो नास्ति।

‡ प्रतिषेध इति २।

§ हिताहितप्राप्तिपरिहारहेतुः परिस्पन्दः प्रवृत्तिविशेषः । सोऽयं प्रयोगः त्रसस्थावरशरीरेषु प्रवृत्तिः स्वाश्रयव्यतिरिक्ताश्रयगुणनिमित्ता प्रवृत्तिविशेषत्वात् परश्वादिगतप्रवृत्तिवत् । ता॰ टी॰ ।

|| शरीरस्य चैतन्ये कर्तुर्भस्मीभावेन फलानुपभोगो अकर्तुः शरीरान्तरस्याकृतकर्माभ्यागम इत्यर्थः ।

तत्साधनस्य स्वकृतकर्म्मफलोपभोगः पुरुषस्येत्युपपद्यतइति । अथायं सिद्धोपसंग्रहः* ॥

## परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४१ ॥

आत्मगुणो ज्ञानमिति प्रकृतम् । परिशेषो नाम प्रसक्तप्रतिषेधे अन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः । भूतेन्द्रियमनसां प्रतिषेधे द्रव्यान्तरं न प्रसज्यते शिष्यते चात्मा तस्य गुणो ज्ञानमिति ज्ञायते । यथोक्तहेतूपपत्तेश्चेति दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादीनामात्मप्रतिपत्तिहेतूनामप्रतिषेधा†-दिति । परिशेषज्ञापनार्थं प्रकृतस्थापनादिज्ञानार्थं च यथोक्तहेतूपपत्तिवचन-मिति । अथ वोपपत्तेश्चेति हेत्वन्तरमेवेदं नित्यः खल्वयमात्मा यस्मादेकस्मिन् शरीरे धर्मं चरित्वा कायभेदात्‡ स्वर्गे देवेषूपपद्यते अधर्मं चरित्वा देहभेदाद् नरकेषूपपद्यते इति§ । उपपत्तिः शरीरान्तरप्राप्तिलक्षणा सा सति सत्त्वे नित्ये चाश्रयवती । बुद्धिप्रबन्धमात्रे तु निरात्मके निराश्रया नोपपद्यतइति । एकसत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते शरीरप्रबन्धोच्छेदश्चापवर्गो मुक्तिरित्युपपद्यते । बुद्धिसंततिमात्रे त्वेकसत्त्वानुपपत्तेर्न कश्चिद्दीर्घमध्वानं संधावति न कश्चिच्छरीरप्रबन्धाद्विमुच्यतइति संसारापवर्गानुपपत्तिरिति । बुद्धिसंततिमात्रे च सत्त्वभेदात्सर्वमिदं प्राणिव्यवहारजातमप्रतिसंहितम्‖अव्यावृत्तमपरिनिष्ठितं च स्यात् । ततः स्मरणाभावान्नान्यदृष्टमन्यः स्मरतीति । स्मरणं च खलु पूर्वज्ञातस्य समानेन ज्ञात्रा ग्रहणमज्ञासि-

---

* उपसंहार इत्यर्थः । ता॰ टी॰ ।

† उपपत्तिपदार्थव्याख्यानमप्रतिषेधादिति । ता॰ टी॰ ।

‡ भेदाच्छरीरपातादिति । ता॰ टी॰ ।                                   § न्यायसूत्र॰ ५ । २

‖ पूर्वपुरुषैः कृतानामपरैः परिसमापना दृष्टा समारब्धं ममैव समापनीयमिति प्रतिसंधाय । अप्रतिसंधाने तु न समापयेयुः । परिसमापने वा चैत्रारब्धमचैत्रः समापयेत् । यतः स्वयमारब्धात् परारब्धमव्यावृत्तमविशिष्टं स्यस्यापि परस्यात् । अपरिनिष्ठितं च कर्मजातं स्यात् । तथा हि । वैश्यस्तोमे वैश्य एवाधिकारी न ब्राह्मणराजन्यौ एवं राजसूये राजैव न ब्राह्मणो वैश्यो वा । एवं सोमसाधनके ब्राह्मण एवाधिकृतो न राजन्यवैश्यौ शूद्रस्त्वनधिकृत एवेति परिनिष्ठा सा बुद्धिसंततिमात्रे न स्यात् । कुतः । सल्लक्षणानां सर्वेषामेव चैत्रोऽचैत्रलक्षणेन भेदात् । अन्यापोहसामान्यस्य च व्यावर्तितत्वादित्यर्थः । ता॰ टी॰ ।

पममुमर्थं ज्ञेयमिति सोयमेको ज्ञाता पूर्वज्ञातमर्थं गृह्णाति तच्चास्य ग्रहणं स्मरणमिति तद् बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते ॥

स्मरणं त्वात्मनो ज्ञस्वाभाव्यात्* ॥ ४२ ॥

उपपद्यते इति आत्मन एव स्मरणं न बुद्धिसंततिमात्रस्येति । तुश-ब्दो ऽवधारणे कथं ज्ञस्वभावत्वाज् ज्ञ इत्यस्य स्वभावः स्वो धर्मः अयं खलु ज्ञास्यति जानाति अज्ञासीदिति त्रिकालविषयेणानेकेन ज्ञानेन संबध्यते तच्चास्य त्रिकालविषयं ज्ञानं प्रत्यात्मवेदनीयं ज्ञास्यामि जानामि अज्ञासिष-मिति वर्तते तद्यस्यायं स्वो धर्मस्तस्य स्मरणं† न बुद्धिप्रबन्धमात्रस्य निरा-त्मकस्येति । स्मृतिहेतूनामयौगपद्याद्युगपदस्मरणमित्युक्तम्‡ । अथ केभ्यः स्मृतिरुत्पद्यतइति स्मृतिः खलु ।

प्रणिधाननिवन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रया-श्रितसंवन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्ति-व्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रिया-रागधर्माधर्मनिमित्तेभ्यः ॥ ४३ ॥

सुस्मूर्षया मनसो धारणं प्रणिधानं सुस्मूर्षितलिङ्गचिन्तनं चार्थस्मृ-तिकारणम्§ । निबन्धः खल्वेकग्रन्थोपयमोऽर्थानाम् एकग्रन्थोपयताः खल्वर्था अन्योन्यस्मृतिहेतव आनुपूर्व्येणेतरथा‖वा भवन्तीति । धारणाशास्त्रकृतो वा प्रज्ञातेषु वस्तुषु स्मर्तव्यानामुपनिःक्षेपो निबन्धः¶ इति । अभ्यासस्तु

---

* त्रिकालव्यापिनी ज्ञानशक्तिरेव ज्ञस्वाभाव्यं तच्छरीरादिभ्यो व्यावृत्तं त्रिकालव्यापि स्वरूपमेवात्मनः । ता॰ टी॰ । † स्मरणमिति १ ।

‡ स्मृतिहेतूनामयौगपद्यादित्येतत् सिंहावलोकितन्यायेन ह्यनन्तर-सूत्रमवतारयितुम् । ता॰ टी॰ ।

§ तेषु तेषु प्रमत्तस्य मनसस्ततो निवारणमित्यर्थः । सुस्मूर्षितलिङ्गानु-चिन्तनं वा साक्षाद्वा तत्र धारणं तल्लिङ्गे वा प्रयत्न इत्यर्थः । ता॰ टी ।

‖ यथा निग्रहस्थानानां स्मृत्या प्रमाणानां स्मरति । ता॰ टी॰ ।

¶ धारणाशास्त्रं जैगीषव्यादिप्रोक्तं तत्कृतो ज्ञातेषु वस्तुषु नाडीचक्रहृत्पु-ण्डरीककण्ठकूपनासाग्रतालुललाटब्रह्मरन्ध्रादिषु स्मर्तव्यानां बीजस्थानाभरणभूतां च देवतानामुपनिक्षेपः समारोपः । तथा च तत्र तत्र देवताः समारोपितास्तत्-दयपग्रहणात्स्मर्यन्त इत्यर्थः । ता॰ टी॰ ।

समाने विषये ज्ञानानामभ्यावृत्तिरभ्यासजनितः संस्कारः* आत्मगुणोऽभ्यासशब्देनोच्यते स च स्मृतिहेतुः समान इति । लिङ्गं पुनः संयोगि समवाय्येकार्थसमवायि विरोधि चेति । संयोगि यथा धूमोऽग्नेः गोर्विषाणं पाणिः पादस्य रूपं स्पर्शस्य† अभूतं भूतस्येति । लक्षणं‡ पश्ववयवस्थं गोत्रस्य स्मृतिहेतुः विदानामिदं गर्गाणामिदमिति । सादृश्यं चित्रगतं प्रतिरूपकं देवदत्तस्येत्येवमादि । परिग्रहात्स्वेन वा स्वामी स्वामिना वा स्वं स्मर्यते । आश्रयाद् ग्रामण्या तदधीनं संस्मरति । आश्रितात् तदधीनेन ग्रामण्यमिति । संबन्धाद् अन्तेवासिना युक्तं गुरुं स्मरति ऋत्विजा याज्यमिति । आनन्तर्यादिति करणीयेष्वर्थेषु । वियोगाद् येन विप्रयुज्यते तद्वियोगप्रतिसंवेदी भृशं स्मरति । एककार्यात् कर्त्रन्तरदर्शनात्§ कर्त्रन्तरे स्मृतिः । विरोधाद् विजिगीषमाणयोरन्यतरदर्शनादन्यतरः|| स्मर्यते । अतिशयाद् येनातिशय उत्पादितः । प्राप्तेः यतोऽनेन¶ किं चित्प्राप्तमाप्तव्यं वा भवति तमभीक्ष्णं स्मरति । व्यवधानात् कोशादिभिरसिप्रभृतीनि स्मर्यन्ते सुखदुःखाभ्यां तद्धेतुः स्मर्यते । इच्छाद्वेषाभ्यां यमिच्छति यं च द्वेष्टि तं स्मरति । भयाद् यतो बिभेति । अर्थित्वाद् येनार्थी भोजनेनाच्छादनेन वा । क्रियया रथेन रथकारं स्मरति । रागाद् यस्यां स्त्रियां रक्तो भवति तामभीक्ष्णं स्मरति । धर्माज् जात्यन्तरस्मरणमिह चाधीतश्रुतावधारणमिति । अधर्मात्प्रागनुभूतदुःखसाधनं स्मरति । न**चैतेषु निमित्तेषु ††युगपत्संवेदनानि भवन्तीति युगपदस्मरणमिति । ‡‡निदर्शनं चेदं स्मृतिहेतूनां न परिसंख्यानमिति । अनित्यायां च बुद्धौ उत्पन्नापवर्गित्वात् कालान्तरावस्थानाच्च नित्यानां संशयः किमुत्पन्नापवर्गिणी बुद्धिः शब्दवदाहो स्वि-

---

* अत्र च स्मृतिहेतूनां न समावेशो विवक्षितः । तेन संस्कारेण स्मृतिकारणानां सर्वेषामेव प्रणिधानादीनां समावेश एव निबन्धनादिभिस्तु यथायोगं समावेशासमावेशावूहनीयाविति ता० टी० ।

† एकस्यावयविनोऽर्थस्य समवायोऽस्येति समासे पाणिः पादस्येत्युदाहरणम् । एकस्मिन्नर्थे समवायोऽस्येति समासे तु रूपं स्पर्शस्येति ।

‡ स्वाभाविकाविनाभावयुक्तं लिङ्गं सांकेतिकं तु चिन्हमिति विशेषः । ता० टी० ।

§ कर्त्रन्तरबोधनाद् इति २ । || अन्यतरत् २ । ¶ येन २ ।

** नैत नास्ति २ । †† व्यवहिते २ ।

‡‡ ननून्मादादयोऽपि स्मृतिहेतवो लोकसिद्धास्तत् किं ते ऽपि नोक्ता इत्यत आह । ता० टी० ।

त्कालान्तरावस्थायिनी कुम्भवदिति । *उत्पन्नापवर्गिणीति पक्षः परिगृह्यते कस्मात् ।

## कर्मानवस्थायिग्रहणात् ॥ ४४ ॥

कर्मणोऽनवस्थायिनो ग्रहणादिति क्षिप्तस्येषोरापतनात् क्रियासंतानो गृह्यते प्रत्यर्थनियमाच्च बुद्धीनां क्रियासंतानवद्बुद्धिसंतानोपपत्तिरिति । †अवस्थितग्रहणे च व्यवधीयमानस्य प्रत्यक्षनिवृत्तेः । अवस्थिते च कुम्भे गृह्यमाणे सन्तानेनैव बुद्धिर्वर्तते प्रागव्यवधानात् तेन व्यवहिते प्रत्यक्षं ज्ञानं निवर्तते कालान्तरावस्थाने तु बुद्धेर्दृश्यव्यवधानेऽपि प्रत्यक्षमवतिष्ठेतेति । स्मृतिश्चालिङ्गं बुद्ध्यवस्थाने संस्कारस्य बुद्धिजस्य स्मृतिहेतुत्वात् । यश्च मन्येतावतिष्ठते बुद्धिः दृष्टा हि बुद्धिविषये स्मृतिः सा च बुद्धावनित्यायां कारणाभावान्न स्यादिति तदिदमलिङ्गं कस्माद् बुद्धिजो हि संस्कारो गुणान्तरं स्मृतिहेतुर्न बुद्धिरिति ।

**हेत्वाभावादयुक्तमिति चेद् बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः ।**

यावदवतिष्ठते बुद्धिस्तावदसौ बोद्धव्यार्थः प्रत्यक्षः प्रत्यक्षे च स्मृतिरनुपपन्नेति‡ ॥

## अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्संपाते रूपाव्यक्तग्रहणवत् ॥ ४५ ॥

यद्युत्पन्नापवर्गिणी बुद्धिः प्राप्तमव्यक्तं बोद्धव्यस्य ग्रहणं यथा विद्युत्संपाते वैद्युतस्य प्रकाशस्यानवस्थानादव्यक्तं रूपग्रहणमिति व्यक्तं तु द्रव्याणां ग्रहणं तस्मादयुक्तमेतदिति ॥

---

* अन्येभ्यो विनाशिभ्य आशुतरं विनश्यतीति । न त्वयमर्थः उत्पद्येत्यनन्तरं ध्वंसत इति । कः पुनरत्र न्यायः आशुतरविनाशिनी बुद्धिः जातिमत्त्वे सति अस्मदादिप्रत्यक्षत्वे सति व्यापकद्रव्यसमवायाच्छब्दवदिति । आत्मत्वे व्यभिचारवारणायाद्यं विशेषणम् । आत्मगतपरममहत्परिमाणे व्यभिचारवारणाय द्वितीयम् । घटादौ व्यभिचारवारणाय विशेष्यं व्यापकत्वविशेषणं च । अथ वाऽऽशुतरविनाशिनी बुद्धिः गुणत्वे सत्यग्राह्यकारणप्रत्यक्षत्वात् सुखवदिति । सुखत्वादौ व्यभिचारवारणाय विशेषणम् । न्या० वा० ता० टी० ।

† अव्यवहितेति च ।

‡ बुद्धेः स्थिरत्वे घटप्रत्यक्षानन्तरं व्यवधानेऽपि घटं साक्षात्करोमीत्यनुभवप्रसङ्गः । कालान्तरे स्मृतिस्तु तज्जन्यसंस्कारनिमित्तिका न बुद्धिस्थैर्यनिमित्तिका । स्मृतेरेव बुद्धेरनवस्थायित्वम् । प्रत्यक्षनिरोधे सति तत्पूर्वकविषयप्रतिसंधेरेव स्मृतित्वात् प्रत्यक्षस्थैर्ये तदनुपपत्तेः ।

**हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४६ ॥**

उत्पन्नापवर्गिणी बुद्धिरिति प्रतिषेद्धव्यं त*देवाभ्यनुज्ञायते विद्युत्संपाते रूपाव्यक्तग्रहणवदिति । यत्राव्यक्तग्रहणं तत्रोत्पन्नापवर्गिणी बुद्धिरिति ।

**ग्रहणे हेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पात् ॥ ४७ ॥**

यदिदं क्व चिदव्यक्तं क्व चिद्व्यक्तं ग्रहणमयं ग्रहणहेतुविकल्पाद् यत्रानवस्थितो ग्रहणहेतुः तत्राव्यक्तं ग्रहणं यत्रावस्थितस्तत्र व्यक्तं† न तु बुद्धेरवस्थानानवस्थानाभ्यामिति । कस्मादर्थग्रहणं हि बुद्धिर्यत्र तदर्थग्रहणमव्यक्तं व्यक्तं वा बुद्धिः सेति । विशेषाग्रहणे च सामान्यग्रहणमात्रं व्यक्तग्रहणं तत्र विषयान्तरे बुद्ध्यन्तरानुत्पत्तिर्निमित्ताभावात् । यत्र समानधर्मयुक्तश्च धर्मी गृह्यते विशेषधर्मयुक्तश्च तद्व्यक्तं ग्रहणं यत्र तु विशेषे ऽगृह्यमाणे सामान्यग्रहणमात्रं तदव्यक्तं ग्रहणम् । समानधर्मयोगाच्च विशिष्टधर्मयोगो विषयान्तरं तत्र यत् ग्रहणं न भवति तद्ग्रहणं निमित्ताभावाद् न बुद्धेरनवस्थानादिति । यथाविषयं च ग्रहणं व्यक्तमेव प्रत्यर्थनियतत्वाद् बुद्धीनां सामान्यविषयं च ग्रहणं स्वविषयं प्रतिव्यक्तं‡ विशेषविषयं च ग्रहणं स्वविषयं प्रतिव्यक्तं प्रत्यर्थनियता हि बुद्धयः तदिदमव्यक्तग्रहणं देशितं क्व विषये बुद्ध्यनवस्थानकारितं स्यादिति ।

**धर्मिणस्तु धर्मभेदे बुद्धिनानात्वस्य भावाभावाभ्यां तदुपपत्तिः ।**

धर्मिणः खल्वर्थस्य समानाश्च धर्मा विशिष्टाश्च तेषु प्रत्यर्थनियता नानाबुद्धयः ता उभय्यो यदि धर्मिणि वर्तन्ते तदा व्यक्तं ग्रहणं धर्मिणमभिप्रेत्य । यदा तु सामान्यग्रहणमात्रं तदा ऽव्यक्तं ग्रहणमिति§ एवं धर्मिणमभिप्रेत्य व्यक्ताव्यक्तयोर्ग्रहणयोरुपपत्तिरिति न ‖वेदमव्यक्तं ग्रहणं बुद्धेर्वाद्ध्यस्य वानवस्थायित्वादुपपद्यत इति । इदं हि न¶ ।

---

* तदेकत्वेति २ ।

† विद्युत्संपातकाले चालोकसंयोगेनैकस्याः सामान्यविषयिण्या बुद्धेरुत्पादे ऽपि द्वितीयक्षणे चालोकसंयोगाभावेन सहकारिकारणवैकल्येन विशेषविषयकबुद्धेरनुत्पादादव्यक्तं ग्रहणमिति भावः ।

‡ प्रत्यव्यक्तमिति २ ।

§ ग्रहणमेव धर्मिणमभिप्रेत्य एवं व्यक्ताव्यक्तयोरुपपत्तिरिति २ ।   ‖ न चेदमिति २ ।

¶ अनेकान्ताच्च । नायमेकान्तो ऽस्ति विषयग्रहणहेतोरवस्थानानवस्थाने तत्राव्यक्तग्रहणम् । भा० वा० ।

**प्रदीपार्चिःसंतत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥ ४८ ॥**

अनवस्थायित्वेपि बुद्धेस्तेषां द्रव्याणां ग्रहणं व्यक्तं प्रतिपत्तव्यम् । कथं प्रदीपार्चिःसंतत्यभिव्यक्तग्रहणवत् प्रदीपार्चिषां संतत्या वर्तमानानां ग्रहणानवस्थानं ग्राह्यानवस्थानं च प्रत्यर्थनियतत्वाद्वा बुद्धीनां यावन्ति प्रदीपार्चींषि तावत्यो बुद्धय इति । दृश्यते चात्र व्यक्तं प्रदीपार्चिषां ग्रहणमिति । चेतना शरीरगुणः सति शरीरे भावादसति चाभावादिति ।

**द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४९ ॥**

सांशयिकः सति भावः* स्वगुणोप्सु द्रवत्वमुपलभ्यते परगुणश्चोष्णता तेनायं संशयः किं शरीरगुणश्चेतना शरीरे गृह्यते अथ द्रव्यान्तरगुण इति । न शरीरगुणश्चेतना कस्मात् ।

**यावच्छरीरभावित्वाद्रूपादीनाम्† ॥ ५० ॥**

न रूपादिहीनं शरीरं गृह्यते चेतनाहीनं तु गृह्यते यथोष्णताहीना आपः तस्मान्न शरीरगुणश्चेतनेति ।

‡संस्कारवदिति चेन्न कारणानुच्छेदात्§ ।

यथाविधे द्रव्ये संस्कारः ¶तथाविध एवोपरमो न तत्र कारणोच्छेदादत्यन्तं|| संस्कारानुपपत्तिर्भवति यथाविधे शरीरे चेतना गृह्यते तथाविध एवात्यन्तोपरमश्चेतनाया गृह्यते तस्मात्संस्कारवदित्यसमः समाधिः । अथापि शरीरस्थं चेतनोत्पत्तिकारणं स्याद् द्रव्यान्तरस्थं वा उभयस्थं वा तन्न नि-

---

* न सति भावाच्छरीरगुणत्वं चेतनायाः सिध्यति सति भावस्यान्यगुणत्वेऽपि दर्शनात् । न तावत्संयोगविभागसंस्काराः कर्मगुणाः अथ च सति कर्मणि भावोऽसति चाभाव इति । तद्गुणत्वं च तत्रोपलब्ध्या सिध्यति यत्र च वर्तमानमुपलभ्यते रूपादिकं तत्तस्य गुण इति । अथ सति भावादित्यनेन शरीरे चेतनोपलब्धिं ब्रूयात्तस्याप्यसिद्धता दोषः । न हि शरीरे चेतनोपलभ्यते चेतनामात्रं तूपलभ्यते तच्च सन्दिग्धं किं शरीरे उतान्यस्मिन्निति । न्या॰ वा ।

† दृष्टान्तसूत्रं वैधर्म्येण । न्या॰ वा॰ ।

‡ यथा संस्कारः शरीरगुणो न च यावच्छरीरं वर्तते तथा चेतनापि । न्या॰ वा॰ ।

§ संस्कारस्य न शरीरमात्रं कारणम् । तस्य नोदनादिकारणसंनिधाने तदभावे च भावाभावौ युक्तौ । न्या॰ वा॰ । || दत्यन्ता–२ ।

¶ अथ मन्यसे यथैव संस्कारस्य कारणमसंनिहितमेवं चेतनाकारणमपीति तदयुक्तम् । विकल्पानुपपत्तेः । यच्छरीरे चेतनोत्पत्तिकारणं तत्किं शरीर-

यमहेत्वभावात् । शरीरस्थेन कदा चिच्चेतनोत्पद्यते कदा चिन्नेति नियमे हेतुर्नास्तीति । द्रव्यान्तरस्थेन च शरीरएव चेतनोत्पद्यते न लोष्टादिष्वित्यत्र नियमहेतुरस्तीति । उभयस्य* निमित्तत्वे शरीरसमानजातीयद्रव्ये चेतना नोत्पद्यते शरीरएव चोत्पद्यते इति नियम†हेतुर्नास्तीति । यत्तु मन्येत सति श्यामादिगुणे द्रव्ये श्यामाद्युपरमो दृष्टः एवं चेतनोपरमः स्यादिति ।

## न पाकजगुणान्तरोत्पत्तेः ॥ ५१ ॥

नात्यन्तरूपोपरमो द्रव्यस्य श्यामे रूपे निवृत्ते पाकजं गुणान्तरं रक्तं रूपमुपपद्यते शरीरे तु चेतनामात्रोपरमो ऽत्यन्तमिति । अथापि ।

## प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५२ ॥

यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वन्द्विसिद्धिस्तावत्सु पाकजोत्पत्तिर्दृश्यते पूर्वगुणैः सह पाकजानामवस्थानस्याग्रहणात् । न च शरीरे चेतनाप्रतिद्वन्द्विसिद्धौ सहानवस्थायि गुणान्तरं‡ गृह्यते येनानुमीयेत तेन चेतनाया विरोधः । तस्मादप्रतिषिद्धा चेतना यावच्छरीरं वर्तत न तु वर्तते तस्मान्न शरीरगुणश्चेतना इति । इतश्च न शरीरगुणः चेतना ।

## शरीरव्यापित्वात् ॥ ५३ ॥

शरीरं शरीरावयवाश्च सर्वे चेतनोत्पत्त्या व्याप्ता इति न क्व चिदनुत्पत्तिश्चेतनायाः शरीरवच्छरीरावयवाश्चेतना इति प्राप्तं चेतनबहुत्वं तत्र यथा प्रतिशरीरं चेतनबहुत्वे सुखदुःखज्ञानानां व्यवस्था लिङ्गमेवमेकशरी-

स्थमुत द्रव्यान्तरस्थम् । शरीरस्थमपि च यावद्द्रव्यभावि उत नैमित्तिकमिति । यदि यावद्द्रव्यभावि न कदा चिच्चेतनाहीनं शरीरमुपलभ्येत निमित्तस्य संनिहितत्वात् । अथ नैमित्तिकं यच्छरीरे चेतनोत्पत्तेर्निमित्तस्य कारणं तत्रापि चेतनावत्प्रसङ्गः । अथ द्रव्यान्तरवृत्तिकारणं शरीरे चेतनां करोति न द्रव्यान्तरेष्वित्यत्रापि नियमहेतुर्वक्तव्यः । द्रव्यान्तरस्थं नित्यमनित्यं वा । अनित्यमपि कालान्तरस्थायि प्रतिक्षणध्वंसि वेति चेतनावत्प्रसङ्गः । न्या० वा० ।

* उभयस्येति ४ उभयतस्त्वि० २ । † नियमे १ ।

‡ अथ मन्यसे शरीरे ऽचेतना गुणान्तरमिति तत्र । रूपतो ऽनिर्देशात् । यत्तदचेतनत्वं तच्चेतनाविपरीतं धर्मभूतं वस्तु उत चेतनाप्रतिषेधमात्रमिति । यदि विपरीतं चेतनावत्प्रत्यक्षं स्यात् । अथ चेतनप्रतिषेधमात्रं तत्र गुण इति । न्या० वा०

रेपि* स्याद् न तु भवति । तस्मान्न शरीरगुणश्चेतनेति । यदुक्तं न चिच्छरीरावयवे चेतनाया अनुत्पत्तिरिति† स न ।

केशनखादिष्वनुपलब्धेः‡ ॥ ५४ ॥

केशेषु नखादिषु चानुत्पत्तिश्चेतनाया इति अनुपपन्नं शरीरव्यापित्वमिति ।

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५५ ॥

इन्द्रियाश्रयत्वं शरीरलक्षणं त्वक्पर्यन्तं जीवमनःसुखदुःखसंवित्त्यायतनभूतं शरीरं तस्मान्न केशादिषु चेतनोत्पद्यते । अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति§ । इतश्च न शरीरगुणश्चेतना ।

शरीरगुणवैधर्म्यात् ॥ ५६ ॥

द्विविधः शरीरगुणो ऽप्रत्यक्षश्च गुरुत्वम् । इन्द्रियग्राह्यश्च रूपादिः विधान्तरं तु चेतना नाप्रत्यक्षा सवेद्यत्वाद् नेन्द्रियग्राह्या मनोविषयत्वात् तस्माद् द्रव्यान्तरगुण इति ।

न रूपादीनामितरेतरवैधर्म्यात् ॥ ५७ ॥

यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वं जहत्येवं रूपादिवैधर्म्याच्चेतना शरीरगुणत्वं न हास्यतीति ।

ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५८ ॥

अप्रत्यक्षत्वाच्चेति यथेतरेतरविधर्माणो रूपादयो न द्वैविध्यमतिवर्तन्ते तथा रूपादिवैधर्म्याच्चेतना न द्वैविध्यमतिवर्तेत यदि शरीरगुणः स्यादिति । अतिवर्तते तु तस्मान्न शरीरगुण‖ इति भूतेन्द्रियमनसां ज्ञान-

---

* । २ अपिर्नास्ति । † (सा) नास्ति २ ।

‡ दृष्टान्तसूत्रम् । न्या॰ भा॰ । न करचरणादयश्चेतनाः शरीरावयवत्वात् केशनखादिवदिति । ता॰ टी॰ ।

§ शरीरावयवत्वं केशनखादीनां हेतुरसिद्धः । इन्द्रियाश्रयत्वं हि शरीरलक्षणं तच्च शरीरं समवेतं तेनेन्द्रियाश्रयेणावश्य भवितव्यं त्वक्पर्यन्तावयवसमूहस्तथा न तु केशनखादयस्तादृशा इति न शरीरावयवा इत्यर्थः । ता॰ टी॰ ।

‖ चेतना शरीरगुणत्वाभाववती बाह्यकरणाजन्यप्रत्यक्षविषयत्वात्सुखादिवदिति प्रयोगः ।

प्रतिषेधात् । सिद्धे सत्यारम्भो विशेषज्ञापनार्थः । बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति । परीक्षिता बुद्धिः मनस इदानीं परीक्षाक्रमः *तत्प्रतिशरीरमेकमनेकमिति विचारे ।

## ज्ञानायौगपद्यादेकं मनः ॥ ५९ ॥

अस्ति खलु† वै ज्ञानायौगपद्यमेकैकस्येन्द्रियस्य यथाविषयं करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यान्न तदेकत्वे मनसो लिङ्गं यत्तु खल्विदं‡मिन्द्रियान्तराणां विषयान्तरेषु ज्ञानायौगपद्यमिति तल्लिङ्गम् । कस्मात्सम्भवति खलु वै बहुषु मनःस्विन्द्रियमनःसंयोगयौगपद्यमिति ज्ञानयौगपद्यं स्यात् । न तु भवति तस्माद्विषये प्रत्ययपर्यायादेकं मनः§ ।

## न युगपदनेकक्रियोपलब्धेः ॥ ६० ॥

अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति शृणोत्या‖रण्यजान् शब्दान् बिभेति¶व्याललिङ्गानि बुभुत्सते स्मरति च गन्तव्यं स्थानीयम्**मिति क्रमस्याग्रहणाद्युगपदेताः क्रिया इति प्राप्तं मनसो बहुत्वमिति ।

## अलातचक्रदर्शनवत्तदुपलब्धिराशुसंचारात् ॥ ६१ ॥

आशुसंचारादलातस्य†† भ्रमतो‡‡ विद्यमानः क्रमो न गृह्यते क्रमस्याग्रहणादविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवति§§ । तथा बुद्धीनां क्रियाणां चाशुवृत्तित्वाद्विद्यमानः क्रमो न गृह्यते क्रमस्याग्रहणाद्युगपत् क्रिया भवन्तीति अभिमानो भवति । किं पुनः क्रमस्याग्रहणाद् युगपत् क्रियाभिमानः अथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति । नात्र विशेषप्रतिपत्तेः कारणमुच्यते‖‖ उक्तमिन्द्रियान्तराणां विषयान्तरेषु पर्यायेण बुद्धयो भवन्तीति तच्चाप्रत्याख्ये-

---

* तत्किमिति १ । ४ । ५ ।  † २ । खल्विति नास्ति ।  ‡ ४ इदमिति नास्ति ।

§ यदि बहूनि मनांसि स्युः प्रतीन्द्रियं मनसः संबन्ध इति युगपदनेकार्थसंनिधाने युगपदनेकज्ञानानि यस्त्वेकेन्द्रियग्राह्येषु ज्ञानानामयुगपद्भावः स न मनस एकत्वे लिङ्गम् । करणत्वात्तद्भवतीत्युक्तम् । न्या॰ ॰वा ।

‖ शृणोतीति १ । २ । ४ ।  ¶ बिभ्यद्व्याललिङ्गानि १ । ४ ।

** स्थानीयमिति २ । ४ । स्थानीयमिति ४ । †† चलातचक्रस्येति ५ । ‡‡ संभ्रमत इति ४ । ५ ।

§§ भवतीति इति २ । ४ । ५ ।  ‖‖ उच्यत इति इति २ । ४ । ५ ।

यमात्मप्रत्ययत्वात् । अथापि दृष्टश्रुतानर्थांश्चिन्तयतः क्रमेण बुद्धयो वर्तन्ते न युगपदनेनानुमातव्यमिति । वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनां चाशुवृत्तित्वात् क्रमस्याग्रहणम् । कथं वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावच्छ्रवणं भवति श्रुतं वर्णमेकमनेकं वा पदभावेन प्रतिसंधत्ते प्रतिसंधाय पदं व्यवस्यति पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते पदसमूहप्रतिसंधानाच्च वाक्यं व्यवस्यति संबद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते । न चासां* क्रमेण वर्तमानानां बुद्धीनामाशुवृत्तित्वात् क्रमो गृह्यते तदेतदनुमानमन्यत्र बुद्धिक्रियायोगपद्याभिमानस्येति । न चास्ति† मुक्तसंशयं‡ युगपदुत्पत्तिर्बुद्धीनां यया मनसो बहुत्वमेकशरीरेऽनुमीयतइति ।

## यथोक्तहेतुत्वाच्चाणु§ ॥ ६२ ॥

अणु मन एकं चेति धर्मसमुच्चयो ज्ञानायौगपद्यात् । महत्त्वे मनसः सर्वेन्द्रियसंयोगाद्युगपद्विषयग्रहणं स्यादिति । मनसः खलु‖ भोः सेन्द्रियस्य शरीरे वृत्तिलाभो नान्यत्र शरीरात् । ज्ञातुश्च पुरुषस्य शरीरायतना बुद्ध्यादयो विषयोपभोगो जिहासितहानमीप्सितावाप्तिश्च सर्वे च शरीराश्रया व्यवहाराः । तत्र खलु विप्रतिपत्तेः संशयः किमयं पुरुषकर्मनिमित्तः शरीरसर्गः आहोस्वि भूतमात्रादकर्मनिमित्त इति । श्रूयते खल्वत्र विप्रतिपत्तिरिति । तत्रेदं तत्त्वम् ।

## पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६३ ॥

पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतं कर्मोक्तं तस्य फलं तज्जनितौ धर्माधर्मौ तत्फलस्यानुबन्ध आत्मसमवेतस्यावस्थानं

---

* न चासौ २ ।

† न चास्योभयपक्षसंप्रतिपन्ना युगपदुत्पत्तिर्यया बहुत्वं मनसः प्रतिपद्येमहीति । न्या॰ वा॰ ।

‡ युक्तिः संशयादिति ३ । मुक्तसंशया इति ४ ।

§ य एवैकत्वे मनसो हेतुरुक्तो ऽनेनैवाणु मनो ऽवसातव्यमिति । न्या॰ वा॰ ।

‖ मनसः खलु भोः सेन्द्रियस्य शरीरे वृत्तिः । शरीरे विचारिते मन एव विचारितं भवतीत्यतः शरीरं पुनर्विचार्यते । न्या॰ वा॰ । मन एवाधिकरणविचारेणापि परीक्ष्यतइति नासम्बन्धः शरीरोत्पत्तिनिमित्तविचारस्य । यस्ति इंता हि परीक्षा सापि रूपतः संबन्धितश्च । शरीरं च मनःसंबन्धि तदधिकरणत्वान्मनसः । तस्मान्मनस एवेयं परीक्षा या शरीरस्येत्यर्थः । ता॰ टी॰ । ¶ चत्र वा इति ५ ।

तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः* शरीरस्य न स्वतन्त्रेभ्य इति । यदधिष्ठानोऽयमात्माऽयमहमिति† मन्यमानो यत्राभियुक्तो यत्रोपभोगतृष्णया विषयानुपलभमानो धर्माधर्मौ संस्करोति तदस्य शरीरं तेन संस्कारेण धर्माधर्मलक्षणेन भूतसहितेन (पतिते)‡स्मिन् शरीरे उत्तरं§ निष्पद्यते निष्पन्नस्य चास्य|| पूर्वशरीरवत्पुरुषार्थक्रिया पुरुषस्य च¶ पूर्वशरीरवत् प्रवृत्तिरिति कर्मापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सत्येतदुपपद्यते इति । दृष्टा च पुरुषगुणेन प्रयत्नेन प्रयुक्तेभ्यो भूतेभ्यः पुरुषार्थक्रियासमर्थानां द्रव्याणां **रथप्रभृतीनामुत्पत्तिः तया††नुमातव्यं शरीरमपि पुरुषार्थक्रियासमर्थमुत्पद्यमानं पुरुषस्य गुणान्तरापेक्षेभ्यो भूतेभ्य उत्पद्यते‡‡ इति । अत्र नास्तिक आह ।

## भूतेभ्यो मूर्त्त्युपादानवत्तदुपादानम्§§ ॥ ६४ ॥

यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्त्तयः सिकता||||शर्करापाषाणगैरिकाञ्जनप्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते तथा कर्मनिरपेक्षेभ्यो भूतेभ्यः शरीरमुत्पन्नं पुरुषार्थकारित्वादुपादीयत इति ।

## ¶¶न साध्यसमत्वात् ॥ ६५ ॥

यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या तथा सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतीनामप्यकर्मनिमित्तः सर्गः साध्यः साध्यसमत्वादसाधनमिति*† । भूतेभ्यो मूर्त्त्युपादानवदिति चानेन साम्यम् ।

---

* तस्य शरीरस्योत्पत्तिरिति २।५। † यदहमिति २। ‡ ( ) नास्ति २।
§ शरीरान्तरम् निष्पद्यते इति २।५।
|| तस्येति २।५। ¶ च नास्ति २।५।
** रथप्रभृतीनामिति २।५। †† तयेति २।५।
‡‡ पुरुषगुणप्रेरितभूतपूर्वकं शरीरं कार्यत्वे सति पुरुषार्थक्रियासामर्थ्यात् । यत्पुरुषार्थसमर्थं तत्पुरुषगुणप्रेरितभूतपूर्वकं दृष्टं यथा रथादि पुरुषगुणेन प्रयत्नेन प्रेरितैर्भूतैरारभ्यमाणं पुरुषार्थक्रियासमर्थं दृष्टं तथा च शरीरं तस्मादिदमपि धर्मापेक्षैर्भूतैरारभ्यते । सुखदुःखनिमित्तत्वात् घटादिवत् । एतच्च कार्यत्वाद्रूपादिवदिति । बाह्यकरणप्रत्यक्षत्वे सति रूपादिमत्त्वात् घटादिवदेव । न्या० वा० ।
§§ पुरुषार्थक्रियासामर्थ्यादित्यस्य हेतोरनैकान्तिकत्वद्योतकं सूत्रम् । न्या० वा० ।
|||| पाषाणशर्करा इति २।
¶¶ साधनपक्षे दृष्टान्ताभावत्वादसिद्धम् । अथ यतः निरपेक्षाणि भूतानि शरीरमारभन्ते पुरुषार्थक्रियासामर्थ्यात् सिकतादिवदिति तच्च न । न्या० वा० ।
*† सिकतादीनामपि कर्मनिमित्तकः सर्ग इत्येतस्माद्धेतोः सिध्यतीति ।

## नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६६ ॥

विषमश्चायमुपन्यासः। कस्माद् निर्बीजा इमा मूर्तय उत्पद्यन्ते बीजपूर्विका तु शरीरोत्पत्तिः। मातापितृशब्देन लोहितरेतसी बीजभूते* गृह्येते तत्र सत्त्वस्य गर्भवासानुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाशये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्तीत्युपपन्नं बीजानुविधानमिति।

## तथा ऽऽहारस्य ॥ ६७ ॥

उत्पत्तिनिमित्तत्वादिति प्रकृतम्। भुक्तं पीतमाहारस्तस्य पक्तिनिर्वृत्तं रसद्रव्यं मातृशरीरे चोपचिते बीजे गर्भाशयस्थे बीजसमानपाकं† मात्रया चोपचयो बीजे ‡यावद्व्यूहसमर्थः संचय इति। संचितं चार्बुदमांसपेशीकललकण्डर§शिरः||पाण्यादिना च व्यूहेनेन्द्रियाधिष्ठानभेदेन व्यूह्यते व्यूहे च गर्भनाड्यावतारितं रसद्रव्यमुपचीयते यावत्प्रसवसमर्थमिति। न ¶चायमन्नपानस्य स्थाल्यादिगतस्य कल्प्यत इति। एतस्मात्कारणात्कर्मनिमित्तत्वं शरीरस्य विज्ञायत इति।

## प्राप्तौ चानियमात् ॥ ६८ ॥

न सर्वो दम्पत्योः संयोगो गर्भाधानहेतुर्दृश्यते तत्रासति कर्मणि न भवति सति च भवतीत्यनुपपन्नो नियमाभाव इति कर्मनिरपेक्षेषु भूतेषु शरीरोत्पत्तिहेतुषु नियमः स्यात् न ह्यत्र कारणाभाव इति। अथापि।

## **शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म†† ॥ ६९॥

यथा खल्विदं शरीरं धातुप्राणसंवाहिनीनां नाडीनां शुक्रान्तानां

---

तथा चोभयपक्षसंप्रतिपन्नो रथादिर्दृष्टान्तः पुरुषगुणप्रेरितभूतपूर्वको ऽस्ति न तथा ऽकर्मनिमित्तसर्गपक्षे दृष्टान्तो ऽस्तीति। न्या॰ वा॰।

* ननु मातापितरौ शरीरोत्पत्तौ न मातात्कारणमत आह। ता॰ टी॰।

† पाकमात्रं चेति २। ‡ यावद्व्यूहेति २।४।

§ कण्डूम २ कण्डरा ४ कण्डर ५ कंडर १।

|| पाणिपादादिनेति २। ¶ इदमिति २।५।

** अन्वास्मना विमुक्तास्तक्रमशरीरैः संबन्धादिदं शरीरमस्येत्यस्य इति नियमे को हेतुरित्यस्योत्तरत्वेन सूत्रम्। †† निमित्तं कर्माशये इति २।

धातूनां च स्नायुत्वगस्थिशिरापेशीकललकण्डराणां च शिरोबाहूदराणां *सक्थ्नां च कोष्ठगानां च वातपित्तकफानां च मुखकण्ठहृदयामाशयपक्वाशयाधःस्रोतसां च परमदुःखसंपादनीयेन सन्निवेशेन व्यूहनमशक्यं† पृथिव्यादिभिः कर्मनिरपेक्षैरु‡त्पादयितुमिति कर्मनिमित्ता शरीरोत्पत्तिरिति विज्ञायते । एवं च प्रत्यात्मनियतस्य निमित्तस्याभावान्निरतिशयैरात्मभिः संबन्धात्सर्वात्मनां च समानैः पृथिव्यादिभिरुत्पादितं शरीरं पृथिव्यादिगतस्य च नियमहेतोरभावात् सर्वात्मनां सुखदुःखसंवित्त्यायतनं§ समानं प्राप्तम् । यत्तु प्रत्यात्मं व्यवतिष्ठते तच्च शरीरोत्पत्तिनिमित्तं कर्म|| व्यवस्थाहेतुरिति विज्ञायते । परिपच्यमानो हि प्रत्यात्मनियतः कर्माशयो यस्मिन्नात्मनि वर्तते तस्यैवोपभोगायतनं शरीरमुत्पाद्य व्यवस्थापयति । तदेवं शरीरोत्पत्तिनिमित्तवत्संयोगनिमित्तं कर्मेति विज्ञायते । प्रत्यात्मव्यवस्थानं तु शरीरस्यात्मना संयोगं प्रचक्ष्महे¶ इति ॥

## एतेनानियमः प्रत्युक्तः** ॥ ७० ॥

††यो ऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते अयं शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्मेत्यनेना (नियमः)‡‡ प्रत्युक्तः । कस्तावदयं नियमः यथैकस्यात्मनः शरीरं तथा सर्वेषामिति नियमः । §§अन्यस्या-

---

* सक्थ्नां कोष्ठाङ्गानामिति २ ।    † व्यूहितुम् २ व्यूहितम् ५ ।

‡ कर्मनिरपेक्षैर्व्यूति २ ।    § संवित्तिसाधनमिति २ । ५ ।

|| येनैव कर्मणा शरीरमुत्पाद्यते तदेव संयोगं नियमयति । अकर्मनिमित्ते शरीरसर्गे यथोक्तदोष इति । न्या॰ वा॰ ।

¶ कर्मफलस्वात्मन्यवस्थित्यनियमस्तु संयोगनिमित्तकः । संयोगे ऽपि तदात्मसंबन्धित्वनियमो मनोनिमित्तकः यस्यात्मनो यन्मनस्तेन यः संयोगो जन्यते स तस्येति । मनसस्तत्तदीयत्वावस्तु कर्मनिमित्तकः अनादित्वाच्च संसारस्य न चक्रकम् । संयोगपदपर्यवसर्गः २ पा॰ ।

** तदेवमात्मगुणनिबन्धने शरीरसर्गे व्यवस्था दर्शिता । ये तु मेनिरे न कर्मनिबन्धनः शरीरसर्गो ऽपि तु प्रकृत्यादिनिबन्धनः । प्रकृतयो हि स्वयमेव धर्माधर्मरूपनिमित्तानपेक्षाः सत्त्वरजस्तमोरूपतया प्रवृत्तिशीलाः स्वं स्वं विकारमारभन्ते प्रतिबन्धापगममात्रे तु धर्माधर्मावपेक्षन्ते । तद्यथा कृषीवलः केदारादपां पूर्णात्केदारान्तरमपूर्णमाप्लावयिषुरपां सेतुमात्रं भिनत्ति । तास्तु निम्नाभिसर्पणस्वभावा अपहृतसेतवः स्वयमेव केदारमाप्लावयन्ति एवमाप्लावयन्ति प्रकृतयो ऽपि विकारानिति । यथाहुः निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदिति सान्त्याह । ता॰ टी॰ ।

†† सो ऽयमकर्मनिमित्तशरीरसर्गे मते नियम ९ । २ ।

‡‡ ( ) नास्ति । १ । २ । ४ । ५ ।    §§ ष्टिपार्द नास्ति ॥ अन्यस्यात्मनश्चान्यदेति २ ।

न्यथान्यस्यान्यथेत्यनियमे भेदो व्यावृत्तिर्विशेष इति । दृष्टश्च जन्मव्यावृत्तिरुच्चाभिजनो निकृष्टाभिजन इति प्रशस्तं निन्दितमिति व्याधिबहुलमरोगमिति समग्रं विकलमिति पीडाबहुलं सुखबहुलमिति पुरुषातिशयलक्षणोपपन्नं विपरीतमिति प्रशस्तलक्षणं निन्दितलक्षणमिति पट्विन्द्रियं मृद्विन्द्रियमिति । सूक्ष्मश्च भेदो ऽपरिमेयः सोऽयं जन्मभेदः प्रत्यात्मनियतात्कर्मभेदादुपपद्यते असति कर्मभेदे प्रत्यात्मनियते निरतिशयित्वादात्मनां समानत्वाच्च पृथिव्यादीनां पृथिव्यादिगतस्य नियमहेतोरभावात्सर्वं* सर्वात्मनां प्रसज्येत न त्विदमित्थंभूतं जन्म तस्मान्नाकर्मनिमित्ता शरीरोत्पत्तिरिति ॥

†उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः ॥ ७१ ॥

कर्मनिमित्ते शरीरसर्गे तेन शरीरेणात्मनो वियोग उपपन्नः । कस्मात्कर्मक्षयोपपत्तेः । उपपद्यते खलु कर्मक्षयः सम्यग्दर्शनात् प्रक्षीणे मोहे वीतरागः पुनर्भवहेतुकर्म कायवाङ्मनोभिर्न करोति इत्युत्तरस्यानुपचयः पूर्वोपचितस्य विपाकप्रतिसंवेदनात्प्रक्षयः । एवं प्रसवहेतोरभावात् पतितेऽस्मिन् शरीरे पुनः शरीरान्तरानुपपत्तेरप्रतिसंधिः‡ । अकर्मनिमित्ते तु शरीरसर्गे §भूतक्षयानुपपत्तेस्तद्वियोगानुपपत्तिरिति ॥

तददृष्टकारितमिति चेत्|| ¶पुनस्तत्प्रसङ्गो ऽपवर्गे ॥ ७२ ॥

अदर्शनं खल्वदृष्टमित्युच्यते अदृष्टकारिता भूतेभ्यः **शरीरोत्पत्तिः । न जात्वनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यति तच्चास्य दृश्यं द्विविधं विषयश्च नानात्वं चाव्यक्तात्मनोस्तदर्थः†† शरीरसर्गः तस्मिन्नवसिते चरितार्थानि भूतानि न शरीरमुत्पादयन्तीत्युपपन्नः शरीरवियोग इति । एवं चेन्मन्यसे पुनस्तत्प्रसङ्गो ऽपवर्गे पुनः शरीरोत्पत्तिः प्रसज्यत इति या चानुत्पन्ने

---

* सर्वं सर्वमिति २ ।

† न केवलमकर्मनिमित्ते शरीरसर्गे साधारणविग्रहत्वं दोषः अपि तु मोक्षो ऽपि न स्यादिति दर्शयितुं स्वपक्षे मोक्षमुपपादयति । ता॰ टी॰ ।

‡ शरीरान्तरानुत्पत्तिरप्रतिसन्धिरिति २ ।

§ भूतरूपेति २ ।

|| उपभोगशब्दादिदर्शने प्रकृतिपुरुषभेदादर्शनं चादृष्टमुच्यते, तत्कारितमित्यर्थः । ता॰ टी॰ ।

¶ ५ सूत्रद्वयम् ।

** भूतद्वयमुपलक्षणार्थम् । ता॰ टी॰ ।

†† आत्मानात्मनोरिति २ ।

शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता या चापवर्गे शरीरनिवृत्तौ दर्शनानुत्प-त्तिरदर्शनभूता नैतयोरदर्शनयोः क्व चिद्विशेष इत्यदर्शनस्यानिवृत्तेरपवर्गे* पुनः शरीरोत्पत्तिप्रसङ्ग इति (चरितार्थता विशेष इति चेत्) ।

## न करणाकरणयोरारम्भदर्शनात् ॥ ७३ ॥

चरितार्थानि भूतानि दर्शनावसानान्न शरीरान्तरमारभन्त इत्ययं विशेष एवं चेदुच्यते न करणाकरणयोरारम्भदर्शनात् । चरितार्थानां †भूतानां विषयोपलब्धिकरणात्पुनःपुनः शरीरारम्भो दृश्यते प्रकृतिपुरुषयोर्नानात्वदर्श-नस्याकरणान्निरर्थकः शरीरारम्भः पुनःपुनर्दृश्यते । तस्मादकर्मनिमित्तायां भूतसृष्टौ‡ न दर्शनार्था शरीरोत्पत्तिर्युक्ता युक्ता तु कर्मनिमित्त सर्गे दर्शनार्था शरीरोत्पत्तिः । कर्मविपाकः संवेदनं दर्शनमिति तददृष्टकारितमिति चेत् कस्य चिद्दर्शनमदृष्टं नाम परमाणूनां गुणविशेषः क्रियाहेतुस्तेन प्रेरिताः परमाणवः संमूर्छिताः शरीरमुत्पादयन्तीति तन्मनः§ समाविशति स्वगुणेनादृष्टेन प्रेरितं‖ समनस्के शरीरे द्रष्टुरुपलब्धिर्भवतीति । एतस्मिन् वै दर्शने गुणा-नुच्छेदात्पुनस्तत्प्रसङ्गो ऽपवर्गे ऽपवर्गे शरीरोत्पत्तिः परमाणुगुणस्यादृष्ट-स्यानुच्छेद्यत्वादितिपृ ।

## मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७४ ॥

मनोगुणेनादृष्टेन समावेशिते मनसि संयोगव्युच्छेदो** न स्यात् तत्र†† किंकृतं शरीरादपसर्पणं मनस इति । (तदिदं दृष्टान्तस्य साध्यसमत्वमभिधी-यते इति अथ ¶ नाकृताभ्यागमप्रसङ्गाद् अनुपपन्नता दृष्टान्ते)‡‡ कर्माशयक्षये ¶ §§कर्माशयान्तराद्विपच्यमानादपसर्पणोपपत्तिरिति । अदृष्टादेवापसर्पणमिति

* यथा प्रागदर्शनमेवं निरोधसमाधेः पश्चादप्यदर्शनमित्यपवृक्तो ऽपि पुनः संसरेदित्यर्थः । ता॰ टी॰ । ( ) नास्ति ३ चरितार्थताविशेष इति चेदिति १ । ४ ।

† भानानामिति ३ । ‡ भूतसृष्टाविति ३ । § तत्र मन॰ ३ । ५ । ‖ प्रेरिते ३ । ४ ।

§ अपरे त्वार्हता अदृष्टं परमाणुगुणं वर्णयन्ति पार्थिवादीनामणूनां मन-सश्च गुणो ऽदृष्टं तत्र पार्थिवाद्या अणवः स्वादृष्टप्रयुक्ताः शरीरमारभन्ते मनश्च स्वगुणप्रयुक्तं शरीरमाविशति तच्च स्वकादेवादृष्टात् पुद्गलस्य सुखदुःखोपभोगं साधयति न ¶ पुद्गलस्य धर्मो ऽदृष्टमिति मन्यन्ते तेषामपि दिगम्बराणां पुनस्त-त्प्रसङ्गो ऽपवर्ग एतद्रुपपादयति । ता॰ टी॰ । ** संयोगाव्युच्छेद इति ३ ।

†† तत्र ३ । ‡‡ ( ) नास्त्येतत् ३ । ¶ कर्मान्तरादिति ३ ।

चेद् यो ऽदृष्टः शरीरोपसर्पणहेतुः स एवापसर्पणहेतुरपीति* । नैकस्य जीवनप्रायणहेतुत्वानुपपत्तेः । एवं च सति एको दृष्टं जीवनप्रायणयोर्हेतुरिति प्राप्तं नैतदुपपद्यते ।

†नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥ ७५ ॥

विपाकसंवेदनात् कर्माशयक्षये शरीरपातः प्रायणं कर्माशयान्तराच्च पुनर्जन्म भूतमात्रात्तु कर्मनिरपेक्षात् शरीरोत्पत्तौ कस्य क्षयात् शरीरपातः प्रायणमिति प्रायणानुपपत्तेः खलु वै नित्यत्वप्रसङ्गं‡ विद्मः । यादृच्छिके तु प्रायणे प्रायणभेदानुपपत्तिरिति । पुनस्तत्प्रसङ्गो ऽपवर्ग इत्येतत्समाधित्सुराह ।

§अणुश्यामतानित्यत्ववदेतत्स्यात् ॥ ७६ ॥

यथा अणोः श्यामता नित्या अग्निसंयोगेन प्रतिबद्धा न पुनरुत्पद्यते एवमदृष्टकारितं शरीरमपवर्गे पुनर्नोत्पद्यत इति ।

नाकृताभ्यागमप्रसङ्गात् ॥ ७७ ॥

नायमस्ति दृष्टान्तः, कस्मात् अकृताभ्यागमप्रसङ्गात् । अकृतं|| प्रमाणतो ऽनुपपन्नं तस्याभ्यागमो ऽभ्युपपत्तिर्व्यवसायः एतच्च श्रद्दधानेन प्रमाणतो ऽनुपपन्नं मन्तव्यम् । तस्मान्नायं दृष्टान्तो न प्रत्यक्षं न चानुमानं किं चिदुच्यत इति । तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयत इति¶ । अथ वा **नाकृताभ्यागम-

---

* अपसर्पणं मरणम् इति २।

† ननु सदकारणं नित्यमिति कथं शरीरं सकारणं नित्यं भवेदित्यत आह । ता॰ टी॰ ।

‡ प्रायणानुपपत्तिं ब्रूमो विनाशानुपपत्तेरित्यर्थः । ता॰ टी॰ ।

§ अकारणत्वादित्यस्य हेतोरनैकान्तिकत्वेन प्रत्यवतिष्ठते । ता॰ टी॰ ।

|| प्रमाणेनाविषयीकृतमकृतं प्रत्युत प्रत्यक्षागमविप्रतिषिद्धमिति यावत् । ता॰ टी॰ ।

¶ न च परमाणुश्यामता ऽप्यकारणा पार्थिवरूपत्वाल्लोहितादिवदित्यनुमानेन तस्या अपि पाकजत्वाभ्युपगमादिति भावः । ता॰ टी॰ ।

** यथाश्रुति वा सूत्रार्थः । अकृतस्य कर्मणः फलोपभोगप्रसङ्गादिति । यदा खलु परमाणुगुणा एव नित्याः शरीराद्यारम्भकास्तदासौ नित्यत्वान्न केन चित्क्रियते तस्याकृतस्यैव फलं पुरुषैरुपभुज्येत ततश्चायमास्तिकानां विहितनिषिद्धप्रवृत्तिनिचयो ऽनर्थकः शास्त्रप्रणयनं चानर्थकं भवेदिति भावः । ता॰ टी॰ ।

प्रसङ्गाद् अणुश्यामतादृष्टान्तेनाकर्मनिमित्तां शरीरोत्पत्तिं समादधानस्याकृताभ्यागमप्रसङ्गः । अकृते सुखदुःखहेतौ कर्मणि पुरुषस्य सुखं दुःखमभ्यागच्छतीति प्रसज्येत । ओमिति ब्रुवतः प्रत्यक्षानुमानागमविरोधः । प्रत्यक्षविरोधस्तावद्भिन्नमिदं सुखदुःखं प्रत्यात्मवेदनीयत्वात् प्रत्यक्षं सर्वशरीरिणाम् । को भेदः तीव्रं मन्दं चिरमाशु नानाप्रकारमेकप्रकारमिति एवमादिर्विशेषः । न चास्ति प्रत्यात्मनियतः सुखदुःखहेतुविशेषः न चासति हेतुविशेषे फलविशेषो दृश्यते । कर्मनिमित्ते तु* सुखदुःखयोगे कर्मणां तीव्रमन्दतोपपत्तेः कर्मसञ्चयानां चोत्कर्षापकर्षभावान्नानाविधैकविधभावाच्च कर्मणां सुखदुःखभेदोपपत्तिः । सोऽयं हेतुभेदाभावाद् दृष्टः सुखदुःखभेदो न स्यादिति प्रत्यक्षविरोधः । तथा ऽनुमानविरोधः दृष्टं हि पुरुषगुणव्यवस्थानात्सुखदुःखव्यवस्थानम् । यः खलु चेतनावान् साधननिर्वर्तनीयं सुखं बुद्ध्वा तदीप्सन् साधनावाप्तये प्रयतते स सुखेन युज्यते न विपरीतः । यश्च साधननिर्वर्तनीयं दुःखं बुद्ध्वा तज्जिहासुः साधनपरिवर्जनाय यतते† स च दुःखेन त्यज्यते न विपरीतः । अस्ति चेद प्रयत्नमन्तरेण चेतनानां सुखदुःखव्यवस्थानं तेनापि चेतनगुणान्तरव्यवस्थाकृतेन‡ भवितव्यमित्यनुमानम् । तदेतदकर्मनिमित्ते सुखदुःखयोगे विरुध्यते इति । तच्च गुणान्तरमसंवेद्यत्वाददृष्टं विपाककालानियमाच्चाव्यवस्थितम् । बुद्ध्यादयस्तु संवेद्याश्चापवर्गिणश्चेति । अथागमविरोधः बहु खल्विदमार्षमृषीणामुपदेशजातमनुष्ठानपरिवर्जनाश्रयमुपदेशफलं च शरीरिणां वर्णाश्रमविभागेनानुष्ठानलक्षणा प्रवृत्तिः परिवर्जनलक्षणा निवृत्तिः तच्चोभयमेतस्या§ दृष्टौ नास्ति कर्म सुचरितं दुश्चरितं वा कर्मनिमित्तः पुरुषाणां सुखदुःखयोग|| इति विरुध्यते । सेयं पापिष्ठानां मिथ्यादृष्टिरकर्मनिमित्ता शरीरसृष्टिरकर्मनिमित्तः सुखदुःखयोग¶ इति ।

इति वात्स्यायनीये न्यायभाष्ये तृतीयोऽध्यायः ॥ ३ ॥



* तुर्नास्ति ग । † यतेत घ । ङ । ‡ न कृतेनेति ग । ङ ।
§ एतस्यादृष्टे इति ग । || प्रयोग इति ग । ¶ प्रयोग इति ग ।

२४

मनसोनन्तरा प्रवृत्तिः* परीक्षितव्या तत्र खलु यावद्धर्माधर्माश्रयशरीरादि परीक्षितं सर्वा सा† प्रवृत्तेः परीक्षेत्याह ।

## प्रवृत्तिर्यथोक्ता ॥ १ ॥

तथा परीक्षितेति । प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह ।

## तथा दोषाः ॥ २ ॥

परीक्षिता इति । बुद्धिसमानाश्रयत्वा‡दात्मगुणाः प्रवृत्तिहेतुत्वात् पुनर्भवप्रतिसंधानसामर्थ्याच्च संसारहेतवः संसारस्यानादित्वाद्नादिना प्रबन्धेन प्रवर्तन्ते मिथ्याज्ञाननिवृत्तिस्तत्त्वज्ञानात् तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदे ऽपवर्ग इति । §प्रादुर्भावतिरोधानधर्मका इत्येवमाद्युक्तं दोषाणामिति । प्रयत्नेनालक्षणा दोषा इत्युक्तं तथा चेमे मानेर्ष्यासूयाविचिकित्सामत्सरादयः ते कस्मान्नोपसंख्यायन्तइत्यत आह ।

## तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तेषां दोषाणां त्रयो राशयस्त्रयःपक्षाः रागपक्षः कामो‖ मत्सरः स्पृहा तृष्णा लोभ इति द्वेषपक्षः¶ क्रोध ईर्ष्या ऽसूया द्रोहो ऽमर्ष इति** मोहपक्षो ††मिथ्याज्ञानं विचिकित्सा मानः प्रमाद‡‡ इति त्रैराश्यान्नोपसंख्यायन्तइति । लक्षणस्य तर्ह्यभेदात्त्रित्वमनुपपन्नं नानुपपन्नं रागद्वेषमोहार्थान्तरभावात्§§ आसक्तिलक्षणो रागः अमर्षलक्षणो द्वेषः मिथ्याप्रतिपत्तिलक्षणो मोह इति । एतत्प्रत्यात्मवेदनीयं सर्वशरीरिणां विजानात्ययं शरीरी रागमुत्पन्नमस्ति मेऽध्यात्मं

---

* ऽनन्तरमिति १ । ३ । ५ ।   † पूर्वा सा २ । ४ । सर्वासाम् १ ।

‡ अभीष्टानभीष्टविषयानुचिन्तनप्रभवा वक्ष्यमाणा दोषा न बुद्ध्यधिकरणा भवितुमर्हन्ति तथा सति चैत्रस्य विषयानुचिन्तने मैत्रस्य द्वेषादिप्रसङ्गादिति भावः ।

§ निरोधधर्मका इति १ । ४ ।

‖ कामः स्त्रीगतो ऽभिलाषः । प्रतीयमानवस्त्वपरित्यागेच्छा मत्सरः । अस्वपरस्वादानेच्छा स्पृहा । पुनर्भवप्रतिसंधानहेतुभूता तृष्णा । प्रमाणविरुद्धपरद्रव्यापहारेच्छा लोभः । न्या॰ वा॰ ।   ¶ इति द्वेषपक्ष इति ४ ।

** शरीरेन्द्रियाधिष्ठानवैक्लव्यहेतुः क्रोधः । साधारणे वस्तुनि पराभिनिवेशप्रतिषेधेच्छा ईर्ष्या । परगुणाक्षमता असूया । परापकारेच्छा द्रोहः । अपकाराक्षमता अमर्षः । न्या॰ वा॰ ।   †† मोहपक्ष इति ४ ।

‡‡ संशयो विचिकित्सा । विद्यमानाविद्यमानगुणाध्यारोपेणात्मोत्कर्षप्रत्ययो मानः । कर्तव्याकरणं प्रमादः ।   §§ आसक्तिलक्षणो राग इति १ ।

रागधर्म इति विरागं च विजानाति नास्ति मेऽध्यात्मं रागधर्म इति एवमितरयोरपीति । मानेर्ष्यासूयाप्रभृतयस्तु त्रैराश्यमनुपतिता इति नोपसंख्यायन्ते ।

## नैकप्रत्यनीकभावात्* ॥ ४ ॥

नार्थान्तरं रागादयः कस्मादेकप्रत्यनीकभावात् । तत्त्वज्ञानं सम्यङ्मतिरार्यप्रज्ञा संबोध इत्येकमिदं प्रत्यनीकं त्रयाणामिति ।

## व्यभिचारादहेतुः ॥ ५ ॥

एकप्रत्यनीकाः पृथिव्यां श्यामादयोऽग्निसंयोगेनैकेन एकयोनयश्च पाकजा इति† सति चार्थान्तरभावे ।

## तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः‡ ॥ ६ ॥

मोहः पापः पापतरो वा द्वावभिप्रेत्योक्तं कस्मात् नामूढस्येतरोत्पत्तेः अमूढस्य रागद्वेषौ नोत्पद्येते मूढस्य तु यथासंकल्पमुत्पत्तिर्विषयेषु रञ्जनीयाः संकल्पा रागहेतवः कोपनीयाः संकल्पा द्वेषहेतवः उभये च संकल्पा न मिथ्याप्रतिपत्तिलक्षणत्वान्मोहादन्ये ताविमौ मोहयोनी रागद्वेषाविति । तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावोपपत्तिः । एवं च कृत्वा तत्त्वज्ञानाद् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति§ व्याख्यातमिति । प्राप्तस्तर्हि ।

## निमित्तनैमित्तकभावादर्थान्तरभावो दोषेभ्यः|| ॥ ७ ॥

अन्यद्धि निमित्तमन्यच्च नैमित्तिकमिति दोषनिमित्तत्वाददोषो मोह इति ।

## ¶न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥

---

* रागादय ऐक्यभाजः एकतत्त्वज्ञानविरुद्धत्वात् यथैकसंयोगविरुद्धो नानाहेतुकोऽपि विभाग इति ।

† एकयोनित्वादिके-रागादयः शब्दवदित्यप्यनेनैव प्रत्युक्तम् । एकयोनयो रूपादयो न चैषामेकत्वमिति । न्या० वा० ।

‡ अमूढस्येतरोत्पत्तिर्न भवति यत इत्यर्थे नामूढस्येतरोत्पत्तेरित्युक्तम् । ता० टी० ।

§ तदनन्तरापायादिति वृत्तिकारसम्मतः पाठः ॥ ।

|| अदोषो मोहः दोषनिमित्तत्वाद्रूपादिवदिति न्यायसंभवात् ।

¶ दोषनिमित्तत्वादिति हेतोरप्रयोजकत्वमाह । ता० टी० ।

प्रवर्त्तनालक्षणा दोषा इत्यनेन दोषलक्षणेनावरुध्यते दोषेषु मोह इति।

## निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः* ॥ ९ ॥

द्रव्याणां गुणानां वा ऽनेकविधविकल्पो निमित्तनैमित्तिकभावे तुल्यजातीयानां दृष्ट इति।

दोषानन्तरं प्रेत्यभावस्तस्यासिद्धिः। आत्मनो नित्यत्वात्। न खलु नित्यं किं चिज्जायते म्रियतइति जन्ममरणयोर्नित्यत्वादात्मनो ऽनुपपत्तिः उभयं च प्रेत्यभाव इति तत्राय सिद्धानुवादः।

## आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

नित्योयमात्मा प्रैति पूर्वशरीरं जहाति म्रियतइति प्रेत्य च पूर्वशरीरं हित्वा भवति जायते शरीरान्तरमुपादत्तइति तच्चैतदुभयं पुनरुत्पत्तिः प्रेत्यभावः (इत्यत्रोक्तं पूर्वशरीरं हित्वा शरीरान्तरोपादानं प्रेत्यभाव) इति तच्चैतन्नित्यत्वे संभवतीति। यस्य तु सत्त्वोत्पादः सत्त्वनिरोधः प्रेत्यभावः तस्य कृतहानमकृताभ्यागमश्च दोषः। उच्छेदहेतुवादे ऋष्युपदेशाश्चानर्थका इति। कथमुत्पत्तिरिति चेत्।

## व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥

केन प्रकारेण किंधर्मकात्कारणाद्व्यक्तं शरीराद्युत्पद्यतइति व्यक्ताद्भूतसमाख्यातात्पृथिव्यादितः परमसूक्ष्मान्नित्याद्व्यक्तं शरीरेन्द्रियविषयोपकरणाधारं प्रज्ञातं द्रव्यमुत्पद्यते। व्यक्तं च खल्विन्द्रियग्राह्यं तत्सामान्यात्कारणमपि व्यक्तम्। किं सामान्यम् रूपादिगुणयोगः रूपादिगुणयुक्तेभ्यः पृथिव्यादिभ्यो नित्येभ्यो रूपादिगुणयुक्तं शरीराद्युत्पद्यते†। प्रत्यक्षप्रामाण्याद् दृष्टो हि रूपादिगुणयुक्तेभ्यो मृत्प्रभृतिभ्य‡स्तथाभूतस्य द्रव्यस्योत्पादः

---

* यथा बुद्धिर्बुद्ध्यन्तरनिमित्तं बुद्धिजातीया च। तुर्यादयो द्रव्यनिमित्त द्रव्यजातीयाः। नोदनाद्यभिघातसंयुक्तसंयोगाः संस्कारस्य गुणा इति न्या॰ वा।

( ) २ पु॰ नास्ति।

† कारणस्यापि कपालद्वयसंयोगस्य रूपवद्घटादिकारणत्वदर्शनादनैकान्त इति चेन्न गवादेर्व्यक्तस्य रूपादिमत्सामग्रीपूर्वकत्वव्याप्तेः। ‡ प्रकृतिभ्य इति ४।

तेन चादृष्टस्यानुमानमिति । रूपादीनामन्वयदर्शनात् प्रकृतिविकारयोः पृथिव्यादीनां नित्यानामतीन्द्रियाणां कारणभावोऽनुमीयतइति ।

## न घटाद् घटानिष्पत्तेः ॥ १२ ॥

इदमपि प्रत्यक्षं न खलु व्यक्ताद् घटाद्व्यक्तो घट उत्पद्यमानो दृश्यते इति व्यक्ताद् व्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति ।

## व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

न ब्रूमः सर्वं सर्वस्य कारणमिति किन्तु यदुत्पद्यते व्यक्तं द्रव्यं तत्तथाभूतादेवोत्पद्यतइति । व्यक्तं च तन्मृद् द्रव्यं कपालसंज्ञकं यतो घट उत्पद्यते न चैतन्निह्नुवानः क्वचिदभ्यनुज्ञां लब्धुमर्हतीति* । तदेतत्तत्त्वम् । अतः परं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते ।

## अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥

असतः सदुत्पद्यतइत्ययं पक्षः कस्मात् । उपमृद्य प्रादुर्भावात् उपमृद्य बीजमङ्कुर उत्पद्यते नानुपमृद्य न चेद्बीजोपमर्दोऽङ्कुरकारणम् अनुपमर्देऽपि बीजस्याङ्कुरोत्पत्तिः स्यादिति । अत्राभिधीयते ।

## व्याघातादप्रयोगः† ॥ १५ ॥

उपमृद्य प्रादुर्भावादित्ययुक्तः प्रयोगो व्याघातात् । यदुपमृद्गाति‡ न तदुपमृद्य प्रादुर्भवितुमर्हति विद्यमानत्वात् । यच्च प्रादुर्भवति न तेनाप्रादुर्भूतेनाविद्यमानेनोपमर्द इति ।

## नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥

अतीते चानागते चाविद्यमाने कारकशब्दाः§ प्रयुज्यन्ते । पुत्रो जनिष्यते जनिष्यमाणं पुत्रमभिनन्दति पुत्रस्य जनिष्यमाणस्य नाम करोति अभूत्कुम्भो भिन्नं कुम्भमनुशोचति भिन्नस्य कुम्भस्य कपालानि|| अजाताः

---

* प्रत्यक्षकारणापलापी न कस्मिन्नपि दर्शने संवादं लब्धुं योग्यः स्यादित्यर्थः ।

† प्रादुर्भावस्योपमर्दानन्तरकालिकत्वेनोपमर्दात्पूर्वमविद्यमानस्योपमर्दे हेतुत्वोक्तिर्व्याहतेत्यर्थः ।

‡ यदुपमृद्गाति इति १ । ४ । ५ ।

§ कारकशब्दः प्रयुज्यते २ ।

|| भिन्नस्य कुम्भस्य कपालानीति यद्यपि न साक्षात्कारकशब्दस्तथापि षष्ठी संबन्धाभिधानात्तस्य क्रियागर्भत्वात्क्रियायाश्च कारकनान्तरीयकत्वात्पारम्पर्येण कारकशब्दता द्रष्टव्या । ता॰ टी॰ ।

पुत्राः पितरं तापयन्तीति बहुलं भाक्ताः प्रयोगा दृश्यन्ते । का पुनरियं भक्तिः आनन्तर्यं भक्तिः आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भावार्थः प्रादुर्भविष्यन्नङ्कुर उपमृद्नाति*ति भाक्तं कर्तृत्वमिति ।

न विनष्टेभ्यो ऽनिष्पत्तेः† ॥ १७ ॥

न विनष्टाद्बीजादङ्कुर उत्पद्यतइति तस्मान्नाभावाद्भावोत्पत्तिरिति ।

क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥

उपमर्द्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः स खल्वभावाद्भावोत्पत्तेर्हेतुर्निर्दिश्यते स च न प्रतिषिध्यतइति‡ । व्याहतव्यूहानामवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद् द्रव्यनिष्पत्तिर्नाभावात् । बीजावयवाः कुतश्चिन्निमित्तात्प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते व्यूहान्तरादङ्कुर उत्पद्यते । दृश्यन्ते खलु अवयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः । न चानिवृत्ते पूर्वव्यूहे बीजावयवानां शक्यं व्यूहान्तरेण भवितुमित्युपमर्द्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः तस्मान्नाभावाद्भावोत्पत्तिरिति । न चान्यद्बीजावयवेभ्योऽङ्कुरोत्पत्तिकारणमित्युपपद्यते बीजोपादाननियम इति§ अथापर आह ।

ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्‖ ॥ १९ ॥

पुरुषोऽयं समीहमानो नावश्यं समीहाफलं प्राप्नोति तेनानुमीयते पराधीनं पुरुषस्य कर्मफलाराधनमिति यदधीनं स ईश्वरः । तस्मादीश्वरः कारणमिति ।

---

* उपमर्द्नातीति क ।

† बीजविनाशश्चेदङ्कुरोत्पादहेतुस्तर्हि विनष्टे बीजे तदवयवेषु परस्परविच्छिन्नेषु असति तेषां व्यूहान्तरे कस्मादङ्कुरो न भवति सति तु तेषां व्यूहे भवति तस्माद्विनष्टेभ्यो ऽङ्कुरानुत्पत्तेरसति व्यूहे न बीजविनाशः कारणमिति सूत्रार्थः । ता· टी· ।

‡ अनन्यप्रयुक्तमानन्तर्यं कार्यकारणभावसाधनमिदं तु व्यूहान्तरानन्तर्यप्रयुक्तमिति नाभावस्य कारणत्वं गमयितुमर्हतीत्यर्थः । ता· टी· ।

§ बीजावयवोपादाने ऽवर्जनीयतया बीजनाशस्य देशकालप्रत्यासत्तिमात्रमित्यर्थः । ता· टी· ।

‖ मा भूदयं नामरूपप्रपञ्चः शून्यतोपादानो ऽपि तु ब्रह्मोपादानो भविष्यति ब्रह्मैव प्रपञ्चरूपेण परिणमते मृत्तिकेव घटशरावोदञ्चनादिभावेन । न चैवं नित्यत्वव्याघातः परिणामे ऽपि तत्त्वानपायाद् तल्लक्षणत्वाच्च नित्यतायाः । यदाह

न पुरुषकर्माभावे फलानिष्पत्तेः* ॥ २० ॥

ईश्वराधीना चेत्फलनिष्पत्तिः स्यादपि तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्येतेति† ।

‡तत्कारितत्वादहेतुः ॥ २१ ॥

पुरुषकारमीश्वरोऽनुगृह्णाति§ फलाय पुरुषस्य यतमानस्येश्वरः फलं संपादयतीति । यदा न संपादयति तदा पुरुषकर्माफलं भवतीति । तस्मा-

---

यस्मिंस्तत्त्व न विहन्यते तदपि नित्यमित्येकं दर्शनम् । अपरं च ब्रह्मैवानाद्यविद्योपधानभेदान्नामरूपप्रपञ्चभेदेन विवर्तते मुखमिवैकमनेकमणिकृपाणाद्युपाधिभेदादनेकविधप्रतिबिम्बभेदेनेति । तदेतद्दर्शनद्वयमनेन सूचितम् । ईश्वरो ब्रह्म ईशनायोगात् । चेतनाशक्तिः क्रियाशक्तिश्चेशना सा चास्ति ब्रह्मणीति ब्रह्मेश्वरः कारणं जगतः । श्रूयते हि तदैक्षत बहुस्यां प्रजायेयेति । सा चेयं श्रुतिः चेतनस्य जगत्कारणतामाह । न चाभावो वा प्रधानं वा परमाणवो वा चेतयन्ते । ननु जीवा एव चेतनास्तत्कर्मनिबन्धनो नामरूपप्रपञ्चो भविष्यति कृतमत्र भगवतेश्वरेणेत्यत उक्तं पुरुषकर्माफल्यदर्शनात् । पुरुषश्चेच्चेतयते नैव निष्फलं कर्मारभेत । निष्फलं विद्वान् प्रवर्तमानः कथं चेतनो नाम । तस्मात्पुरुषकर्माफल्यदर्शनादीश्वरः कारणमित्यर्थः । ता० टी० ।

* न तावन्मृत्तिकेव नामरूपप्रपञ्चरूपेण ब्रह्म परिणमते । तद्धि सर्वात्मना वा परिणमेदेकदेशेन वा तत्र सर्वात्मना परिणामे तत्स्वभावविघातादनित्यत्वम् । एकदेशेन परिणामे सावयवत्वात्तद्देशानित्यत्वम् । अथ तत्त्वेनानुगतस्यापरिणामस्तत्त्व ब्रह्म न तर्हि ब्रह्मणः परिणामः । न च निर्भागस्यैकस्य स्वसंवेदनप्रत्यक्षस्य विपरीतज्ञानगोचरत्वसंभवः । सामान्यतो ग्रहे रूपविशेषाग्रहे च तदन्यरूपारोपेण विभ्रमो दृष्टः शुक्तिरजतादौ । न जातु शुक्तिरूपं विद्वान् रजतमिति विपर्यस्यति । न च निरंशे स्वसंवेदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रहः सामान्यग्रहो वा भवति तस्मादीश्वरो जगद्रूपेण विवर्तत इत्यप्ययुक्तम् । निमित्तं स्यादीश्वरो जगतः । न चेदनपेक्ष एव जगत्कारणमित्युच्यते तत्रेदमुपतिष्ठते । ता० टी० ।

† तत एव कर्मलोपोऽनिर्मोक्षश्च । ईश्वरस्यैकरूपत्वादेकरूपा क्रियेति । अथेश्वरः कारणभेदानुविधानेन कार्यं निर्वर्तयति यदपेक्षते तदेव करोतीति प्राप्तं न हि कुलालो दण्डादि करोति । एवं कर्मसापेक्षश्चेदीश्वरो जगदुत्पत्तिकारणं स्यात्कर्मणीश्वरो नेश्वरः स्यात् । ता० टी० । तथा च तत्तत्कारणानि नेश्वरेण प्रयुज्यन्त इत्यनेकान्तो वक्ष्यमाणो हेतुरिति । ता० टी० ।

‡ तदेवमीश्वरोपादानत्वं ब्रह्मविवर्तत्वं च निरपेक्षेश्वरनिमित्तत्वं प्रत्याख्यायाभिमतं पक्षं गृह्णाति । ता० टी० ।

§ यद्यथाभूतं यस्य यदा विपाककालस्तत्तथा तदा विनियुङ्क्ते । न्या० वा०

दीश्वरकारितत्वादहेतुः* । पुरुषकर्माभावे फलानिष्पत्तेरिति † गुणविशिष्टमात्मान्तरमीश्वरः ‡तस्यात्म(कल्पा)त्कल्पान्तरानुपपत्तिः§ अधर्ममिथ्याज्ञानप्रमादहान्या धर्मज्ञानसमाधिसंपदा च विशिष्टमात्मान्तरमीश्वरः तस्य च धर्मसमाधिफलम् अणिमाद्यष्टविधमैश्वर्यम् । संकल्पानुविधायी चास्य धर्मः|| प्रत्यात्मवृत्तीन् धर्माधर्मसंचयान् पृथिव्यादीनि च भूतानि प्रवर्तयति । एवं च स्वकृताभ्यागमस्यालोपेन¶ निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदि-

* परमाणूपादानस्य जगतः पुरुषकर्मापेक्ष ईश्वरो निमित्तं यत्र तेनापेक्षणीयं पुरुषकर्म तदपीश्वरनिमित्तमेव । न च यदपेक्षते तस्यानिमित्तं वास्यादेस्तक्षसहकारिणस्तक्षनिमित्तकत्वदर्शनात् । तस्मादीश्वरकारितत्वात्पुरुषकारस्य तत्सहाय ईश्वरो निमित्तकारणं जगत इत्यस्य पक्षस्य निराकरणे पुरुषकर्माभावे फलानिष्पत्तेरित्यहेतुः निरपेक्षेश्वरनिमित्तत्वे तु हेतुरेवेत्यर्थः । ता० टी० ।

† संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एव तस्य गुणाः । न्या० वा० । बुद्धिवदिच्छाप्रयत्नावप्यस्य नित्यौ सकर्तृकत्वसाधनान्तर्गतौ मन्तव्यौ । ज्ञानचिकीर्षाप्रयत्नसमवायलक्षणत्वात्कर्तृत्वस्य । तेषां च परस्पराविनाभावादन्यतरसिद्धावितरयोः सिद्धिः । ता० टी० ।

‡ आत्मकल्पादित्यात्मप्रकारादात्मजातीयादिति यावत् । ता० टी० ।

( ) कल्पादिति २ नास्ति

§ नन्वात्मान्तराण्यनित्यज्ञानयोगीनि दृष्टानि तद्विलक्षणश्चेदीश्वरो नात्मजातीयो भवितुमर्हतीत्यत आह आत्मकल्पादिति । यद्यप्यात्मान्तराण्यनित्यज्ञानयोगीनि अयं च नित्यबुद्ध्यादियुक्तः तथाप्यात्मजातीय एव बुद्ध्यादिगुणयोगित्वात् । अन्यथा तोयादिपरमाणूनामतोयादित्वप्रसङ्गो नित्यरूपादियोगात् । करकादिगतानां रूपादीनामनित्यत्वोपलब्धेरिति । ता० टी० । ईश्वरसमवेतबुद्धेर्नित्यत्वं च धर्मिग्राहकमानेन सिद्धम् । बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्तन्त इति । अन्यनेन बुद्धिमत्त्वमात्रं सिध्यति न तु बुद्धेर्नित्यत्वमपीति चेन्न । प्रत्यर्थनियमाभावात् । ये खलु प्रत्यर्थनियता बुद्धिभेदास्ते शरीरादिकारणसंनिधाने सति भवन्ति न त्वियं प्रत्यर्थनियता युगपदनेककार्योत्पत्तिदर्शनात् । यथा स्थावरभेदस्यानेकस्य युगपदुत्पाद इति । ननु बुद्धिमत्त्वेनैव शरीरित्वमपीश्वरस्य स्याज्जीवानां तथा दर्शनादिति चेन्न । कल्प्यमानस्य शरीरस्यानित्यत्वाङ्गीकारे तस्य धर्मादिनिमित्तकत्वापत्तौ तत्तच्छरीरतदन्वयतदीश्वरस्यानीश्वरत्वप्रसङ्गः कारणस्य धर्मस्य नित्यत्वानित्यत्वविकल्पेनानवस्थाशरीरनित्यत्वयोरापत्तिश्च । शरीरस्य नित्यत्वे तु दृष्टविरोधस्य तदवस्थतया शरीरकल्पनावैयर्थ्यम् । बुद्धिनित्यत्वेनैव कार्योपपत्तेः । बुद्धित्वं शरीरव्याप्यमिति तु न । जन्यत्वस्योपाधित्वात् । ईश्वरबुद्धिचिकीर्षाकृतीनां नित्यत्वे युगपत्सर्वकार्योत्पादप्रसङ्गस्तु तत्तत्सहकारिधर्माधर्मकालादिघटितसामग्र्यधीनत्वेन निरसनीयः ।

|| नन्वस्य कर्मानुष्ठानाभावात्कुतो धर्मः । तथा चाणिमादिकमस्यैश्वर्यं कार्यरूपं विनैव कर्मणेत्यकृताभ्यागमप्रसङ्ग इत्यत आह । ता० टी० ।

¶ मा भूद् बाह्यानुष्ठानं संकल्पलक्षणानुष्ठानजनितधर्मफलमस्यैश्वर्यं जगन्निर्माणफलमिति नाकृताभ्यागमप्रसङ्ग इत्यर्थः । ता० टी० । ईश्वरस्य ज्ञानक्रियाशक्ती

तव्यम् आप्तकल्पश्चायं* यथा पिताऽपत्यानां तथा पितृभूत ईश्वरो भूतानाम् । न चात्मकल्पादन्यः कल्पः सम्भवति । न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुम्† । आगमाच्च ‡द्रष्टा बोद्धा सर्वज्ञाता ईश्वर इति । बुद्ध्यादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्त उपपादयितुम् । स्वकृताभ्यागमलोपेन§ च प्रवर्तमानस्यास्य यदुक्तं प्रतिषेधजातमकर्मनिमित्ते शरीरसर्गे तत्सर्वं प्रसज्यत इति । अपर इदानीमाह ।

---

त्यं त्वस्यैश्वर्यं नित्यमणिमादिकं त्वनित्यं तदभिप्रायं च भाष्यस्य धर्मफलत्वाभिधानम् । नात ऐश्वर्यनित्यत्वे धर्मवैयर्थ्यमनित्यत्वे तत्कारणकल्पनयाऽनवस्थेति चोद्यावकाशः । प्रत्यात्मवर्तिधर्माधर्मसंनिचयाधिष्ठानं संकल्पानुविधायिन ईश्वरधर्मस्य प्रयोजनम् । अभ्युपेत्येश्वरधर्ममेतदुक्तं भाष्यकृता । परमार्थतस्तु नेश्वरस्य धर्मसद्भावे प्रमाणमस्ति नित्याभ्यामेव ज्ञानक्रियाशक्तिभ्यां सकलकार्योत्पत्तिसिद्धेरित्याशयेन न चेश्वरधर्मोऽस्तीति वार्त्तिकमिति । ता० टी० ।

* स्यादेतत् । प्रयोजनं विना प्रेक्षावतां न प्रवृत्तिः । न च प्राप्तसकलप्रापणीयस्याप्यस्ति प्रापणीयं किंचिदीश्वरस्य तस्मात्कृतमस्य जगन्निर्माणेनेत्यत आह । आप्तकल्पश्चेति । स ह्यस्य भगवतः स्वार्थः परानुग्रहार्थे प्रवर्त्स्यतीत्यर्थः । ता० टी० ।

† प्रधानपरमाणुकर्माणि प्राक् प्रवृत्तेर्बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते ऽचेतनत्वाद्वास्यादिवदित्यनुमानेन ईश्वरो बुद्धिमत्त्वेनैव सिध्यति । तस्य बुद्ध्यनङ्गीकारे तु स एव न सिध्येदिति भावः ।

‡ द्रष्टा बोद्धेति २ ।

§ स्यादेतत् । यदि कारुण्यादीश्वरो सर्गनिर्माणे प्रवर्तते हन्त भोः सुखिनमेव सृजेन्न दुःखिनम् । न च विचित्रगतधर्माधर्मसहकारितया निर्माणवैचित्र्यं वाच्यमधर्मस्य तदनधिष्ठितस्य स्वकार्याकरणेन कारुणिकेनाधिष्ठानायोगात् । तस्मात्सुखिदुःखादिभेदेन जगद्वैचित्र्यदर्शनादनुकम्पाप्रयुक्त ईश्वरः करोतीत्यत आह । स्वकृताभ्यागमलोपेन प्रवर्तमानस्येति । अयमभिसंधिः । कारुणिको ऽप्ययमात्मान्तरातिशायिमहिमापि न वस्तूनां सामर्थ्यमन्यथाकर्तुं पारयति । तस्मादधर्मणोत्पत्तिमता नेश्वरप्रभावादपि नित्येन भवितुं युक्तं न च स्वफलविरोधिना फलप्रदाय विलम्बितुमपि शक्यम् । अतः क्षेत्रज्ञाना नियतिमलङ्घयतेश्वरेण नाधर्मः शक्यो ऽनधिष्ठातुं तस्मात्कारुणिकोऽप्ययं वस्तुस्वभावमनुविधीयमानो धर्माधर्मसहकारी जगद्वैचित्र्यं विधत्ते । तदिदमुक्तं स्वकृतेत्यादि । पुरुषैर्यत्कृतं तत्फलाभ्यागमलोपेन प्रवर्तमानस्येत्यर्थः । ता० टी० । ईश्वरस्य प्रवृत्तिः क्रीडार्थमित्येके । क्रीडाया अप्यानन्दफलकत्वादिच्छापरकामस्य क्रीडानुपपत्तेर्विभूतिख्यापनार्थमित्यन्ये । विभूतिख्यापने ऽपि प्रयोजनानुपपत्तेः तत्स्वाभाव्यात्प्रवर्तत इत्यपरे इति वार्त्तिकम् । प्रवृत्तिस्वाभाव्ये ऽपि सहकारिधर्माधर्मकालविशेषसंनिधानासंनिधानवशेन युगपत्सर्वकार्यानुत्पाद उपपादनीयः । कर्मेश्वरानुमानबाधेवाक्षेपनिराकरणं च वार्त्तिकतात्पर्यटीकयोर्विस्तरेण कृतं विस्तरभयान्नेहोद्धृतं तत एवावगन्तव्यम् ।

## अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्* ॥ २२ ॥

अनिमित्ता शरीराद्युत्पत्तिः (कण्टकतैक्ष्ण्यादिदर्शनात्) कण्टकस्य तैक्ष्ण्यं पर्वतधातूनां चित्रता †ग्राव्णां श्लक्ष्णता निर्निमित्तं चोपादानं दृष्टं तथा शरीरसर्गोपीति ।

## अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥

अनिमित्ततो भावोत्पत्तिरित्युच्यते यतश्चोत्पद्यते तन्निमित्तम् । अनिमित्तस्य निमित्तत्वान्नानिमित्ता भावोत्पत्तिरिति ।

## निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥

अन्यद्धि(निमित्तमन्यच्च)‡ निमित्तप्रत्याख्यानं न च प्रत्याख्यानमेव प्रत्याख्येयं यथा ऽनुदकः कमण्डलुरिति नोदकप्रतिषेध उदकं भवतीति । स खल्वयं§ वादो ऽकर्मनिमित्तः शरीरादिसर्ग इत्येतस्मान्न भिद्यते अभेदात्तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्य इति । अन्ये तु मन्यन्ते ।

## सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥

किमनित्यं नाम यस्य कदा चिद् भावस्तदनित्यम् । उत्पत्तिधर्मकमनुत्पन्नं नास्ति विनाशधर्मकं ‖चाविनष्टं नास्ति । किं पुनः सर्वं भौतिकं च शरीरादि अभौतिकं च बुद्ध्यादि तदुभयमुत्पत्तिविनाशधर्मकं विज्ञायते तस्मात्तत्सर्वमनित्यमिति ।

## नानित्यतानित्यत्वात् ॥ २६ ॥

यदि तावत्सर्वस्यानित्यता नित्या तन्नित्यत्वान्न सर्वमनित्यम् । अथानित्या तस्यामविद्यमानायां सर्वं नित्यमिति ।

---

* कण्टकादीनां संस्थानभेदवतां निमित्तादर्शनेनानिमित्ततां मन्यानस्तेनैव दृष्टान्तेन शरीरादीनामपि संस्थानवतामनिमित्ततां मन्यानः पूर्वपक्षयति । अनिमित्तत इति । अदृश्यमाननिमित्तानां शरीरकण्टकादीनां पक्षनिःक्षेपात्पक्षेण व्यभिचारानुद्भावनादुद्भावने वा सर्वानुमानोच्छेदप्रसङ्गात्सर्वत्र तस्य सुलभत्वादुभयसिद्धनिमित्तवत्पटदृष्टान्तेन संस्थानवत्त्वात् कण्टकशरीरादीनामपि निमित्तवत्त्वमिति राद्धान्तः । ता· टी· । ( ) २ पु· नास्ति । † पाषाणः इति च । ५ । ( ) ‡ नास्ति ३ ।

§ कस्मात्पुनः पूर्वपक्षः स्वयं सूत्रकारेण न निराकृत इत्यत आह । ता· [illegible] ।

‖ त्वेति ५ ।

तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥

तस्या अनित्यतायाः अप्यनित्यत्वम् । कथं यथा अग्निर्दाह्यं विनाश्यानुविनश्यति एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यतीति ।

नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्थानात् ॥ २८ ॥

अयं खलु वादो नित्यं प्रत्याचष्टे नित्यस्य च प्रत्याख्यानमनुपपन्नम् । कस्मात् यथोपलब्धि व्यवस्थानात् यस्योत्पत्तिविनाशधर्मकत्वमुपलभ्यते प्रमाणतस्तदनित्यं यस्य नोपलभ्यते तद्विपरीतम् । न च परमसूक्ष्माणां भूतानामाकाशकालदिगात्ममनसां तद्गुणानां च केषां चित्सामान्यविशेषसमवायानां चोत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते *तस्मान्नित्यान्येतानीति । अयमन्य एकान्तः ।

सर्वं नित्यं पञ्चभूतनित्यत्वात् † ॥ २९ ॥

भूतमात्रमिदं सर्वं तानि च नित्यानि भूतोच्छेदानुपपत्तेरिति ।

‡नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥

उत्पत्तिकारणं चोपलभ्यते विनाशकारणं च तत्सर्वनित्यत्वे व्याहन्यतइति ।

§तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥

यस्योत्पत्तिविनाशकारणमुपलभ्यतइति मन्यसे न तद्भूतलक्षणहीनमर्थान्तरं गृह्यते भूतलक्षणावरोधाद्भूतमात्रमिदमित्ययुक्तोऽयं प्रतिषेध इति ।

---

* सर्वस्य पक्षत्वे परमाण्वाकाशादिषु हेत्वभावेन भागासिद्धिः कस्य चित्पक्षत्वे सिद्धसाधनमिति वार्तिकम् ।

† पञ्चभूतात्मकं ह्यन्येतद् गोघटादिकार्यमुपलभ्यते । व्यपदिशन्ति हि मृद् घटो मृच्छरीरमिति । भूतानि च नित्यानि तेषामुच्छेदस्य नैयायिकैरनभ्युपगमात् । तेन भूतात्मनां गोघटादीनां नित्यतेति पूर्वपक्षः । ता॰ टी॰ ।

‡ भूतेभ्यो भौतिकानि भिन्नानि न हि परमसूक्ष्माः परमाणवो गोघटादयः परमाणवस्तेषामतीन्द्रियत्वे सर्वाग्रहणप्रसङ्गाविस्तुक्तं द्वितीयाध्याये । तस्माद् ग्रहणाग्रहणविरुद्धधर्मयोगादन्ये भौतिका भूतेभ्यः । तथा च तेषामुत्पत्तिविनाशकारणोपलब्धेर्न नित्यत्वं भूतनित्यत्वेऽपीति सिद्धान्तमाह । ता॰ टी॰ ।

§ भूतभौतिकयोस्तादात्म्यं मन्यमानः पुनरपि पूर्वपक्षवाद्याह । ता॰ टी॰ ।

## नोत्पत्तितत्कारणोपलब्धेः* ॥ ३२ ॥

कारणसमानगुणस्योत्पत्तिः कारणं चोपलभ्यते । न चैतदुभयं नित्यविषयं न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुं न चाविषया काचिदुपलब्धिः । उपलब्धिसामर्थ्यात्कारणेन समानगुणं कार्यमुत्पद्यतइत्यनुमीयते । स खलूपलब्धेर्विषय इति । एवं च तल्लक्षणावरोधोपपत्तिरिति । †उत्पत्तिविनाशकारणप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्ट इति । प्रसिद्धश्चावयवी तद्धर्मा उत्पत्तिविनाशधर्मा चावयवी सिद्ध इति । ‡शब्दकर्मबुद्ध्यादीनां चाव्याप्तिः पञ्चभूतनित्यत्वात् तल्लक्षणावरोधाच्चेत्यनेन शब्दकर्मबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च न व्याप्ताः तस्मादनेकान्तः§ ।

‖स्वप्नविषयाभिमानवद् मिथ्योपलब्धिरिति चेद् भूतोपलब्धौ तुल्यम् । यथा स्वप्ने विषयाभिमान एवमुत्पत्तिकारणाभिमान इति । एवं चेतद्भूतोपलब्धौ तुल्यं पृथिव्याद्युपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते ।

पृथिव्याद्यभावे सर्वव्यवहारविलोप इति चेत् तदितरत्र समानम् । उत्पत्तिविनाशकारणोपलब्धिविषयस्याप्यभावे सर्वव्यवहारविलोप इति सोऽयं नित्यानामतीन्द्रियत्वादविषयत्वाच्चोत्पत्तिविनाशयोः स्वप्नविषयाभिमानवदित्यहेतुरिति । ¶अवस्थितस्योपादानस्य धर्ममात्रं निवर्तते धर्ममात्रमुपजायते न खलूत्पत्तिविनाशयोर्विषयः** । यच्चोपजा-

* भूतसारूप्यं गोघटादीनां भूतकार्यत्वे ऽप्युपपद्यमानं न भूतात्मकत्वमवगमयतीत्याशयवानाह । ता॰ टी॰ ।

† अपि च यद्युत्पत्तिविनाशौ भावानां न वस्तुसन्तौ कथं प्रेक्षावतामभिमतोत्पत्तिकारणे ऽनभिमतविनाशकारणेऽपि च सदर्थिनां प्रवृत्तिरित्याह । ता॰ टी॰ ।

‡ अपि चाव्यापको हेतुरित्याह । ता॰ टी॰ ।

§ अव्यापकश्चानेकान्त उक्तः । पक्षो हि सर्वं नित्यमिति । तस्मिंश्चास्य सत्त्वासत्त्वाभ्यामनेकान्तः । अनेकः सत्त्वासत्त्वलक्षणो ऽन्तो ऽस्येत्यनेकान्त इति । ता॰ टी॰ ।

‖ असति बाधके मिथ्यात्वकल्पनायामतिप्रसङ्ग इत्यमुमर्थं शङ्कानिराकरणाभ्यामाह । ता॰ टी॰ ।

¶ तदेवं सांख्यानां मतमपास्य स्वायंभुवानां मतं दूषयति । ता॰ टी॰ ।

** त्रिविधः खल्वयं धर्मिणः परिणामो धर्मलक्षणावस्थारूपः । तद्यथा । सुवर्णं धर्मि तस्य परिणामो वर्धमानरुचकादिः । धर्मस्य तु लक्षणपरिणामो ऽनागतादिः । यदा खल्वयं सुवर्णकारो वर्धमानकं भङ्क्त्वा रुचकमारचयति तदा वर्धमा-

यते* तत्प्रागप्युपजननादस्ति यच्च निवर्तते तन्निवृत्तमप्यस्तीति† एवं सर्वस्य नित्यत्वमिति।

न व्यवस्थानुपपत्तेः‡ ॥ ३३ ॥

अयमुपजनः इयं निवृत्तिरिति ( व्यवस्था नोपपद्यते उपजातनिवृत्तयोर्विद्यमानत्वात्। अयं धर्म उपजातोऽयं निवृत्त इति ) सद्भावाविशेषादव्यवस्था इदानीमुपजननिवृत्ती नेदानीमिति कालव्यवस्था नोपपद्यते सर्वदा विद्यमानत्वात्। अस्य धर्मस्योपजननिवृत्ती नास्येति व्यवस्थानुपपत्तिः उभयोरविशेषात्। अनागतोऽतीत इति§ च कालव्यवस्थानुपपत्तिः वर्तमानस्य सद्भावलक्षणत्वात्। अविद्यमानस्यात्मलाभ उपजनो विद्यमानस्यात्महानं निवृत्तिरित्येतस्मिन्सति नैते दोषाः। तस्माद्यदुक्तं प्रागप्युपजननादस्ति निवृत्तं चास्ति तदयुक्तमिति। अयमन्य एकान्तः‖।

सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥

---

चको वर्तमानलक्षणं हित्वाऽतीतलक्षणमापद्यते। रुचकस्त्वनागतलक्षणं हित्वा वर्तमानतामापद्यते। वर्तमानतामापन्न एव तु रुचको नवपुराणभावमापद्यमानोऽवस्थापरिणामवान् भवति। नवपुराणावस्थाश्च वर्तमानलक्षणाश्रया लक्षणपरिणामाः। सोऽयं त्रिविधः परिणामो धर्मिणः। धर्मलक्षणावस्थाश्च धर्मिणो भिन्नाश्चाभिन्नाश्च। तथा च धर्म्यभेदात्तन्नित्यत्वेन नित्या भेदाच्चोत्पत्तिविनाशविषयत्वमित्युभयमुपपन्नमिति। ता॰ टी॰।

* ननु यद्युपजनापायधर्मकत्वं धर्माणां इत्युत्पत्तेः प्राक् तेषामसत्त्वाद्विनाशाच्चोर्ध्वमसत्त्वात्कथं सर्वनित्यत्वसिद्धिरित्यत आह। ता॰ टी॰।

† धर्मिरूपेणेति शेषः। ता॰ टी॰।

‡ उपजनापाययोः स्वरूपतो कालतो विशेषतश्च संबन्धितोऽनागतत्वादिमत्त्व व्यवस्थानुपपत्तेरित्यर्थः। एतदुक्तं भवति। न तावद्धर्म्यभेदो परस्परपरीहारव्यवस्थितधर्माश्रयत्र सम्भवेत्। तस्मादुपजनापायव्यवस्थायै भेदं धर्मलक्षणावस्थानां धर्मिणा इच्छता तेषामनित्यत्वमभ्युपेतव्यम्। सांख्यवत्सत्कार्याभ्युपगमेन तु नित्यत्वव्यवस्थापने यन्निवर्तते तन्निवृत्तमप्यस्तीति ब्रुवाणो भवान् प्रष्टव्यो भवति किमुक्तं भवति यदि पूर्वं पूर्वमुपलभ्य पश्चान्नोपलभ्यते तथाप्यपूर्वविशेषोत्पादः पूर्वविशेषप्रच्यवोऽभ्युपेय इति व्याघातः। यथाविर्भावोऽभिव्यक्तिस्तथापि पूर्वदोषानिवृत्तिरसतो भवतीति। ता॰ टी॰। ( ) २ पु॰ नास्ति। § अनागतोऽतीतं चेति २।

‖ बौद्धानाम्। ता॰ टी॰।

सर्वं नाना न कश्चिदेको भावो विद्यते। कस्माद् भावलक्षणपृथक्त्वात्। भावस्य लक्षणमभिधानं येन लक्ष्यते भावः स समाख्याशब्दः तस्य पृथग्विषयत्वात्। सर्वो भावसमाख्याशब्दः समूहवाची कुम्भ इति संज्ञाशब्दो गन्धरसरूपस्पर्शसमूहे बुध्नपार्श्वग्रीवादिसमूहे च वर्तते निदर्शनमात्रं चेदमिति*।

**नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥**

अनेकविधलक्षणैरिति मध्यमपदलोपी समासः। गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवैः संबद्ध एको भावो निष्पद्यते गुणव्यतिरिक्तं च द्रव्यमवयवातिरिक्तश्चावयवीति। विभक्तन्यायं चैतदुभयमिति†। अथापि।

**लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥**

न कश्चिदेको भाव इत्ययुक्तः प्रतिषेधः। कस्माल्लक्षणव्यवस्थानादेव। यदिदं लक्षणं भावस्य संज्ञाशब्दभूतं तदेकस्मिन्व्यवस्थितं यं कुम्भमद्राक्षं तं स्पृशामि यमेवास्प्राक्षं तं‡ पश्यामीति। नाणुसमूहो गृह्यत इति अणुसमूहे चागृह्यमाणे यद्गृह्यते तदेकमेवेति।

अथाप्येतदनूक्तं नास्त्येको भावो यस्मात्समुदायः। एकानुपपत्तेर्नास्त्येव समूहः नास्त्येको भावो यस्मात्समूहे भावशब्दप्रयोगः। एकस्य चानुपपत्तेः§समूहो नोपपद्यते एकसमुच्चयो हि समूह इति व्याहतत्वादनुपपन्नं नास्त्येको भाव इति। यस्य प्रतिषेधः प्रतिज्ञायते समूहे भावशब्दप्रयोगादिति हेतुं ब्रुवता स एवाभ्यनुज्ञायते। एकसमुच्चयो हि समूह इति। समूहे भावशब्दप्रयोगादिति च समूहमाश्रित्य प्रत्येकं समूहि‖प्रतिषेधो नास्त्येको भाव इति। सोऽयमुभयतो व्याघातात्किंचनवाद इति। अयमपर एकान्तः¶।

**सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥**

यावद्भावजातं तत्सर्वमभावः। कस्माद् भावेष्वितरेतराभावसिद्धेः।

---

* अस्य प्रयोगः। कुम्भशब्दोऽनेकविषय एकपदत्वात् सेनाशब्दवदिति। न्या० वा०।

† सर्वस्य पक्षीकरणाद् दृष्टान्ताभावः। आधाराधेयभावेनानुषक्तानां कटादीनामवयविनश्च ग्रहणादन्यथासिद्धिः। नञः प्रसज्यप्रतिषेधपर्युदासविषयत्वेनाव्यवस्थानाच्च विरुद्धः। न्या० वा०।

‡ अस्प्राक्षमिति ४। § तत्समूहदर्शित ४। ५। ‖ समूहप० इति ५।

¶ संप्रति शून्यतावादिनमुत्थापयति। ता० टी०।

असन् गौरश्वात्मनाऽनश्वो गौरसन्नश्वो गवात्मनाऽगौरश्व इत्यसत्प्रत्ययस्य प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात् सर्वमभाव* इति ।

**प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम्† ।**

अनेकस्याशेषता सर्वशब्दस्यार्थो भावप्रतिषेधश्चाभावशब्दस्यार्थः । पूर्वं सोपाख्यमुत्तरं निरुपाख्यं‡ तत्र समुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति न जात्वभावो निरुपाख्योऽनेकतयाऽशेषतया शक्यः प्रतिज्ञातुमिति सर्वमेतदभाव इति चेद् यदिदं सर्वमिति मन्यसे तदभाव इति एवं चेदनिवृत्तो व्याघातः अनेकमशेषं चेति नाभावप्रत्ययेन शक्यं भवितुम् । अस्ति चायं प्रत्ययः सर्वमिति तस्मान्नाभाव इति । प्रतिज्ञाहेत्वोश्च व्याघातः सर्वमभाव इति भावप्रतिषेधः प्रतिज्ञा भावेष्वितरेतराभावसिद्धेरिति हेतुः भावेष्वितरेतराभावमनुज्ञायाश्रित्य चेतरेतराभावसिद्धौ सर्वमभाव इत्युच्यते । यदि सर्वमभावो भावेष्वितरेतराभावसिद्धेरिति नोपपद्यते अथ भावेष्वितरेतराभावसिद्धिः सर्वमभाव इति नोपपद्यते । सूत्रेण चाभिसम्बन्धः ॥

**न स्वभावसिद्धेर्भावानाम्‖ ॥ ३८ ॥**

न सर्वमभावः । कस्मात् स्वेन भावेन सद्भावाद्भावानां स्वेन धर्मेण भावा भवन्तीति प्रतिज्ञायते । कश्च स्वो धर्मो भावानां द्रव्यगुणकर्मणां

---

* प्रमाणादयः खल्वमी परस्परानात्मतया असदिति प्रत्ययस्य नञश्च गोचरा अनुभूयन्ते । अतस्तद्वाचिनां शब्दानां तत्सामानाधिकरण्यं ततः प्रमाणादयो ऽसन्तः अनुत्पन्नप्रध्वस्तघटवत् । अपि चामी भावा नित्या अनित्या वा नित्यत्वे सर्वसामर्थ्यरहितस्यासत्त्वं न हि नित्यं क्व चित्कार्येऽपयुज्यते क्रमाक्रमानुपपत्तेरित्युक्तम् । अनित्यत्वे तु विनाशस्वभावाश्चेद् द्वितीयादिक्षणेष्विव प्रथमक्षणे ऽपि न स्युः सत्त्वे वा नामी विनाशस्वभावाः । अतत्स्वभावत्वे वा क्षणान्तरे ऽपि न नश्येयुः । नो खलु नीलं स्वकारणादुपजातं जातु कारणसहस्रैरपि पीतं कर्तुं शक्यमिति विनाशस्वभावकत्वमकामेनापि अनित्यानामेषितव्यम् । तस्माद्भावानां शून्यतैव पारमार्थिकी कल्पितया त्ववस्तुसत्या सन्त इव भासन्त इति युक्तमुत्पश्याम. । ता· टी· ।

† अयुक्तमिति ३ । ४ । ५ ।

‡ न ह्यत्यन्तासन्निरुपाख्यं सर्वमिति वा भाव इति वा ऽभिमानस्य गोचरः असद्वा ऽनिर्वचनीयं वा न ख्यातिगोचरो ऽपि तु सदेव सदन्तरात्मना तथा च कुतो ऽत्यन्तासतः कल्पनागोचरत्वमपीति । ता· टी· । ¶ निरुपाख्यमिति ३ । ५ ।

‖ स्वो भावो धर्मो द्रव्यादीनां सदादिः अथ वा स्वभावः स्वरूपं भावानां येनामी भावाः स्वभावाद् व्यावर्तन्ते तस्य सिद्धेः । अथ वा ऽसदिति प्रत्ययस्य

सदादि सामान्यं द्रव्याणां क्रियावदित्येवमादिर्विशेषः स्पर्शपर्यन्ताः पृथिव्या इति च प्रत्येकं चानन्तो भेदः । सामान्यविशेषसमवायानां च विशिष्टा धर्मा गृह्यन्ते । सोऽयमभावस्य निरुपाख्यत्वात् संप्रत्यायको ऽर्थभेदो न स्यात् । अस्ति त्वयं तस्मान्न सर्वमभाव इति । अथ वा न स्वभावसिद्धेर्भावानामिति स्वरूपसिद्धेरिति । गौरिति प्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते नाभावमात्रं* यदि च सर्वमभावः गौरित्यभावः प्रतीयेत । गोशब्देन चाभाव उच्येत (तस्मात्† गोशब्देन चाभाव उच्यते) यस्मात्तु गोशब्दप्रयोगे द्रव्यविशेषः प्रतीयते नाभावस्तस्मादयुक्तमिति । अथ वा न स्वभावसिद्धेरिति असन् गौरश्वात्मनेति गवात्मना कस्मान्नोच्यते अवचनाद्गवात्मना गौरस्तीति स्वभावसिद्धिः अनश्वो ऽश्व इति वा गौरगौरिति वा कस्मान्नोच्यते । अवचनात्स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते ‡अव्यतिरेके प्रतिषेधे च भावानामसंयोगादिसम्बन्धो व्यतिरेको ऽत्राऽव्यतिरेको ऽभेदाख्यसम्बन्धः प्रत्ययसामानाधिकरण्यं§ यथा न सन्ति कुण्डे बदराणीति । असन् गौरश्वात्मना ऽनश्वो गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते गवाश्वयोरेकत्वं नास्तीति । तस्मिन्प्रतिषिध्यमाने भावेन गवा सामानाधिकरण्यमसत्प्रत्ययस्यासन् गौरश्वात्मनेति यथा न सन्ति कुण्डे बदराणीति कुण्डे बदरसंयोगे प्रतिषिध्यमाने सद्भिरसत्प्रत्ययस्य सामानाधिकरण्यमिति ।

---

गव्यश्वात्मनेति विशेषणादगौरित्यस्य गां परिहृत्याश्वादिभिः संबन्धाद् गोभावसिद्धेरेवमश्वादिष्वपीति स्वभावसिद्धेर्भावानां नाभाव इत्यर्थः । ता॰ टी॰ ।

* नाभाव इति अथ वा न स्वभावसिद्धिमात्रमिति २ ।

† नेति ३ ( ) ४ । ५ । नास्ति ।

‡ अव्यतिरेकप्रतिषेधे च भावानामसत् इत्यधिकम् ५ ।

§ असच्छब्दः खलु भावविशेषणं सदेवाभिधत्ते एवमसत्प्रत्ययो ऽप्यभावविशेषणं सदेवालम्बते । यथा शुक्लशब्दः शुक्लगुणविशिष्टे पटे वर्तते तथा चासत्प्रत्ययाभिधानयोरुपपन्न भाववाचिना पदेन सामानाधिकरण्यमित्यर्थः । भावश्च कश्चिन्नित्यः कश्चिदनित्यः तत्र नित्यस्यार्थक्रियाकारित्वमुपपादितं क्षणभङ्गभङ्गे । अनित्योऽपि न विनाशस्वभावो भावः कारणान्तरात्तु विनश्यति । यत्तूक्तं न शक्यं नीलं पीतं कर्तुमिति तत्र ब्रूमः शक्य एव नीलः पीतः कर्तुम् । श्यामश्यामः कुम्भो वह्निसंयोगाद्रक्तः । अथ नीलत्वं न शक्यं पीतत्वं कर्तुं ननु भावोऽपि नाभावः शक्यः कर्तुमिति यथैककुम्भाधिकरणे श्यामत्वरक्तत्वे पर्यायेण भवतः एवं कपालाधिकरणौ कुम्भभावाभावाविति न दोषः । ता॰ टी॰ ।

## न स्वभावसिद्धिरापेक्षिकत्वात्* ॥ ३९ ॥

अपेक्षाकृतमापेक्षिकम् । ह्रस्वापेक्षाकृतं दीर्घं दीर्घापेक्षाकृतं ह्रस्वं न स्वेनात्मनावस्थितं किं चित्कस्माद् अपेक्षासामर्थ्यात् तस्मान्न स्वभावसिद्धिर्भावानामिति ।

## व्याहतत्वादयुक्तम्‡ ॥ ४० ॥

यदि ह्रस्वापेक्षाकृतं दीर्घं किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते । अथ दीर्घापेक्षाकृतं ह्रस्वं दीर्घमनापेक्षिकम् । एवमितरेतराश्रययोरेकाभावेऽन्यतराभावः† इति दीर्घापेक्षाव्यवस्थानुपपन्ना । स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः अपेक्षायामनपेक्षायां च द्रव्ययोरभेदः । यावती द्रव्ये अपेक्षमाणे तावती एवानपेक्षमाणे नान्यतरत्र भेदः । आपेक्षिकत्वे तु सत्यन्यतरत्र विशेषोपजनः स्यादिति । किमपेक्षासामर्थ्यमिति चेद् द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः । द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति तद्दीर्घमिति व्यवस्यति यच्च हीनं गृह्णाति तद्ध्रस्वमिति व्यवस्यतीति । एतच्चापेक्षासामर्थ्यमिति । अथेमे संख्यैकान्ताः§ । सर्वमेकं सदविशेषात्‖ । सर्वं

---

* सर्वे हि भिन्नस्वभावा भावा भिन्नत्वं च तेषामन्यापेक्षं तथा हि नीलं भिन्नं पीताद्यपेक्षया न तु स्वभावतः । एवं ह्रस्वत्वदीर्घत्वे परापरत्वे पितापुत्रादयः परापेक्षा द्रष्टव्याः । यच्च परापेक्षं न तद्वास्तवं यथा जपाकुसुमापेक्षः स्फटिकस्यारुणिमेत्याशयः । ता॰ टी॰ ।

† दीर्घमनापेक्षिकम् एवमितरेतराश्रययोरेकाभावे ऽन्यतराभावादुभयं किमिति मन्यते पाठ दीर्घापेक्षा उभयाभाव इति प ।

‡ इतरेतर वस्तुनोः परस्परापेक्षं ह्रस्वत्वदीर्घत्वादिकं न वस्तुन्यस्ति घटसदित्यर्थः । किं च न सर्वेषां भावानां सापेक्षत्वं यथा रूपादीनामिति हेतोः पक्षाव्यापकत्वम् । अपि च । सर्वमभाव इति प्रतिज्ञायामुपन्यस्तहेतोः सत्त्वाङ्गीकारे व्याघातः । असत्त्वे साध्यासिद्धिः । प्रयुज्यमानस्य वाक्यस्यार्थे सत्त्वमङ्गीकृते व्याघातः । असत्त्वे तु वाक्यस्य निरर्थकत्वम् । सर्वमभावः सर्वे भावा इत्यनयोर्वाक्ययोरर्थभेदे ऽभ्युपगते व्याघातः अनभ्युपगमे तु विशेषोपादानवैयर्थ्यम् ।

§ संख्या एकान्ता येषु वादेषु ते तथोक्ताः । ता॰ टी॰ ।

‖ इदमस्याकूतम् । न तावदयं नामरूपप्रपञ्चः प्रकाशाद्भिन्नः सन् प्रकाशितुमर्हति जडस्य स्वयं प्रकाशासम्भवात् । न च प्रकाशयोगात्प्रकाशत इति युक्तं न प्रत्यान्तरेण प्रकाशेनास्य कश्चिद्योगः सम्भवति । विषयविषयिभावः संबन्ध इति

द्वेधा नित्यानित्यभेदात्*। सर्वं द्वेधा ज्ञाता† ज्ञानं ज्ञेयमिति। सर्वं चतुर्द्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति‡। एवं यथासम्भवमन्ये ऽपीति§ तत्र परीक्षा।

**संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥**

---

येच। तत्राकिञ्चित्करस्य विषयित्वासम्भवात् न चार्थो ज्ञानं फलं जनयतीति साम्प्रतम्। अतीतानागतयोरर्थयोस्तदसम्भवात्। न च न तयोर्विषयभावः। तस्मात् ज्ञानाद्भिन्नस्य नामरूपप्रपञ्चस्य न प्रकाशसम्भव इति ज्ञानस्यैवायं विवर्त्त इति युक्तमुत्पश्यामः। न च प्रकाशात्मानो घटपटादय एवोदयव्ययधर्माणः परस्परव्यावृत्ताः सन्त्विति साम्प्रतम्। तद्व्यावृत्तिग्रहणे प्रमाणाभावात्। सा हि यत्रासौ व्यावर्त्तते तदुभयग्रहे गृह्येत। न च विज्ञानानि विलक्षणानि स्वरूपमात्रावस्थितानि परस्परवार्त्ताऽनभिज्ञानि ज्ञानान्तरमपि ग्रहीतुमुत्सहन्ते प्रागेव स्वस्माद् व्यावर्त्तयितुम्। न च निषेध्यनिषेधाधिकरणग्रहणयोर्व्यावृत्तिग्रहः स्वकारणेन समसमयोत्पादो भवितुमर्हति। तादृशोः सव्येतरविषाणयोरिव कार्यकारणभावाभावात्। न चैकं विज्ञानं क्षणिकं निषेध्यनिषेधाधिकरणे गृहीत्वा पश्चाद्भेदं गृह्णातीति युक्तं क्षणिकस्य क्रमात्क्रमग्रहणव्यापारायोगात्। न चैकं विज्ञानं निषेध्यनिषेधाधिकरणे गृह्णाति अथ ज्ञानान्तरं निषेधतीति युक्तं चैत्राऽगृहीतेऽपि तस्मिन् मैत्रस्य निषेधज्ञानप्रसङ्गात्। न च ज्ञानस्वरूपग्रह एवास्य निषेधग्रह इति साम्प्रतम्। एवं हि स भवेद्यदि स्वरूपतदन्यव्यावृत्त्योरैक्यं स्यात् तत्र व्यावृत्तिरभावो वा भावो भावस्वरूपा वा व्यावृत्तिः। तत्र पूर्वस्मिन् कल्पे व्यावृत्तेस्तुच्छत्वात् तत्स्वभावाभावभेदास्तुच्छाः स्युः, ततश्च सर्वोभङ्ग्यन्तरेण शून्यवादप्रसङ्गः। इतरस्मिंस्तु कल्पे विधिरूपो भाव एव व्यावृत्तिरिति विधिरूपतया च ते न व्यावर्त्तन्त इति न व्यावृत्ता भावाः परस्परं परमार्थतः। तदिदमुक्तं सदविशेषादिति। अनाद्यनिर्वचनीयाविद्यानिबन्धनं तु भावानां भेदं न व्यासेधामः। न च ज्ञातुरपि ज्ञानाद्भेदग्राहकमस्ति प्रमाणमुक्तादेवाविशेषात्। यस्माद ज्ञेयानां परस्परतश्च ज्ञानाद्भेदः नापि ज्ञातुर्ज्ञानाद्स्ति भेदो नापि ज्ञानानामन्योन्यस्य तस्मात्प्रकाश एव प्रपञ्चो ग्रस्तेत्यद्वैतसिद्धिः। ता॰ टी॰।

* न हि नित्यानित्याभ्यामन्यो राशिरस्ति यमाश्रित्य पदार्थोस्थित्वादिके व्यवतिष्ठेरन्निति। ता॰ टी॰।

† ज्ञप्तिरपि ज्ञायमानत्वाज् ज्ञेयान्नातिरिच्यत इति भावः। ता॰ टी॰।
एवं चात्र ज्ञानपदं ज्ञानसाधनपरम्।

‡ यदि प्रमितिर्नाम तत्त्वं प्रमाणादिभ्यो भिन्नं नास्थीयते प्रमायाः प्रधानक्रियाया अभावात्क्व प्रमात्रादयः। कथं च प्रधानक्रियामन्तरेणेकशाक्यता स्यात्। कारकवैचित्र्यं वा। प्रमायाः फलत्वावस्थाया उपरि प्रमेयत्व न वारयामः न चैतावता तस्यान्तरं न भवतीति। ता॰ टी॰।

§ प्रकृतिपुरुषाविति वा पञ्च स्कन्धा इति वा पशुपाशतदुच्छेदेश्वरा इति वेत्यादयः। ता॰ टी॰।

यदि साध्यसाधनयोर्नानात्वमेकान्तो न सिद्ध्यति व्यतिरेकात् । अथ साध्यसाधनयोरभेदः एवमप्येकान्तो न सिध्यति साधनाभावात् न हि तमन्तरेण कस्य चित्सिद्धिरिति* ।

## न कारणावयवभावात् ॥ ४२ ॥

न संख्यैकान्तानामसिद्धिः कस्मात्कारणस्यावयवभावात्† । अवयवः कश्चित् साधनभूत इत्यव्यतिरेकः । एवं द्वैतादीनामपीति ॥

---

† अनवयवेन सर्वं चैदेकं द्विधा त्रेधा चतुर्धा वेति प्रतिज्ञार्थः तदतिरिक्तं साधनं वाच्यं न हि साध्यमेव साधनं भवति तथा च साधनस्य व्यतिरेकान्न संख्यैकान्तसिद्धिः । न च किं चिदपि स्वसंवेदनमस्ति ज्ञानप्रदीपादीनामपि परसंवेद्यत्वात् । यथा च ज्ञानातिरिक्तो ऽप्यर्थो विषयस्तथा विज्ञानवादनिराकरणावसरे वक्ष्यते । न च विज्ञानादर्थभेदो ऽव्यवहारः । तथा हि नीलमुपलभत्यनहंकारास्पदमपीतादिरूपं नीलं प्रत्यात्ममनुभवगोचरः । एवं नीलादीनामपि परस्परमन्यथा घटमानयेति देशितो लोचने निमील्य शयीत । शयीथा इति देशितस्तोयमेवाहरेत्कस्य चित्कथं चिद्विवेकाभावात् । न चानिर्वचनीयाविद्यानिबन्धनो ऽयं भेदव्यवहार इति साम्प्रतम् । अनिर्वचनीयख्यातेः पूर्वमेवापाकृतत्वात् । तस्मात्सर्वजनसंवेदनसिद्धो ऽयं भेदप्रत्ययो न कारणमुखनिरीक्षणेन युक्तो निराकर्तुमपि तु स्पष्टदृष्टकार्यभेदप्रत्ययासादृश्यं तत्कारणं कल्पनीयं यादृशेन कारणेन प्रपञ्चप्रत्ययो ऽप्रत्यूहमुत्पत्तुमर्हति तच्च प्रत्यक्षमेव । तथा हि । तन्नीलं परिच्छिन्दत्पीतादिभ्यो ऽस्य भेदं परिच्छिनत्ति संयुक्तविशेषणलक्षणादिन्द्रियार्थसन्निकर्षात् । नीलं हि नीलमित्यनुभवन्नयं पीतं च पीतमित्यनुभवन् स्मर्त्वा शक्नोति निषेध्यनिषेधाधिकरणतया समाकलयितुं रूपमात्रेणागृहीतपरस्परभेदमपि । न हि तत्र भेदेन प्रथतइत्यभेदेन प्रथेत येनानयोर्नीलपीतयोर्गृहीतस्वरूपयोरव्यवधिमद्भावो न स्यात् । तथा च तौ गृहीत्वा प्रत्यक्षेण शक्नोत्ययमनयोर्भेदं ग्रहीतुमित्यसाम्प्रतमेतत् । अन्योन्यसंश्रयाद्भेदो न प्रमाणान्तरसाधनः । तस्मिंश्चेदं नार्यमिति वस्तुभेदं विना न धीरिति । एतेन प्रमातुरपि प्रमाया भेदो व्याख्यातः । प्रमातारश्चानेकविधसुखदुःखोपभोगव्यवस्थानाद्बधिरान्धादिकोविदजालामुक्तसंसारिविभागोपपत्तेश्च भेदवन्तो ऽनुमीयन्ते । एकस्मिन्नपर्यायेण विरुद्धधर्मसंसर्गाभावात् । कल्पनया कथं चित्सम्भाव्यमानो ऽप्ययं गोमयपायसीयन्यायमावहति । तदेवं प्रत्यक्षादिविरोधादनुपपन्नार्थाः श्रुतय एकमेवाद्वितीयमित्याद्याः प्रथमां वृत्तिमुल्लङ्घ्य जघन्यामालम्बन्ते यजमानः प्रस्तर आदित्यो वै यूपवदिति । तस्मान्नाद्वैतमिति । साध्यात्साधनभेदेन च संख्यान्तरैकान्ता अप्यपाकृता इत्युक्तम् । ता० टी० ।

† एकस्य च द्व्यादीनां वा कश्चिदेकदेशः साधनं तथा च न संख्यान्तरं न च साधनाभाव इत्यर्थः । ता० टी० ।

निरवयवत्वादहेतुः ॥ ४३ ॥

कारणस्यावयवभावादित्यहेतुः कस्मात्सर्वमेकमित्यनपवर्गेण प्रतिज्ञाय कस्य चिदेकत्वमुच्यते तत्र व्यपवृक्तोऽवयवः* साधनभूतो नोपपद्यते† एवं द्वैतादिष्वपीति । ते खल्विमे संख्यैकान्ता विशेषकारितस्या‡र्थभेदविस्तारस्य प्रत्याख्यानेन वर्तन्ते प्रत्यक्षानुमानागमविरोधान्मिथ्यावादा भवन्ति । अथाभ्यनुज्ञानेन वर्तन्ते समानधर्मकारितोऽर्थसंग्रहो विशेषकारितश्चार्थभेद इति एवमेकान्तत्वं जहतीति । ते §खल्वेते तत्त्वज्ञानप्रविवेकार्थमेकान्ताः परीक्षिता‖ इति । प्रेत्यभावानन्तरं फलं तस्मिन् ।

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥

पचति दोग्धीति सद्यः फलमोदनपयसी कृषति वपतीति कालान्तरे फलं सस्याधिगम इति । अस्ति चेयं क्रिया अग्निहोत्रं जुहुयात्स्वर्गकाम इति एतस्याः फले संशयः ।

¶न सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥

---

* व्यपवृक्तो ऽवयव इति व ।

† यदि साध्यस्य कश्चिदवयवो भवेन्न संख्यैकान्तः स्यादिति । सर्वमेकमित्येतस्मिन् प्रतिज्ञातेऽर्थे न किं चिदवशिष्यते यतस्तत्साधनं स्यादित्यर्थः । ता॰ टी॰ ।

‡ स्थाणुकोटरपाण्यादिविशेषकारितो यो ऽर्थविशेषः स्थाणुपुरुषादिस्तत्प्रत्याख्यानेनेत्यर्थः । ता॰ टी॰ । § खल्वेते इति व

‖ अद्वैतस्यादिष्वेकान्तेषु प्रेत्यभावो न तात्त्विको भवेदपि तु काल्पनिकः केवलं प्रेत्यभावो ऽपि तु षोडशापि पदार्थाः तस्मादेतेषां यत्तत्त्वज्ञानं तत्प्रविवेकेन ज्ञानप्रविवेक इति तदर्थमेते परीक्षिता इति । ता॰ टी॰ ।

¶ कर्मानन्तरं दुःखं लोकपङ्क्त्यादिकं चोपलभ्यते प्रशंसन्ति हि लौकिका धार्मिको ऽयं साधुतम इति । तत्किमेतदेवास्य फलमस्तु अथामुष्मिकं स्वर्गादीति । किं तावत्प्राप्तं स्वर्गादिफलत्वे कर्मणः स्वरूपेणाकारणत्वाच्चिरनिवृत्ते तस्मिंस्तदुत्पत्तेरपूर्वकल्पनायां च प्रधानाङ्गापूर्वाणि भूयांसि कल्पनीयानि । न च तान्युत्पन्नमात्राणि जनयन्ति तत्सहकार्यन्तराणि कल्पनीयानीत्यदृष्टकल्पनागौरवात्तदनन्तरं दृष्टफलसाधनाच्च नास्यामुष्मिकं स्वर्गादि फलमपि त्वनन्तरदृश्यमानमेव । तत्रापि दुःखफलत्वउपदेशव्याघातात्लोके पङ्क्तिलाभख्यात्यादिकमेव फलं तच्च सुखहेतुतया स्वर्गादिफलत्वेनोच्यते दृष्टो हि सुखहेतौ स्वर्गपदप्रयोगो लोके यथा चन्दनं स्वर्गः सूक्ष्माणि वासांसि स्वर्गं इति प्राप्तम् । एवं प्राप्ते ब्रूमः । स्वर्गपदस्य तावदर्थवादतो यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषो-

स्वर्गः फलं श्रूयते तच्च भिन्ने ऽस्मिन्देहभेदादुत्पद्यतइति न सद्यः ग्रामादिकामानामारम्भफलमिति ।

**कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६ ॥**

ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणमन्तरेणोत्पत्तुमर्हति न खलु वै विनष्टात्कारणात्किं चिदुत्पद्यतइति ।

**प्राङ् निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥**

यथा फलार्थिना वृक्षमूले सेकादि परिकर्म क्रियते तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना संगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषेण सन्निविशमानः पर्णादि फलं निर्वर्तयति एवं परिषेकादि कर्म चार्थवत् । न च विनष्टात्फलनिष्पत्तिः । तथा प्रवृत्त्या संस्कारो*धर्माधर्मलक्षणो जन्यते स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं निष्पादयतीति उक्तञ्चैतत् पूर्वकृतफलानुबन्धात्तदुत्पत्तिरिति । तदिदं प्राङ् निष्पत्तेर्निष्पद्यमानम् ।

**नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ॥ ४८ ॥**

प्राङ् निष्पत्तेर्निष्पत्तिधर्मकं नासद् उपादाननियमात् । कस्य चिदुत्पत्तये किं चिदुपादेयं न सर्वं सर्वस्येत्यसद्भावे नियमो नोपपद्यतइति । न सत् प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति सदसत् न सदसतोर्वैधर्म्यात्सदित्यर्थाभ्य-

---

पनीतं च तत्सुखं स्वःपदास्पदमिति सुखं प्रति वाचकत्वमवधारितम् । न च तद्वाचकत्वेनैव चन्दनादौ तत्प्रयोगोपपत्तावनेकार्थत्वकल्पना युक्ता । यथाहुरन्याय्यश्चानेकार्थत्वमिति । तस्मान्मुख्योयं स्वर्गशब्द उक्तभेदे सुखे । तस्मात्स्वर्गकाम इत्यत्र मुख्यार्थसम्भवे नोपचरितार्थता युक्ता । न चानेकार्थकल्पनाभयान्मुख्यार्थपरित्यागो न्याय्यः । प्रमाणसिद्धे नियोगपर्यनुयोगानुपपत्तेः । यथाहुः । श्रुतसिद्ध्यर्थमश्रुतोपलब्धौ यत्नवता भवितव्यं न तु श्रुतशैथिल्यमादरणीयमिति । तथा प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । न चानन्तरदृश्यमानं लोकपङ्क्त्यादि होमाद्यनुष्ठानफलमपि तु तदुपलम्भफलमदाम्भिकाना प्रच्छन्नमनुतिष्ठतामपि लोके पङ्क्त्यादेरभावात् । तस्मात्सुष्ठूक्तं न सद्य इति ता॰ टी॰ ।

* नैष पुरुषसंस्कारः स्नानादिजन्य एव बोद्धव्यो ऽपि तु पुरुषधर्मतामात्रेण संस्कार इत्युच्यते । परमार्थतस्त्वयं धर्मः पुरुषाश्रयो ऽपि कर्मणा फले जनयितव्ये तस्य वास्तवव्यापार इति । ता॰ टी॰ ।

नुचा असदिति अर्थप्रतिषेधः एतयोर्व्याघातो वैधर्म्ये व्याघातादव्यतिरेकानुपपत्तिरितिप्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा । कस्मात् ।

उत्पादव्ययदर्शनात्* ॥ ४९ ॥

यत्पुनरुक्तं प्रागुत्पत्तेः कार्यं नासदुपादाननियमादिति ।

बुद्धिसिद्धं तु तदसत्† ॥ ५० ॥

इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेर्नियतकारणं कार्यं बुद्ध्या सिद्धमुत्पत्तिनियमदर्शनात् । तस्मादुपादाननियमस्योपपत्तिः सति तु कार्ये प्रागुत्पत्तेरुत्पत्तिरेव नास्तीति ।

‡आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥

मूलसेकादि परिकर्म फलं चोभयं वृक्षाश्रयं कर्म चेह शरीरे फलं चामुत्रेत्याश्रयव्यतिरेकादहेतुरिति ।

§प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥

प्रीतिरात्मप्रत्यक्षत्वादात्माश्रया तदाश्रयमेव कर्म धर्मसंज्ञितं धर्मस्यात्मगुणत्वात् तस्मादाश्रयव्यतिरेकानुपपत्तिरिति ।

‖न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्द्देशात् ॥ ५३ ॥

पुत्रादिफलं निर्द्दिश्यते न प्रीतिः ग्रामकामो यजेत पुत्रकामो यजेतेति तत्र यदुक्तं प्रीतिः फलमित्येतदयुक्तमिति ।

---

* यथा नित्यस्वरूपायाश्चितिशक्तेर्नोत्पादो न व्यय एवं फलस्यापि नित्यस्य तौ न स्यातामित्यर्थः । ता॰ टी॰ ।

† तदसद् भाविकार्यमनेनैव कारणेन जन्यते नान्येनेत्यनुमानबुद्धिसिद्धमेवेत्यर्थः । ता॰ टी॰ ।

‡ देहाद्व्यतिरिक्तमात्मानं नित्यं परलोकिनमसन्तं मन्यमान आह । ता॰ टी॰ ।

§ अस्त्यात्मा स्वर्गोपभोगसमर्थः शरीरव्यतिरिक्तः कर्तेत्युपपादितमित्याशयवानाह । ता॰ टी॰ ।

‖ अस्तु स्वर्गाद्यात्माश्रयं तथाप्यव्यापको हेतुः पुत्रादिफलेभ्यो निवृत्तेरिति दर्शयति । ता॰ टी॰ ।

**तत्संबन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः* ॥ ५४ ॥**

पुत्रादिसंबन्धात् फलं प्रीतिलक्षणमुत्पद्यतइति पुत्रादिषु फलवदुपचारः। यथान्ने प्राणशब्दोऽन्नं वै प्राणा इति।

फलानन्तरं दुःखमुद्दिष्टमुक्तं च बाधनालक्षणं दुःखमिति तत्किमिदं† प्रत्यात्मवेदनीयस्य सर्वजन्तुप्रत्यक्षस्य सुखस्य प्रत्याख्यानमाहो स्विदन्यः कल्प इति। अन्य इत्याह। कथं न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम्। अयं तु जन्ममरणप्रबन्धानुभवनिमित्ताद् दुःखान्निर्विण्णस्य दुःखं जिहासतो दुःखसंज्ञाभावनोपदेशो दुःखहानार्थ इति। कया युक्त्या सर्वे खलु सत्त्वनिकायाः सर्वाण्युत्पत्तिस्थानानि सर्वः पुनर्भवो बाधनानुषक्तो दुःखसाहचर्याद्बाधनालक्षणं दुःखमित्युक्तमृषिभिर्दुःखसंज्ञाभावनमुपदिश्यते। अत्र च हेतुरुपादीयते।

**विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥**

जन्म जायतइति शरीरेन्द्रियबुद्धयः शरीरादीनां संस्थानविशिष्टानां प्रादुर्भाव उत्पत्तिः विविधा च बाधना हीना मध्यमा उत्कृष्टा चेति। उत्कृष्टा नारकिणां तिरश्चां तु मध्यमा मनुष्याणां हीना देवानां हीनतरा वीतरागाणां च। एवं सर्वमुत्पत्तिस्थानं‡ विविधबाधनानुषक्तं पश्यतः सुखे तत्सा-

---

* स्वर्गोऽपि यावत्स्वर्गतया न काम्यते किं तु भोग्यतया। एवं सति कैव कथा पुत्रादिष्वपि तेऽपि भोग्यतयैव काम्यन्ते न तु स्वरूपं भोग्यमिति तत्साध्यं सुखं भोग्यं तस्मात्पुत्रादिसंबन्धात्तदुत्पत्तेः सुखोत्पत्तेस्तेषु फलप्रयोगः। ता॰ टी॰।

† भवतु बाधनालक्षणं दुःखमनुभूयमानं यत्पुनरिदं प्रत्यात्ममनुकूलवेदनीयं सुखं तत्कथं दुःखमनुभवविरोधात्। शरीरेन्द्रियबुद्धयश्च यदि दुःखहेतुतया दुःखं कस्मात्सुखहेतुतया सुखमेव न भवन्ति। सेयमतिभीरुता सकललोकयात्राविरोधिनी। तस्मान्मांसार्थी वैकः कण्टकानुद्धृत्य मांसमश्नात्यनर्थं कण्टकजन्यमाप्नोत्येवं प्रेक्षावान् दुःखमुद्धृत्येन्द्रियादिसाधनं सुखं भोक्ष्यते। सन्ति च विविधदुःखपरिवर्जनहेतवो दृष्टाः परिदृष्टसामर्थ्या अन्वयव्यतिरेकाभ्यामित्यभिप्रायवान् पूर्वपक्षी गुडजिह्विकया संशयान इव पृच्छति। ता॰ टी॰।

‡ उत्पत्तिः सुखदुःखहेतुभूता विषयसंपत्तिः। तस्याः स्थानानि भुवनानि आ सत्यलोकादा चावीचेरिति। एतदुक्तं भवति। यदि दुःखपरिवर्जनेन शक्येत सुखमुपादातुं ततस्तादृशमनुकूलवेदनीयं कः प्रेक्षावान् प्रजह्यात्। न च तादृश-

धनेषु च शरीरेन्द्रियबुद्धिषु दुःखसंज्ञा व्यवतिष्ठते। दुःखसंज्ञाव्यवस्थानात्सर्वलोकेष्वनभिरतिसंज्ञा भवति। अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया तृष्णा विच्छिद्यते* तृष्णाप्रहाणात्सर्वदुःखाद्विमुच्यतइति। यथा विषयोगात्पयो विषमिति बुध्यमानो नोपादत्ते अनुपाददानो मरणदुःखं नाप्नोति। दुःखोद्देशस्तु न सुखस्य प्रत्याख्यानं कस्मात्।

†न सुखस्यान्तरालनिष्पत्तेः ॥ ५६ ॥

न खल्वयं दुःखोद्देशः सुखस्य प्रत्याख्यानम्। कस्मात् सुखस्यान्तरालनिष्पत्तेः। निष्पद्यते खलु बाधनान्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणां तदशक्यं प्रत्याख्यातुमिति। अथापि।

बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥

सुखस्य दुःखोद्देशेनेति प्रकरणात् पर्येषणं प्रार्थनाविषयार्जनतृष्णा पर्येषणस्य दोषो यदयं वेदयमानः प्रार्थयते तस्य प्रार्थितं न संपद्यते संपद्य वा विपद्यते न्यूनं वा संपद्यते बहुप्रत्यनीकं वा संपद्यतइत्येतस्मात्पर्येषणदोषान्नानाविधो मानसः संतापो भवत्येवं वेदयतः पर्येषणदोषाद्बाधनाया अनिवृत्तिः। बाधनाऽनिवृत्तेर्दुःखसंज्ञाभावनमुद्दिश्यते अनेन कारणेन दुःखं जन्म न तु सुखस्याभावादिति। अथाप्येतदनूक्तं कामं कामयमानस्य यदा कामः समृध्यते। अथैनमपरः कामः क्षिप्रमेव प्रबाधते। अपि चेदुदनेमिं‡ समन्ताद्भूमिमालभते गवाश्वां न स तेन धनेन धनैषी तृप्यति किं नु सुखं धनकाम इति।

दुःखविकल्पे सुखाभिमानाच्च§ ॥ ५८ ॥

---

अस्ति सुखं क्वचिदपि सर्वस्य दुःखाविनाभाविनः केवलस्योपादातुमशक्यत्वात्। तस्माच्चेद सुखस्य प्रत्याख्यानमपि तु सुखएव दुःखभावनमुपदिश्यते इत्यपिशा। ता॰ टी॰।

* विलिप्यतइति ३।   † सुखस्याप्यन्तरालनिष्पत्तेः ४।

‡ समन्तादुदनेमि यथा भवति तथा भूमिं लभतइति योजना। ता॰ टी॰।

§ ननु यद्यन्तरालसुखान्यनुभवति तथापि दुःखमभेदमाकलयन् अनुपदिष्टोपि स्वयमेव निवर्त्स्यति कृतमस्य दुःखभावनोपदेशेनेत्यत आह। दुःखविकल्पे सुखाभिमानाच्च। अविवेकिनामिति शेषः। ता॰ टी॰।

दुःखसंज्ञाभावनोपदेशः क्रियते । अयं खलु सुखसंवेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते न सुखादन्यन्निःश्रेयसमस्ति सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति । मिथ्यासंकल्पात्सुखे तत्साधनेषु च विषयेषु संरज्यते संरक्तः सुखाय घटते घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद् दुःखमुत्पद्यते तं दुःखविकल्पं सुखमित्यभिमन्यते । सुखाङ्गभूतं दुःखं न दुःखमनासाद्य* शक्यं सुखमवाप्तुं तादर्थ्यात्सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञो जायस्व म्रियस्वेति संधावति† संसारं नातिवर्तते । तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञाभावनमुपदिश्यते दुःखानुषङ्गाद् दुःखं जन्मेति न सुखस्याभावात् । यद्येवं कस्माद् दुःखं जन्मेति‡ नोच्यते सोऽयमेवं वाच्ये यदेवमाह§ दुःखमेव जन्मेति तेन सुखाभावं ज्ञापयतीति । जन्मविनिग्रहार्थीयो‖ वै खल्वयमेवशब्दः कथं न दुःखं जन्म स्वरूपतः किं तु दुःखोपचाराद् एवं सुखमपीति एतदनेनैव निवर्त्यते न तु दुःखमेव जन्मेति ।

दुःखोपदेशानन्तरमपवर्गः स प्रत्याख्यायते ।

**ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः¶ ॥ ५९ ॥**

ऋणानुबन्धान्नास्त्यपवर्गः । जायमानो ह वै ब्राह्मणस्त्रिभिरृणैरृणवान्** जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति ऋणानि तेषामनुबन्धः स्वकर्मभिः संबन्धः कर्मसंबन्धवचनात् जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति जरया ह वा एष तस्मात्सत्राद्विमुच्यते मृत्युना ह वेति । ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः । क्लेशानुबन्धान्नास्त्यपवर्गः क्लेशानुबद्ध एवायं म्रियते क्लेशानुबद्धश्च जायते नास्य क्लेशानुबन्धविच्छेदो गृह्यते । प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः जन्मप्रभृ-

---

* अनासाद्य इति ५ । † सन्धावतीति । संधावाचेति ४ ।

‡ एवकारः किमर्थं इत्यर्थः । ता॰ टी॰ । § यदेवं प्राह २ ।

‖ जन्मविनिग्रहो जन्मविनिवृत्तिः स एवार्थोऽत्र वर्ततइति जन्मविनिग्रहार्थीयः यथा मत्वर्थीय इति । एतदुक्तं भवति । जन्म दुःखमेवेति भावयितव्यं न मनागपि सुखबुद्धिः कर्तव्या अनेकानर्थपरम्परापातेनापवर्गप्रत्यूहप्रसङ्गादिति । ता॰ टी॰

¶ अनुबन्धः सर्वदा करणीयता । न्या॰ वा॰ । ** ऋणवा जायतइति २ । ५ ।

धनेषु च शरीरेन्द्रियबुद्धिषु दुःखसंज्ञा व्यवतिष्ठते। दुःखसंज्ञाव्यवस्थानात्सर्वलोकेष्वनभिरतिसंज्ञा भवति। अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया तृष्णा विच्छिद्यते* तृष्णाप्रहाणात्सर्वदुःखाद्विमुच्यतइति। यथा विषयोगात्पयो विषमिति बुध्यमानो नोपादत्ते अनुपाददानो मरणदुःखं नाप्नोति। दुःखोद्वेशस्तु न सुखस्य प्रत्याख्यानं कस्मात्।

†न सुखस्यान्तरालनिष्पत्तेः ॥ ५६ ॥

न खल्वयं दुःखोद्वेशः सुखस्य प्रत्याख्यानम्। कस्मात् सुखस्यान्तरालनिष्पत्तेः। निष्पद्यते खलु बाधनान्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणां तदशक्यं प्रत्याख्यातुमिति। अथापि।

बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥

सुखस्य दुःखोद्वेशेनेति प्रकरणात् पर्येषणं प्रार्थनाविषयार्जनतृष्णा पर्येषणस्य दोषो यदयं वेदयमानः प्रार्थयते तस्य प्रार्थितं न संपद्यते संपद्य वा विपद्यते न्यूनं वा संपद्यते बहुप्रत्यनीकं वा संपद्यतइत्येतस्मात्पर्येषणदोषान्नानाविधो मानसः संतापो भवत्येवं वेदयतः पर्येषणदोषाद्बाधनाया अनिवृत्तिः। बाधनाऽनिवृत्तेर्दुःखसंज्ञाभावनमुद्दिश्यते अनेन कारणेन दुःखं जन्म न तु सुखस्याभावादिति। अथाप्येतदनूक्तं कामं कामयमानस्य यदा कामः समृध्यते। अथैनमपरः कामः क्षिप्रमेव प्रबाधते। अपि चेदुदनेमिं‡ समन्ताद्भूमिमालभते स गवाश्वं न स तेन धनेन धनेशो तृप्यति किं नु सुखं धनकाम इति।

दुःखविकल्पे सुखाभिमानाच्च§ ॥ ५८ ॥

---

अस्ति सुखं क्व चिदपि सर्वस्य दुःखाविनाभाविनः केवलस्योपादातुमशक्यत्वात्। तस्माचेदं सुखस्य प्रत्याख्यानमपि तु सुखएव दुःखभावनमुपदिश्यते व्यविषया। ता॰ टी॰।

* विच्छिद्यतइति १।  † सुखस्याप्यन्तरालनिष्पत्तेः ४।

‡ समन्तादुदनेमि यथा भवति तथा भूमिं लभतइति योजना। ता॰ टी॰।

§ ननु यद्यन्तरालसुखान्यनुभवति तथापि दुःखमभेदमाकलयन् अनुपदिष्टोपि स्वयमेव निवर्त्स्यति कृतमस्य दुःखभावनोपदेशेनेत्यत आह। दुःखविकल्पे सुखाभिमानाच्च। अविवेकिनामिति शेषः। ता॰ टी॰।

दुःखसंज्ञाभावनोपदेशः क्रियते। अयं खलु सुखसंवेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते न सुखादन्यन्निःश्रेयसमस्ति सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति। मिथ्यासंकल्पात्सुखे तत्साधनेषु च विषयेषु संरज्यते संरक्तः सुखाय घटते घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद् दुःखमुत्पद्यते तं दुःखविकल्पं सुखमित्यभिमन्यते। सुखाङ्गभूतं दुःखं न दुःखमनासाद्य* शक्यं सुखमवाप्तुं तादर्थ्यात्सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञो जायस्व म्रियस्व संधावेति† संसारं नातिवर्तते। तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञाभावनमुपदिश्यते दुःखानुषङ्गाद् दुःखं जन्मेति न सुखस्याभावात्। यद्येवं कस्माद् दुःखं जन्मेति‡ नोच्यते सोऽयमेवं वाच्ये यदेवमाह§ दुःखमेव जन्मेति तेन सुखाभावं ज्ञापयतीति। जन्मविनिग्रहार्थीयो|| वै खल्वयमेवशब्दः कथं न दुःखं जन्म स्वरूपतः किं तु दुःखोपचाराद् एवं सुखमपीति एतदनेनैव निवर्त्यते न तु दुःखमेव जन्मेति।

दुःखोपदेशानन्तरमपवर्गः स प्रत्याख्यायते।

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः¶ ॥ ५९ ॥

ऋणानुबन्धान्नास्त्यपवर्गः। जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान्** जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति ऋणानि तेषामनुबन्धः स्वकर्मभिः संबन्धः कर्मसंबन्धवचनात् जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति जरया ह एष तस्मात्सत्राद्विमुच्यते मृत्युना ह वेति। ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः। क्लेशानुबन्धान्नास्त्यपवर्गः क्लेशानुबद्ध एवायं म्रियते क्लेशानुबद्धश्च जायते नास्य क्लेशानुबन्धविच्छेदो गृह्यते। प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः जन्मप्रभृ-

* अनासाद्य इति ५। † संधावतीति। संधावेति ४।

‡ एवकारः किमर्थ इत्यर्थः। ता॰ टी॰। § यदेवं प्राह २।

|| जन्मविनिग्रहो जन्मविनिवृत्तिः स एवार्थोऽत्र वर्ततइति जन्मविनिग्रहार्थीयः यथा मत्वर्थीय इति। एतदुक्तं भवति। जन्म दुःखमेवेति भावयितव्यं न मनागपि सुखबुद्धिः कर्तव्या अनेकानर्थपरम्परापातेनापवर्गप्रत्यूहप्रसङ्गादिति। ता॰ टी॰

¶ अनुबन्धः सर्वदा करणीयता। न्या॰ वा॰। ** ऋणवा जायतइति २। ५।

त्वयं यावत्प्रायणं वाग्बुद्धिशरीरारम्भेणाविमुक्तो गृह्यते तत्र यदुक्तं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति तदनुपपन्न*मिति। अत्राभिधीयते। यत्तावदृणानुबन्धादिति ऋणैरिव ऋणैरिति।

**प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥**

ऋणैरिति नायं प्रधानशब्दः। यत्र खल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः। न चैतदिहोपपद्यते प्रधानशब्दानुपपत्तेः गुणशब्देनायमनुवाद ऋणैरिव ऋणैरिति। प्रयुक्तोपमं चैतद् यथा ऽग्निर्माणवक इति। अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते यथाग्निशब्दो माणवके। कथं गुणशब्देनानुवादः निन्दाप्रशंसोपपत्तेः। कर्मलोपे ऋणीव ऋणादानान्निन्द्यते कर्मानुष्ठाने च ऋणीव ऋणदानात्प्रशस्यते स एवोपमार्थ इति। जायमान इति गुणशब्दो विपर्यये ऽनधिकारात्। जायमानो ह वै ब्राह्मण इति च शब्दो गृहस्थः संपद्यमानो जायमान इति यदायं गृहस्थो जायते तदा कर्मभिरधिक्रियते मातृतो जायमानस्यानधिकारात्। यदा तु मातृतो जायते कुमारो न तदा कर्मभिरधिक्रियते अर्थिनः शक्तस्य (चाधिकारात्। अर्थिनः कर्मभिरधिकारः कर्मविधौ कामसंयोगस्मृतेः अग्निहोत्रं जुहुयात्स्वर्गकाम इत्येवमादि शक्तस्य†) च प्रवृत्तिसंभवात्। शक्तस्य कर्मभिरधिकारः प्रवृत्तिसंभवात्। शक्तः खलु विहिते कर्मणि प्रवर्तते नेतर इति। उभयाभावस्तु प्रधानशब्दार्थे। मातृतो जायमाने कुमारे उभयमर्थिता शक्तिश्च न भवतीति। न भिद्यते च लौकिकाद्वाक्याद्वैदिकं वाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन। तत्र लौकिकस्तावदपरीक्षको ऽपि न जातमात्रं कुमारकमेवं ब्रूयादधीष्व यजस्व ब्रह्मचर्यं चरेति। कुत एव ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुक्त उपदिशति न खलु वै नर्तको ऽन्धेषु प्रवर्तते न गायनो बधिरेष्विति। उपदिष्टार्थविज्ञानं‡ चोपदेशविषयः यश्चोपदिष्टमर्थं विजानाति

---

* तत्र ऋणत्रयापाकरणेनैव वयःसमाप्तेर्मोक्षनिवेशशक्ता नास्तीत्यपवर्गाभाव इत्यर्थः। नानुबन्धनिदानः संसारः शक्य उच्छेत्तुमित्यर्थः। ता॰ टी॰।

† ( ) न नास्ति। ‡ विज्ञाता चोपदेशविषय इति न। ४।

तं प्रत्युपदेशः क्रियते न चैतदस्ति जायमानकुमारके इति । गार्हस्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदति यच्च मन्त्रब्राह्मणं कर्माभिवदति *तत्पत्नीसंबन्धादिना† गार्हस्थ्यलिङ्गेनोपपन्नं तस्माद्गृहस्थोऽयं जायमानोऽभिधीयते इति ।

**अर्थित्वस्य चाविपरिणामे जरामर्यवादोपपत्तिः‡ ।**

यावच्चास्य फलेनार्थित्वं न विपरिणमते न निवर्तते तावदनेन कर्मानुष्ठेयमित्युपपद्यते जरामर्यवादस्य प्रतीतिः जरया ह वेत्यायुषस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचनं जरया ह वा एष एतस्माद्विमुच्यत इति । आयुषस्तुरीयं चतुर्थं प्रव्रज्यायुक्तं जरेत्युच्यते । तत्र हि प्रव्रज्या विधीयते अत्यन्तजरासंयोगे जरया ह वेत्यनर्थकम् अशक्तो विमुच्यत इत्येतदपि नोपपद्यते स्वयमशक्तस्य बाह्यां शक्तिमाह । अन्तेवासी वा जुहुयाद् ब्रह्मणा स परिक्रीतः क्षीरहोता वा जुहुयाद्धनेन स परिक्रीत इति । अथापि|| विहितं वानूद्येत¶ कामाद्वार्थः परिकल्प्येत विहितानुवचनं न्याय्यमिति** । ऋणवानिवास्वतन्त्रो गृहस्थः कर्मसु प्रवर्तत इत्युपपन्नं वाक्यस्य सामर्थ्यम् । फलस्य हि साधनानि प्रयत्नविषयो न फलं†† तानि संपन्नानि फलाय

---

* तत्फलेनेति २ । † गार्हस्थ्यस्य लिङ्गं पत्नी यस्मिन् कर्मणि तत्तथोक्तम् । ता॰ टी॰

‡ परिणामे इति २ ।

§ तेन यदुक्तमृणापाकरणेन वयःपर्यवसानान्नास्ति मोक्षावसर इति तदपाकृतं भवति । ता॰ टी॰ ।

|| यद्यपि गृहस्थस्य यज्ञान्तराणि सन्ति तथापि जायमान ऋणैस्त्रिभिरिति वास्य बालस्यापि यज्ञादि विधास्यतीत्येतामाशङ्कां विमर्शपूर्वकमपाकरोति । ता॰ टी॰ ।

¶ वानूद्येतेति २ ।

** न तावज्जायमानो ह वै इत्यादिवाक्ये विधिविभक्तिरस्ति तेन सिद्धानुवादः स्वरसतः प्रतीयते । यदि तु तस्यार्थस्य सिद्धिर्वाक्याद्वा प्रमाणान्तराद्वा कथमपि न कल्पेत ततो वचनानि त्वपूर्वत्वादिति न्यायेन विधित्वमस्य कल्पेत । सन्ति तु शतशस्तदर्थविधायकानि वाक्यानि विधिविभक्तिमन्तीति को नाम स्वेच्छामात्रेण विधर्पता कल्पयेत् । तस्माद्विहितानुवचनमेव न्याय्यमिति जायमानशब्दो जघन्यवृत्तिरिति युक्तमुत्पश्यामः । ता॰ टी॰ ।

†† अयमभिप्रायः विधिर्हि स्वव्यापारे पुरुषं कर्तृतया नियुङ्क्ते प्रयत्नश्चास्य व्यापारः । स च निर्विषयो न शक्यो निर्वर्तयितुमिति स्वविषयमपेक्षते न चास्य साक्षात्फलं प्रयत्नविषयो भवितुमर्हति तदुद्देश्यतामात्रेण तु भवेच्चैतावता प्रयत्नोऽस्य निर्वृणोति यावदयं साक्षादभिनिर्वर्तनीयं न प्राप्नोति तदुपायश्चास्य साक्षा-

कल्पन्ते* । विहितं च जायमानं विधीयते च जायमानं तेन यः संबध्यते सोऽयं जायमान इति । प्रत्यक्षविधानाभावादिति चेन्न प्रतिषेधस्यापि प्रत्यक्षविधानाभावादिति । प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन यदि चाश्रमान्तरमभविष्यत्तदपि व्यधास्यत्† प्रत्यक्षतः । प्रत्यक्षविधानाभावान्नास्त्याश्रमान्तरमिति न प्रतिषेधस्य प्रत्यक्षविधानाभावात् । न प्रतिषेधोऽपि वै ब्राह्मणेन प्रत्यक्षतो विधीयते न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रम इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति ।

अधिकाराच्च विधानं विद्यान्तरवत् । यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि नार्थान्तराभावाद्§ एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेऽधिकारे प्रत्यक्षतो विधायकं नाश्रमान्तराणामभावादिति । ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते । ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति । ऋचश्च तावत्कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः । अथापरे ऋषयो मनीषिणः ‖परं कर्मभ्योऽमृतत्वमानशुः¶ । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं** गुहायां विभ्राजते यद्यतयो विशन्ति । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं†† तमसः परस्तात् । तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय । अथ ब्राह्मणानि त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासीति तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एवैते पुण्यलोका भवन्ति

---

दभिनिर्वर्तनीय इति फलोद्देशप्रवृत्तस्य पुरुषप्रयत्नस्य तदेवोपायो विषयः । न च बालस्यापि तदुपायमविदुषस्तत्र सामर्थ्यमस्ति । असमर्थश्चाकृतो कथमेन प्रयत्नेन व्याप्नुयादप्राप्नुवंश्च कथमधिकारीति जायमानशब्दो जघन्यवृत्तिरेव न्याय्य इति सिद्धम् । ता टी ।

* कल्पन्ते इति ३ । ४ । † व्यधास्यत ३ । ४ ।

‡ न चाविधानेन तत्प्रतिषेधानुमानमित्याह । अधिकाराच्चेति । ता॰ टी॰ । अत एवास्य सूत्रत्व नास्तीति मत्वा सूत्राङ्को न निर्दिष्टः ।

§ नाश्रमान्तराभावादिति २ नाश्रमान्तराभाव इति ४ । ‖ परे इति ३ ।

¶ प्रेत्यभावमित्यर्थः । पर कर्मभ्य इति कर्मपरित्यागमपवर्गसाधनं सूचयति । अमृतत्वमिति त्वपवर्गः । ता टी ।

** नाकं परेण अविद्यातः परमित्यर्थः । निहितं गुहायामिति लौकिकप्रमाणागोचरस्य दर्शयति । अविद्या तमः । ता टी ।

†† नित्यप्रकाशमित्यर्थः । तदनेनेश्वरप्रणिधानस्यापवर्गोपायत्वमुक्तम् । ता॰ टी॰ ।

ब्रह्मसंस्थोऽमृतत्वमेति । एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीति । अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तथाक्रतु*र्भवति यथाक्रतुर्भवति† तत्कर्म कुरुते (यत्कर्म कुरुते तदभिसंपद्यते) इति कर्मभिः संसरणमुक्त्वा प्रकृतमन्यदुपदिशन्ति इति नु‡ कामयमानोऽथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो भवति न तस्य प्राणा उत्क्रामन्ति इहैव समवनीयन्ते§ ब्रह्मैव सन् ब्रह्माप्येतीति । तत्र यदुक्तमृणानुबन्धादपवर्गाभाव इत्येतदयुक्तमिति|| । ये चत्वारः पथयो देवयाना इति च चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः फलार्थिनश्चेदं ब्राह्मणं जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति कथम् ।

## ¶समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥

प्राजापत्यामिष्टिं निरूप्य तस्यां सार्ववेदसं** हुत्वा आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेदिति श्रूयते तेन विजानीमः प्रजावित्तलोकैषणा(भ्यो†† व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपणं विधीयतइति । एवं ■ ब्राह्मणानि सोऽन्यद् व्रत‡‡मुपाकरिष्यमाणो याज्ञवल्क्यो मैत्रेयीमिति§§ होवाच प्रव्रजिष्यन्वाअरे अहमस्मात्स्थानादस्मि हन्त ते ऽनया कात्यायन्या सहान्तं करवाणीति । अथाप्युक्तानुशासनासि मैत्रेयि एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति ।

## पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥

जरामर्यं च कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणीति प्रसज्यते तत्रैषणाव्युत्थानं न श्रूयेत|||| । एतद्धस्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणा)-

---

* क्रतुः संकल्पः । ता० टी० । † तथा तत्कर्म कुरुते ४ । ( ) ■ तदभिसंपद्यतइति २ ।
‡ नु इति २ । § समवलीयन्तइति ४ । || एतदयुक्तमिति ४ ।
¶ आत्मन्यग्नीनां समारोपणादृणानुबन्धेनापवर्गस्याप्रतिषेधः । तदनेन छलेन प्रत्यक्षविधानं प्रव्रज्याया अपि दर्शितम् । ता० टी० । ** सर्ववेदसं गृहीत्वेति २ ।
†† १ । ४ । पुस्तकयोर्नास्ति । ‡‡ व्रतमिति । §§ मैत्रेयीति होवाचेति ।
|||| श्रूयते इति २ ।
( ) एतन्मध्यगो ग्रन्थो मुद्रितपुस्तके नास्ति । कलिकाताऽऽनीतलिखितपुस्तकेऽपि त्रुटितः । अन्येषु लिखितेषु त्रिष्वपि पुस्तकेषु दृश्यते । न्यायवार्तिके तात्पर्यटीकायां च पात्रचयेत्यादिसूत्रमुपलभ्यते ।

याश्च व्युत्थाय भिक्षाचर्यं चरन्तीति । एषणाभ्यश्च व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्ते इति । नाविशेषेण कर्तुः प्रयोजकफलं भवतीति चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः । तदप्रमाणमिति चेद् न (प्रमाणेन प्रामाण्याभ्यनुज्ञानात्) प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन्नितिहासपुराणं पञ्चमं वेदानां वेद इति । तस्मादयुक्तमेतदप्रामाण्यमिति । अप्रामाण्ये च* धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः । द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः । य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति । विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यमन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति । यज्ञो मन्त्रब्राह्मणस्य लोकवृत्तमितिहासपुराणस्य लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः । तत्रैकेन सर्वं† व्यवस्थाप्यत इति यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति । यत्पुनरेतत् क्लेशानुबन्धस्याविच्छेदादिति ।

## सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥

यथा सुषुप्तस्य खलु स्वप्नादर्शने रागानुबन्धः सुखदुःखानुबन्धश्च विच्छिद्यते तथापवर्गेऽपीति‡ । एतच्च ब्रह्मविदो मुक्तस्यात्मनो रूपमुदाहरन्तीति । यदपि प्रवृत्त्यनुबन्धादिति ।

## न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६४ ॥

प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसन्धानाय । प्रतिसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म तच्चादृष्टकारितं तस्यां प्रहीणायां§ पूर्वजन्माभावे जन्मान्तराभावोऽप्रतिसन्धानमपवर्गः । ||कर्मवैफल्यप्रसङ्ग इति चेद् न कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात् । पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते न

( ) ४ नास्ति । * वा इति ५ । † न सर्वमिति २ । ५ ।

‡ एतावांस्तु मुक्तावस्थाया विशेषः यदस्यां क्लेशवासनापि नास्ति सुषुप्तावस्थायां प्रलयावस्थायां च क्लेशविच्छेदे ऽपि तद्वासनास्तीति । ता टी ।

§ जन्मान्तराप्रतिसन्धानमिति २ । || कर्मवैफल्यप्रसङ्ग इति १ । ४ ।

तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते सर्वाणि पूर्वकर्माणि ह्यन्ते* जन्मनि विपच्यन्तइति ।

## न क्लेशसंततेः स्वाभाविकत्वात् ॥ ६५ ॥

नोपपद्यते क्लेशानुबन्धविच्छेदः कस्मात्क्लेशसंततेः स्वाभाविकत्वात् । अनादिरियं क्लेशसंततिः न चानादिः शक्य उच्छेत्तुमिति । अत्र कश्चित्परीहारमाह ।

## प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेप्यनित्यत्वम् ॥ ६६ ॥

यथानादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्यते एवं स्वाभाविकी क्लेशसंततिरनित्येति ।

## अणुश्यामतानित्यत्ववद्वा† ॥ ६७ ॥

अपर आह । यथा ऽनादिरणुश्यामता अथ चाग्निसंयोगादनित्या तथा क्लेशसंततिरपीति । सतः खलु धर्मो नित्यत्वमनित्यत्वं च तत्त्वं‡ भावे ऽभावे भाक्तमिति । अनादिरणुश्यामतेति हेत्वभावादयुक्तम्§ । अनुत्पत्तिधर्मकमनित्यमिति नात्र हेतुरस्तीति । अयं तु समाधिः ।

## न संकल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६८ ॥

कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेति‖ समुच्चयः । मिथ्यासंकल्पेभ्यो रञ्जनीयकोपनीयमोहनीयेभ्यो¶ रागद्वेषमोहा उत्पद्यन्ते कर्म च सत्त्वनिकायनिर्वर्तकं नैयमिकान् रागद्वेषमोहान्निर्वर्तयति नियमदर्शनात् । दृश्यते हि कश्चित्सत्त्वनिकायो रागबहुल कश्चिन्मोहबहुल इति इतरेतरनिमित्ता च रागादीनामुत्पत्तिः । मूढो रज्यति मूढः कुप्यति रक्तो मुह्यति कुपितो मुह्यति । सर्वमिथ्यासंकल्पानां तत्त्वज्ञानादनुत्पत्तिः कारणानुत्पत्तौ च कार्यानुत्पत्ते-

---

* ह्यन्ते इति २ । ५ ।

† यदेतद् श्यामं तदचस्येत्यागमः पार्थिवानां परमाणूनां श्यामतामनादिमाह अत्रपदेन मृदो ऽभिधानादिति भावः । ता॰ टी॰ ।

‡ नित्यत्वतत्त्वमभावे इति ७ ।

§ अणुश्यामता कार्या पृथिवीरूपत्वाल्लोहितादिवदिति प्रत्युतानित्यताहेतुरस्ति पुनरग्रयणजन्यलोहितरूपवैलक्षण्येन त्वस्याग्रयवपूर्वकत्वमात्रेणानादित्वाभिधानमिति नागमविरोधः । ता॰ टी॰ ।

‖ इतरेतरनिमित्ता चेति २ । ४ ।

¶ भव्यगेयादिपाठात्कर्तरि कृत्यः । ता॰ टी॰ ।

रिति। रागादीनामत्यन्तमनुत्पत्तिरिति। अनादिश्च क्लेशसंततिरित्य*युक्तं सर्वइमे खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्तन्ते शरीरादयो न जात्वत्र कश्चिदनुत्पन्नपूर्वः प्रथमत उत्पद्यते ऽन्यत्र तत्त्वज्ञानात्। न चैवं सत्यनुत्पत्तिधर्मकं किञ्चिद्विनाशधर्मकं प्रतिज्ञायतइति। कर्म च †सत्त्वनिकायनिर्वर्तकं तत्त्वज्ञानकृतान्मिथ्यासंकल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति सुखदुःखसंवित्तिफलं तु भवतीति।

इति श्रीवात्स्यायनीये न्यायभाष्ये चतुर्थाध्यायस्याद्यमाह्निकम्।

किं नु खलु ‡भोः यावन्तो विषयास्तावत्सु प्रत्येकं तत्त्वज्ञानमुत्पद्यते अथ क्वचिदुत्पद्यतइति। कश्चात्र विशेषः। न तावदेकैकत्र यावद्विषयमुत्पद्यते ज्ञेयानामानन्त्यात्§। नापि क्वचिदुत्पद्यते यत्र नोत्पद्यते तत्रानिवृत्तो मोह॥ इति मोहशेषप्रसङ्गः। न चान्यविषयेण तत्त्वज्ञानेनान्यविषयो मोहः शक्यः प्रतिषेद्धुमिति¶। मिथ्याज्ञानं वै खलु **मोहो। न तत्त्वज्ञानस्यानुत्पत्तिमात्रं तच्च मिथ्याज्ञानं यत्र विषये प्रवर्तमानं†† संसारबीजं भवति स

---

* इत्ययुक्तम्। श।   † निकायेन जातिरुपलक्ष्यते। ता टी।

‡ तदेवं संशयप्रमाणप्रमेयाणि परीक्षितानि प्रयोजनादयो ऽपि यत्र संशयस्तत्रैवमुक्तरीत्यप्रसङ्गं इत्यतिदेशेन परीक्षित इति षोडशापि प्रमाणादयः परीक्षिताः। तेषां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरित्युक्तम्। तत्रापि प्रमेयतत्त्वज्ञानं साक्षान्निःश्रेयसहेतुरितरेषां ॥ तत्त्वज्ञानाङ्गतयेत्युक्तम्। इदमिदानीं परीक्ष्यते किं प्रत्येकमात्मादीनां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरुत कस्य चिदेषामेकदेशस्येति। ता टी०।

§ इयत्तात्मत्ययाविषयत्वात्।

॥ यत्र मोहस्तत्र रागद्वेषाविति। रागद्वेषमोहाश्च बन्धनमित्यनिर्मोक्षप्रसङ्ग। न्या वा।   ¶ एवमपवर्गः प्राणिमात्रे भवति। न्या वा०।

** वै पूर्वपक्षासमाप्त्या खलुशब्दो हेत्वर्थे। अयुक्तः पूर्वपक्षो यस्मान्मिथ्याज्ञानं मोह इति। न तत्त्वज्ञानमज्ञाननिवृत्तिमात्रेण निःश्रेयसोपयोग्यपि तु संसारनिदानोच्छेदद्वारेण दृष्टेनैव न च तत्त्वज्ञानं संसारहेतुरपि तु मिथ्याज्ञानं तदुच्छिन्दद्विरोधितया तत्त्वज्ञानमपवर्गहेतुरिति। ता० टी।

†† स्वसंबन्धिनो ह्यात्मादयो विपर्ययेण परिच्छिन्नाः संसारहेतव इति तद्विषयमेव मिथ्याज्ञानमपनेयं आत्माद्यन्तरविषयं तेन तत्र मिथ्याज्ञानं मा निवर्तिष्ट निवर्ततां वा स्वात्मादिदृष्टान्तेन न तु तस्य संसारनिवृत्तिं प्रत्युपयोगः यस्य तूपयोगस्तस्य तत्त्वज्ञानं न दुष्करमिति। ता टी०।

विपर्यस्तस्तत्त्वतो ज्ञेय इति । किं पुनस्तन्मिथ्याज्ञानम् अनात्मन्यात्मग्रहः अहमस्मीति मोहोऽहङ्कार इति । अनात्मानं खल्वहमस्मीति पश्यतो दृष्टिरहङ्कार इति । किं पुनस्तदर्थजातं यद्विषयोऽहङ्कारः । शरीरेन्द्रियमनोवेदनाबुद्धयः । कथं तद्विषयोऽहङ्कारः संसारबीजं भवति । अयं खलु शरीराद्यर्थजातमहमस्मीति व्यवसितः तदुच्छेदेनात्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णापरिप्लुतः पुनः पुनस्तदुपादत्ते तदुपाददानो जन्ममरणाय यतते तेनावियोगान्नात्यन्तं दुःखाद्विमुच्यत इति । यस्तु दुःखं दुःखायतनं दुःखानुषक्तं सुखं च सर्वमिदं दुःखमिति पश्यति [redacted] दुःखं परिजानाति परिज्ञातं च दुःखं प्रहीणं भवत्यनुपादानात् सविषान्नवत् । एवं दोषान्* कर्म च दुःखहेतुरिति पश्यति । न चाप्रहीणेषु दोषेषु दुःखप्रबन्धोच्छेदेन शक्यं भवितुमिति दोषान् जहाति प्रहीणेषु च दोषेषु न प्रवृत्तिः प्रतिसंधानायेत्युक्तम् । प्रेत्यभावफलदुःखानि च ज्ञेयानि व्यवस्थापयति कर्म च दोषांश्च प्रहेयान् । अपवर्गोऽधिगन्तव्यस्तस्याधिगमोपायस्तत्त्वज्ञानम् । एवं चतसृभिर्विधाभिः प्रमेयं विभक्तमासेवमानस्याभ्यस्यतो भावयतः सम्यग्दर्शनं यथाभूतावबोधस्तत्त्वज्ञानमुत्पद्यते । एवं च ।

## †दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥

शरीरादि दुःखान्तं प्रमेयं दोषनिमित्तं तद्विषयत्वान्मिथ्याज्ञानस्य । तदिदं तत्त्वज्ञानं तद्विषयमुत्पन्नमहङ्कारं निवर्तयति समानविषये तयोर्विरोधात् । एवं तत्त्वज्ञानाद् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति । [redacted] चायं शास्त्रार्थसंग्रहो‡नूद्यते नापूर्वो विधीयत इति । प्रसङ्ख्यानानुपूर्व्या§तु खलु ।

## दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ॥ २ ॥

कामविषया इन्द्रियार्था इति रूपादय उच्यन्ते ते मिथ्या संकल्प्यमाना रागद्वेषमोहान् प्रवर्तयन्ति तान्पूर्वं प्रसंचक्षीत । तांश्च प्रसंचक्षाणस्य रूपादि-

---

* शेषादिति । २ । † अर्थगतिं परिशोध्यात्रार्थं सूत्रं पठति । ता. टी. ।

‡ शास्त्रतात्पर्यसंग्रहो द्वितीयसूत्रेणानूद्यत इत्यर्थः । ता. टी. ।

§ प्रसंख्यानं समाधिजं तत्त्वज्ञानं तच्च विषये सुकरमिति तत्रैव प्राथमिकस्य प्रथमं यत्नो युक्तः । ता. टी. ।

विषयो मिथ्या*संकल्पो निवर्तते। तन्निवृत्तावध्यात्मं शरीरादि प्रसंचक्षीत। तत्प्रसङ्ख्यानादध्यात्मविषयोऽहङ्कारो निवर्तते। सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन्मुक्त इत्युच्यते। †अतः परं का चित्संज्ञा हेया का चिद्भावयितव्येत्युपदिश्यते नार्थनिराकरणमर्थोपादानं वा। कथमिति।

## तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥

तेषां दोषाणां निमित्तं त्ववयव्यभिमानः। सा च खलु स्त्रीसंज्ञा(स-परिष्कारा पुरुषस्य पुरुषसंज्ञा च स्त्रियाः परिष्कारश्च निमित्तसंज्ञा अनुव्यञ्जनसंज्ञा च) निमित्तसंज्ञा दन्तोष्ठं चक्षुर्नासिकम् अनुव्यञ्जनसंज्ञा इत्थं दन्तौ इत्थमोष्ठाविति सेयं संज्ञा कामं वर्धयति तदनुषक्तांश्च दोषान् ‡विवर्जनीयान् वर्जनं त्वस्याः भेदेनावयवसंज्ञा केशलोममांसशोणितास्थिस्नायुशिराकफपित्तोच्चारादिसंज्ञा तामशुभसंज्ञेत्याचक्षते। तामस्य भावयतः कामरागः प्रहीयते सत्येव च द्विविधे§ विषये का चित्संज्ञा भावनीया का चित्परिवर्जनीयेत्युपदिश्यते यथा विषसंपृक्तेऽन्ने ऽन्नसंज्ञोपादानाय विषसंज्ञाप्रहाणायेति। अथेदानीमर्थं निराकरिष्यताऽवयव्युपपाद्यते‖ ।

## विद्याऽविद्याद्वैविध्यात् संशयः ॥ ४ ॥

सदसतोरुपलम्भाद्विद्या द्विविधा सदसतोरनुपलम्भादविद्यापि

---

* कः पुनरेष मिथ्यासङ्कल्पः। असाधारणवस्तूत्पत्तिनिमित्तत्वेन ममैवैतदिति व्यवसायस्तानसाधारणतया प्रपश्यतीति नैते ममैव चौराग्निदायादसाधारणा एवेति। न्या० वा०।

† अन्ये खल्ववयविसक्तां निवर्तयन्तोऽवयविनमेव प्रत्याचक्षते तान् प्रत्याचक्षाण आह। ता० टी०।

( ) २ पुस्तके नास्ति।    ‡ दोषा विवर्जनीया इति २।

§ द्विविध यद्यप्यसौ कामिनीलक्षणो विषयः तथापि रागादिप्रहाणार्थमवयवादिसंज्ञागोचरत्वं परित्यज्याशुभसंज्ञागोचरत्वमध्यारोप्यते वैराग्योत्पादनायेत्यर्थः। ता० टी०।

‖ विज्ञानवादिना ऽवयविनिराकरणमुपपाद्यते। अर्थविशेषे खल्ववयवानुव्यञ्जनसक्ते तत्रार्थमात्रस्याभावात्कुतोऽवयवानुव्यञ्जनसक्ते तन्निराकरणाय प्रथममवयवी निराक्रियते पश्चात्परमाणुः ततश्च ज्ञानमात्रमर्थरहितं सिद्धं भवतीत्यभिप्रायः। ता० टी०।

द्विविधा* । उपलभ्यमाने ऽवयविनि विद्याद्वैविध्यात्संशयः अनुपलभ्यमाने चाविद्याद्वैविध्यात्संशयः । सोऽयमवयवी यद्युपलभ्यते अथापि नोपलभ्यते न कथं चन संशयान्मुच्यते इति ।

तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

तस्मिन्ननुपपन्नः संशयः । कस्मात् पूर्वोक्तहेतूनामप्रतिषेधादस्ति द्रव्यान्तरारम्भ इति ।

वृत्त्यनुपपत्तेरपि तर्हि न संशयः ॥ ६ ॥

†संशयानुपपत्तिर्नास्त्यवयवीति । तद्विभजते ।

कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ॥ ७ ॥

एकैकोऽवयवो न तावत् कृत्स्ने ऽवयविनि‡ वर्तते तयोः §परिमाणभेदादवयवान्तरसंबन्धाभावप्रसङ्गाच्च । नाप्यवयव्येकदेशेन न ह्यस्यान्ये अवयवा एकदेशभूताः सन्तीति । अथावयवेष्वेवावयवी वर्तते ।

तेषु चावृत्तेरवयव्यभावः ॥ ८ ॥

न तावत्प्रत्यवयवं वर्तते तयोः परिमाणभेदाद् द्रव्यस्य चैकद्रव्यत्वप्रसङ्गात्‖ । नाप्येकदेशैः सर्वेष्वन्यावयवाभावात् । तदेवं न युक्तः संशयो नास्त्यवयवीति ।

---

* उपलब्धिर्विद्या ऽनुपलब्धिश्चाविद्या । सच्चोपलभ्यते यथा तडागगतं तोयमसच्चोपलभ्यते यथा मरुमरीचिकायामुदकं सच्च नोपलभ्यते यथा चिरनिखातं भूमौ निध्यादि असच्च नोपलभ्यते यथा भूतले दृश्यमाने तत्तुल्योपलम्भयोग्यो घटादिस्तदेवं विद्याऽविद्याद्वैविध्यादवयविनि संशयः । ता० टी० ।

† वृत्त्यनुपपत्तेरपि तर्हि । १ । ४ । ५ ।

‡ वृक्षस्तिष्ठति शाखादिषु शाखादयो वा वृक्ष इति लौकिकीं प्रतिपत्तिमनुरुध्येदम् ।

§ अणुपरिमाणो ऽवयवो महापरिमाणो ऽवयवीत्यणुपरिमाणेन महापरिमाणस्याव्याप्तेः । एकद्रव्यश्चावयवः प्राप्नोति एकावयववृत्तित्वात् । न चैकद्रव्यं द्रव्यमविनश्यदाधारमस्ति । कृतकानित्यत्वप्रसङ्गात् । ता० टी० ।

‖ एकावयववृत्तित्वात् एकद्रव्यो ऽवयवी प्राप्नोति । एकद्रव्यश्चावयवी एकेन द्रव्येणारभ्यतइति सततोत्पत्तिप्रसङ्गः । किं चैकद्रव्यवृत्तित्वादेकद्रव्यं द्व्यणुकमेकस्मिन् परमाणौ वर्ततइति कारणविभागविनाशाभावान्नित्यं प्राप्नोति । उत्पत्तिमच्च नित्यं चेति न दृष्टान्तो ऽस्ति । न्या० वा० ।

## पृथक् चावयवेभ्यो ऽवृत्तेः ॥ ९ ॥

पृथक् चावयवेभ्यो धर्मिभ्यो धर्मस्याग्रहणादिति समानम् ।

## *न चावयव्यवयवाः ॥ १० ॥

## एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेर-प्रश्नः ॥ ११ ॥

किं प्रत्यवयवं कृत्स्नो ऽवयवी वर्तते अथैकदेशेनेति नोपपद्यते प्रश्नः । कस्मादेकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेः । कृत्स्नमित्यनेकस्याशेषाभिधानम् एकदेश इति नानात्वे कस्य चिदभिधानं ताविमौ कृत्स्नैकदेशशब्दौ भेदविषयौ नैकस्मिन्नवयविन्युपपद्येते भेदाभावादिति । अन्यावयवाभावान्नैकदेशेन वर्तत इत्यहेतुः ।

## अवयवान्तराभावेप्यवृत्तेरहेतुः† ॥ १२ ॥

अवयवान्तराभावादिति यद्यप्येकदेशो ऽवयवान्तरभूतस्य ‡तथाप्यवयवे ऽवयवान्तरं वर्तेत नावयवीति । अन्यो§ऽवयवीति अन्यावयवभावे ऽप्यवृत्तेरवयविनो नैकदेशेन वृत्तिरन्यावयवाभावादित्यहेतुः । वृत्तिः कथमिति चेद् एकस्यानेकत्राश्रयाश्रितसंबन्धलक्षणा प्राप्तिः । आश्रयाश्रितभावः कथमिति चेद् यस्य यतो ऽन्यत्रात्मलाभानुपपत्तिः स आश्रयः न कारणद्रव्येभ्यो ऽन्यत्र कार्यद्रव्यमात्मानं लभते विपर्ययस्तु कारणद्रव्येष्विति । नित्येषु कथमिति चेद् (अनित्येषु दर्शनात्सिद्धम् । नित्येषु द्रव्येषु कथमाश्रयाश्रयिभाव इति चेद्||)

---

* यस्तु मन्येत अवयवानां धर्ममात्रमवयवी न स्वावयवेभ्यो ऽत्यन्त भिन्नो ऽभिन्नो वा । भिन्नत्वे गवाश्ववद्धर्मधर्मिभावानुपपत्तेः । अभिन्नत्वे ऽपि धर्मित्ववत्तदनुपपत्ते । तस्मात् कथं चिद्भिन्नो ऽभिन्नः कथं चिद्धर्ममात्रमवयवानामवयवीति तं प्रत्याह । न चावयव्यवयवाः । न तावद्भेदाभेदौ परस्पराभावात्मानावेकत्र समवेत इत्युक्तम नाप्यात्यन्तिके ऽभेदे धर्मधर्मिभावः । तस्माद्यथा ऽऽत्यन्तिकभेदे ऽपि केषां चिदेव कार्यकारणभावस्तथा केषां चिदेव धर्मधर्मिभाव इत्येषितव्यम् । तथा च दूषणमित्यर्थः । ता॰ टी॰ ।

† एकदेशेन चावयवी न स्वावयवेषु वर्तत इत्यत्र प्रतिज्ञार्थे ऽवयवान्तराभावादित्यहेतुः । कस्मादवयवान्तरमवयविनो भवत्यथाप्यवयवान्तराण्येवावयविनो ऽवयवान्तरे वर्तन्ते किमायातमवयविवृत्तेरिति । एक चानेकत्र वर्तत इति प्रतिजानानः किं कार्त्स्न्येन किमेकदेशेनेति नानुयोज्यः । कस्मादुभयेन कार्त्स्न्यैनैकदेशेन वा नानात्वैकार्यसमवायित्वादिना एकस्यावयविनो व्याघातात् । ता॰ टी॰

‡ भूतस्यात्तथापीति १ । § नास्ति ४ । ४ । || ( ) २ नास्ति

अनित्येषु ( द्रव्यगुणेषु* ) दर्शनादाश्रयाश्रितभावस्य नित्येषु सिद्धिरिति । तस्मादवयव्यभिमानः प्रतिषिध्यते निःश्रेयसकामस्य नावयवी यथा रूपादिषु मिथ्यासंकल्पो न रूपादय इति । सर्वाग्रहणमवयव्यसिद्धेरिति प्रत्यवस्थितो† ऽप्येतदाह ।

## केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ १३ ॥

यथैकैकः केश ( स्तैमिरिकेण‡ ) नोपलभ्यते केशसमूहस्तूपलभ्यते तथैकैको ऽणुर्नोपलभ्यते अणुसंचयस्तूपलभ्यते तदिदमणुसमूहविषयं ग्रहणमिति ।

## स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथा भावो नाविषये प्रवृत्तिः ॥ १४ ॥

यथाविषयमिन्द्रियाणां पटुमन्दभावाद्विषयग्रहणानां पटुमन्दभावो भवति । चक्षुः खलु प्रकृष्यमाणं नाविषयं गन्धं गृह्णाति निकृष्यमाणं च न स्वविषयात् प्रच्यवते । सोयं तैमिरिकः कश्चिच्चक्षुर्विषयं केशं न गृह्णाति कश्चिद्गृह्णाति केशसमूहम् । उभयं ह्यतैमिरिकेण चक्षुषा गृह्यते परमाणवस्त्वतीन्द्रिया ( इन्द्रियाविषयभूताः§ ) न केन चिदिन्द्रियेण गृह्यन्ते समुदितास्तु गृह्यन्त इत्यविषये प्रवृत्तिरिन्द्रियस्य प्रसज्येत । न जात्वर्थान्तरमणुभ्यो गृह्यत इति । ते खल्विमे परमाणवः संनिहिता‖ गृह्यमाणा अतीन्द्रियत्वं जहति वियुक्ताश्चागृह्यमाणा इन्द्रियविषयत्वं न लभन्त इति । सो ऽयं द्रव्यान्तरानुत्पत्तावतिमहान् व्याघात इत्युपपद्यते¶ द्रव्यान्तरं यद्ग्रहणस्य विषय इति । संचयमात्रं विषय इति चेद् न **संचयस्य संयोगभावात्तस्य चातीन्द्रियस्याग्रहणादयुक्तम् । संचयः खल्वनेकस्य संयोगः स च गृह्यमाणाश्रयो गृह्यते नातीन्द्रियाश्रयः भवति हीदमनेन संयुक्तमिति तस्मादयुक्तमेतदिति । गृह्यमाणस्य चेन्द्रियेण विषयस्यावरणाद्यनुपलब्धिकारणमुपलभ्यते तस्मान्नेन्द्रियदौर्बल्यादनुपलब्धिरणूनाम् । यथा नेन्द्रियदौर्बल्याच्चक्षुषा ऽनुपलब्धिर्गन्धादीनामिति ।

---

* ( ) २ नास्ति । † प्रत्यवस्थितेयोदमाह २ । ‡ ( ) २ नास्ति ।
§ ( ) २ नास्ति । ‖ संन्यिता अतीन्द्रियत्वं जहतीति १ । ¶ इत्युच्यते इति २ । ** संचयसंयोगभावादिति २ ।

## *अवयवावयविप्रसङ्गश्चैवमा प्रलयात्† ॥ १५ ॥

यः खल्ववयविनोऽवयवेषु वृत्तिप्रतिषेधादभावः सोऽयमवयवस्यावयवेषु प्रसज्यमानः सर्वप्रलयाय वा कल्पेत निरवयवाद्वा परमाणुतो निवर्तेत उभयथा चोपलब्धिविषयस्याभावः तदभावादुपलब्ध्यभावः उपलब्ध्याश्रयश्चायं वृत्तिप्रतिषेधः स आश्रयं व्याघ्नन्नात्मघाताय कल्पत इति । अथापि ।

## न प्रलयोऽणुसद्भावात् ॥ १६ ॥

अवयवविभागमाश्रित्य वृत्तिप्रतिषेधादभावः प्रसज्यमानो निरवयवात्परमाणोर्निवर्तेत न सर्वप्रलयाय कल्पते‡ निरवयवत्वं खलु परमाणोर्विभागैरल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् । लोष्टस्य खलु प्रविभज्यमानावयवस्याल्पतरमल्पतमम्§उत्तरमुत्तरं भवति स चायमल्पतरप्रसङ्गः‖यस्मान्नाल्पतरमस्ति यः परमोऽल्पस्तत्र निवर्तते यतश्च नाल्पीयोऽस्ति तं परमाणु प्रचक्ष्महइति ।

## ¶परं वा त्रुटेः ॥ १७ ॥

**अवयवविभागस्यानवस्थानाद् द्रव्याणामसंख्येयत्वात् त्रुटित्वनिवृत्तिरिति । अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह ।

---

* यदि चायं वृत्तिविकल्प आश्रयव्याघातादयुक्त इत्याह । ता॰ टी॰ ।

† अत्र त्रयः पक्षाः सम्भवन्ति । योऽयमवयवेष्ववयविवृत्तिविकल्पानुपपत्त्याऽवयविनोऽभावप्रसङ्ग आपाद्यते स प्रलयाद्वा निवर्तेत परमाणौ वा न क्वचिदपि निवर्तेत वेति । तत्र प्रथमद्वितीयविकल्पावाश्रित्येदं सूत्रम् । यथैव वृत्तिविकल्पः स्थूले घटादाविवं तदवयवेषु तदवयवेष्वपीति तदभावात्प्रलये व्यवतिष्ठेत । न च प्रलयः सर्वाश्रयरहितो दर्शनविषयः सम्भवतीति दर्शनविषयाभावादनाश्रयो विकल्प आत्मानमेव न लभते । उपलक्षणं चेदमा प्रलयादिति आ परमाणोरित्यपि द्रष्टव्यम् । परमाणूनामतीन्द्रियत्वेन दर्शनविषयत्वाभावादनाश्रयता विकल्पस्य सदवस्थैव तदिदमुक्तम् । ता॰ टी॰ ।

‡ कल्पत इति ४ ।

§ अल्पतरमल्पतममिति २ । ४ ।

‖ प्रसङ्गे इति २ ।

¶ अथानन्तमेवायमवयवविभागः कस्मान्न भवतीत्यत आह । यदि त्रुटेः परं द्विविपदके ऽवयवविभागो नावतिष्ठते ततो ऽवयवविभागस्यानवस्थानाद् द्रव्याणामसंख्येयत्वात् त्रुटित्वनिवृत्तिः त्रुटिरपि हि सुमेरुणा तुल्यपरिमाणः स्यात् । न ह्यनन्तावयवत्वे कश्चिद्विशेष इत्यर्थः । ता॰ टी॰

** अवयवविभागस्यानवस्थानेति २ ।

## आकाशव्यतिभेदात् तदनुपपत्तिः ॥ १८ ॥

तस्याणोर्निरवयवस्य (नित्य*) स्यानुपपत्तिः । कस्मात् आकाशव्यतिभेदात् । अन्तर्बहिश्चाणुराकाशेन समाविष्टो व्यतिभिन्नो† व्यतिभेदात्सावयवः सावयवत्वादनित्य इति ।

## आकाशासर्वगतत्वं वा ॥ १९ ॥

अथैतन्नेष्यते परमाणोरन्तर्नास्त्याकाशमित्यसर्वगतत्वं प्रसज्यते इति ।

## अन्तर्बहिश्च कार्यद्रव्यस्य ‡कारणान्तरवचनादकार्ये तदभावः ॥ २० ॥

अन्तरिति पिहितं कारणान्तरैः कारणमुच्यते । बहिरिति च व्यवधायकमव्यवहितं कारणमेवोच्यते । तदेतत्कार्यद्रव्यस्य संभवति नाणोरकार्यत्वात् । अकार्ये हि परमाणावन्तर्बहिरित्यस्याभावः । यत्र चास्य भावो ऽणुकार्यं तत्र परमाणुः यतो हि नाल्पतरमस्ति स परमाणुरिति ।

## §शब्दसंयोगविभवाच्च सर्वगतम् ॥ २१ ॥

यत्र क्व चिदुत्पन्नाः शब्दा विभवन्त्याकाशे तदाश्रया भवन्ति मनोभिः परमाणुभिस्तत्कार्यैश्च संयोगा विभवन्त्याकाशे नासंयुक्तमाकाशेन किं चिन्मूर्तद्रव्यमुपलभ्यते तस्मान्नासर्वगतमिति ।

## ‖अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २२ ॥

¶संसर्पता प्रतिघातिना द्रव्येण न व्यूह्यते यथा काष्ठेनोदकम् । कस्मात् निरवयवत्वात् । सर्पच्च प्रतिघातिद्रव्यं न विष्टभ्नाति नास्य क्रियाहेतुं गुणं प्रतिबध्नाति । कस्मात् अस्पर्शत्वात् विपर्यये हि विष्टम्भो दृष्ट इति (सावयवे**) स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नाशङ्कितुमर्हति ।

अण्ववयवस्याणुतरत्वप्रसङ्गादणुकार्यप्रतिषेधः ॥

---

* ( ) ४ नास्ति । † व्यतिभिन्ने । इति २ ।

‡ कारणान्तरं कारणविशेषः तस्य वचनमित्यर्थः । ता॰ टी॰ ।

§ सर्वसंयोगशब्दात् १ । ४ ।

‖ स्यादेतत् । आकाशं चेत्सर्वगतं ततो मूर्तिमतां द्रव्याणां व्यूहान्तरापादनं च जलौघस्येव नावादिना भवेद् न चास्ति तस्मान्न सर्वगतत्वमित्यत आह । ता॰ टी॰ । ¶ संसर्पताप्रतिघातिनेति १ । ४ । ** ( ) नास्ति ४ सप्रयत्न इति ५ ।

सावयवत्वे चाणोरवयवो ऽणुतर इति प्रसज्यते। कस्मात्कार्यकारणद्रव्ययोः परिमाणभेददर्शनात्। तस्मादणववयवस्याणुतरत्वं यस्तु सावयवो ऽणुकार्यं तदिति। तस्मादणुकार्यमिदं प्रतिषिध्यत इति। कारणविभागाच्च कार्यस्यानित्यत्वं नाकाशव्यतिभेदात्। लोष्टस्यावयवविभागादनित्यत्वं नाकाशसमावेशादिति।

*मूर्त्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २३ ॥

परिच्छिन्नानां हि स्पर्शवतां संस्थानं त्रिकोणं चतुरस्रं समं परिमण्डलमित्युपपद्यते यत्तत्संस्थानं सो ऽवयवसन्निवेशः परिमण्डलाश्चाणवस्तस्मात्सावयवा इति।

†संयोगोपपत्तेश्च ॥ २४ ॥

मध्ये सन्नणुः पूर्वापराभ्याम् अणुभ्यां संयुक्तस्तयोर्व्यवधानं कुरुते। व्यवधानेनानुमीयते पूर्वभागेन पूर्वेणाणुना संयुज्यते परभागेन परेणाणुना संयुज्यते यौ तौ पूर्वापरौ भागौ तावस्यावयवौ एवं सर्वतः संयुज्यमानस्य सर्वतो भागा अवयवा इति। ‡यत्तावन्मूर्तिमतां संस्थानोपपत्तेरवयवसद्भाव इति अत्रोक्तं किमुक्तम्। विभागाल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्र निवृत्तेरवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति। यत्पुनरेतत्संयोगोपपत्तेश्चेति स्पर्शवत्त्वाद्व्यवधानमाश्रयस्य चाव्याप्त्या भागभक्तिः। उक्तं चात्र स्पर्शवानणुः स्पर्शवतोरण्वोः प्रतिघाताद्व्यवधायको न सावयवत्वात्। स्पर्शवत्त्वाच्च व्यवधाने सत्यणुसंयोगो नाश्रयं व्याप्नोतीति भागभक्तिर्भवति भागवानिवायमिति। उक्तं चात्र विभागे ऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् तदवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति। मूर्तिमतां च संस्थानोपपत्तेः संयोगोपपत्तेश्च परमाणूनां सावयवत्वमिति हेत्वोः

अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २५ ॥

---

* पुनः शून्यतावादी प्रत्यवतिष्ठते। ता॰ टी॰।

† संस्थानं नाम प्रचयाख्यः संयोगो घटादिशरीरघटत्वादिजातिव्यक्तिहेतुरिति संयोगः। संयोगमात्रं त्वग्रादिपूर्विका प्राप्तिरिति तस्मादपौनरुक्त्यम्। ता॰ टी॰।

‡ तदेतच्छून्यतामतमपाकरोति। यत्तावदिति। ता॰ टी॰।

यावन्मूर्तिमद्यावच्च संयुज्यते तत्सर्वं सावयवमित्यनवस्थाकारिणाविमौ हेतू सा चानवस्था नोपपद्यते । सत्यामनवस्थायां* सत्यौ हेतू स्यातां तस्मादप्रतिषेधोऽयं निरवयवत्वस्येति । विभागस्य च विभज्यमानहानिर्नोपपद्यते तस्मात्प्रलयान्तता नोपपद्यतइति† । अनवस्थायां च प्रत्यधिकरणं द्रव्यावयवानामानन्त्यात् परिमाणभेदानां गुरुत्वस्य चाग्रहणं समानपरिमाणत्वं चावयवावयविनोः परमाण्ववयवविभागादूर्ध्वमिति । ‡यदिदमभवान्बुद्धीराश्रित्य बुद्धिविषयाः सन्तीति मन्यते मिथ्याबुद्धय एताः । यदि हि तत्त्वबुद्धयः स्युर्बुद्ध्या विवेचने क्रियमाणे याथात्म्यं बुद्धिविषयाणामुपलभ्येत ।

**बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥ २६ ॥**

यथा §ऽयं तन्तुरयं तन्तुरिति प्रत्येकं तन्तुषु विविच्यमानेषु नार्थान्तरं किंचिदुपलभ्यते यत्पटबुद्धेर्विषयः स्यात् । याथात्म्यानुपलब्धेरसति विषये पटबुद्धिर्भवन्ती|| मिथ्याबुद्धिर्भवति एवं सर्वत्रेति ।

**व्याहतत्वादहेतुः ॥ २७ ॥**

यदि बुद्ध्या विवेचनं भावानां न सर्वभावानां याथात्म्यानुपलब्धिः । अथ सर्वभावानां याथात्म्यानुपलब्धिर्न बुद्ध्या विवेचनं भावानां ¶याथात्म्यानुपलब्धिश्चेति व्याहन्यते** । तदुक्तम् अवयवावयविप्रसङ्गश्चैवमा प्रलयादिति ।

---

* सत्यामनवस्थायामिति ४ ।

† विभागस्य परमाण्वन्तत्वं प्रलयान्तत्वमनन्तत्वं वा वक्तव्यं तत्राद्ये तत्रैव मूर्तिमत्त्वस्य व्यभिचारः । निरवयवत्वेनाभ्युपगते तस्मिन् मूर्तिमत्त्वस्य सावयवत्वस्य चाभ्युपगमे व्याघातश्च । अन्त्ययोः पक्षयोर्व्याघातस्त्रुटेरमेयत्वप्रसङ्गो विभागस्य चानाधारत्वप्रसङ्गः । परमाणुत्वेन त्र्यणुके सावयवत्वोक्तेः निरवयवद्रव्यानभ्युपगमाच्च । ‡ विज्ञानवाद्याह । यदिदमिति । ता॰ टी॰ ।

§ यथाऽयं तन्तुरयं तन्तुरयं तन्तुरिति २ पुस्तके । || भवतीति १ । २ । ४ । ५ ।

¶ बुद्ध्या विवेचनं चेति २ पुस्तकेऽधिकम् ।

** यस्य विविच्यमानस्य याथार्थ्यानुपलब्धिस्तत् कुतश्चिद्विवेचनीयम् । अबुध्यमाने तदनुपपत्तेः तथा च तेनावधिना क्व चिदवस्थातव्यम् । अनवस्थायां त्रुटेरमेयत्वप्रसङ्गादित्युक्तम् । तस्मात्परमाणुषु वा तत्संयोगेषु वा तेनावस्थातव्यं तथा च यतो विविच्यते भावः स एवास्यावधिर्याथार्थ्येन नोपलभ्यतइति बुद्ध्या विवेचनस्य भावानुपपत्तिव्याघात इति सिद्धम् । ता॰ टी॰ ।

## तदाश्रयत्वादपृथग्ग्रहणम्* ॥ २८ ॥

कार्यद्रव्यं कारणद्रव्याश्रितं तत्कारणेभ्यः† पृथङ् नोपलभ्यते विपर्यये पृथग्ग्रहणात् । यत्राश्रयाश्रितभावो नास्ति तत्र पृथग्ग्रहणमिति बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु । यदिन्द्रियेण गृह्यते तदेतया बुद्ध्या विविच्यमानमन्यदिति ।

## प्रमाणतश्चार्थप्रतिपत्तेः‡ ॥ २९ ॥

बुद्ध्या विवेचनाद्भावानां याथात्म्योपलब्धिः यदस्ति यथा च (यन्नास्ति यथा च) तत्सर्वं प्रमाणत उपलब्ध्या सिध्यति या च प्रमाणत उपलब्धिस्तद्बुद्ध्या विवेचनं भावानां तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः । परीक्षमाणो हि बुद्ध्याऽध्यवस्यति इदमस्तीदं नास्तीति तत्र न सर्वभावानुपपत्तिः ।

## प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥

एवं च सति सर्वं नास्तीति नोपपद्यते कस्मात्प्रमाणानुपपत्त्युपपत्तिभ्याम् । यदि सर्वं नास्तीति प्रमाणमुपपद्यते सर्वं नास्तीत्येतद्व्याहन्यते । अथ प्रमाणं नोपपद्यते सर्वं नास्तीत्यस्य कथं सिद्धिः । अथ प्रमाणमन्तरेण सिद्धिः सर्वमस्तीत्यस्य कथं न सिद्धिः ।

## ||स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ३१ ॥

यथा स्वप्ने न विषयाः सन्त्यथ चाभिमानो भवति एवं न प्रमाणानि प्रमेयानि च सन्त्यथ च प्रमाणप्रमेयाभिमानो भवति ।

## मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३२ ॥

## ¶हेत्वभावादसिद्धिः ॥ ३३ ॥

---

* तन्तूनामनेकत्वेन ज्ञानं पटस्य त्वेकत्वेनेति पृथग्ग्रहणमस्त्येव । पटस्य तन्तवस्तन्त्वर्थश्च इत्याधाराभेदोऽपि । पटस्यान्यत्रादर्शने तु तदाश्रितत्वं तन्त्वाश्रितमिति न तदभेदप्रसक्तिरित्यर्थः ।

† तत्कारणेभ्य इति ५ । ‡ प्रमाणतश्चार्थप्रतिषेधः ३ । ( ) ५ नास्ति ।

|| यदुक्तं प्रमाणेतरस्यनुपपत्तिभ्यां न सर्वभावानुपपत्तिरिति तत्र प्रत्यवतिष्ठते विज्ञानवादी । ता० टी० ।

¶ तदेतद् दूषयति । ता० टी० ।

स्वप्नान्ते विषयाभिमानवत्प्रमाणप्रमेयाभिमानो न पुनर्जागरितान्ते विषयोपलब्धिवदित्यत्र हेतुर्नास्ति। हेत्वभावादसिद्धिः। स्वप्नान्ते* चासन्तो विषया उपलभ्यन्त इत्यत्रापि हेत्वभावः। **प्रतिबोधेऽनुपलम्भादिति चेत् प्रतिबोधविषयोपलम्भादप्रतिषेधः**। यदि प्रतिबोधेऽनुपलम्भात्स्वप्ने विषया न सन्तीति तर्हि य इमे प्रतिबुद्धेन विषया उपलभ्यन्ते उपलम्भात्सन्तीति विपर्यये हि हेतुसामर्थ्यमुपलम्भाभावे सत्यनुपलम्भादभावः सिध्यति उभयथा त्वभावे†नानुपलम्भस्य सामर्थ्यमस्ति यथा प्रदीपस्याभावाद्रूपस्यादर्शनमिति। तत्र भावेनाभावः समर्थ्यत इति। **स्वप्नान्तविकल्पे च हेतुवचनम्**। स्वप्नविषयाभिमानवदिति ब्रुवता स्वप्नान्तविकल्पे हेतुर्वाच्यः। कश्चित्स्वप्नो‡ भयोपसंहितः कश्चित्प्रमोदोपसंहितः कश्चिदुभयविपरीतः कदाचित्स्वप्नमेव न पश्यतीति। निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पा§द्विकल्पोपपत्तिः।

**स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥**

पूर्वोपलब्धविषयः॥ यथा स्मृतिश्च संकल्पश्च पूर्वोपलब्धविषयौ न तस्य प्रत्याख्यानाय कल्पेते तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय¶ कल्पत इति। एवं दृष्टविषयश्च स्वप्नान्तो जागरितान्तेन यः सुप्तः स्वप्नं पश्यति स एव जाग्रत्स्वप्नदर्शनानि प्रतिसंधत्त इदमद्राक्षमिति। तत्र जाग्रद्बुद्धिवृत्तिवशात्स्वप्नविषयाभिमानो मिथ्येति व्यवसायः। सति च

---

* अन्तशब्दोऽवयववचनोऽप्यान्तिमत्वमात्रेणावस्थायां प्रयुक्तः तेन स्वप्नावस्थायां जागरितावस्थायामित्यर्थः। एतदुक्तं भवति। स्वप्नविज्ञानस्यायथार्थ्यमिच्छता बाधकमन्तरेण तदनुपपत्तेर्जाग्रत्प्रत्ययोऽस्य बाधको वक्तव्यः। न चासावसमीचीनस्तं बाधितुमुत्सहत इति समीचीनत्वं जाग्रत्प्रत्ययानामभ्युपगन्तव्यं तथा च जागरितान्ते विषयोपलब्धिवदित्युपपन्नम्। ता॰ टी॰।

† स्वप्नजागरितावस्थयोरुभयोरपि विषयाभावाभ्युपगमे ऽनुपलब्धेरभावग्राहकत्वमपि न सिध्येद्दृष्टान्ताभावादिति भाव॰।   ‡ स्वप्ने-इति १।४।

§ स्वप्नवैचित्र्यस्य कादाचित्कत्वेन सहेतुकत्वान्निमित्तवैचित्र्यस्यावश्याभ्युपगन्तव्यत्वेन तेनैव विषयसत्तासिद्धेः सर्वशून्यता बाधितेति भावः।

॥ उपलब्धो विषय इति ४।

¶ पूर्वोपलब्धेरुपजीव्यत्वेन तद्बाधकत्वानुपपत्तेरिति भाव॰।

प्रतिसंधाने या जायते बुद्धिवृत्तिस्तद्वशादयं व्यवसायः स्वप्नविषयाभिमानो मिथ्येति । उभयाविशेषे तु साधनानर्थक्यम् । यस्य स्वप्नान्तजागरितान्तयोरविशेषस्तस्य स्वप्नविषयाभिमानवदिति साधनमनर्थकं तदाश्रयप्रत्याख्यानात् । अतस्मिंस्तदिति च व्यवसायः प्रधानाश्रयः अपुरुषे स्थाणौ पुरुष इति व्यवसायः स प्रधानाश्रयो (न खलु पुरुषे ऽनुपलब्धे पुरुष इत्यपुरुषे व्यवसायो भवति एवं स्वप्नविषयस्य व्यवसायो हस्तिनमद्राक्षं पर्वतमद्राक्षमिति प्रधानाश्रयो) भवितुमर्हति । एवं च सति ।

## मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे* ॥ ३५ ॥

स्थाणौ पुरुषो ऽयमिति व्यवसायो मिथ्योपलब्धिः (अतस्मिंस्तदिति ज्ञानं स्थाणौ स्थाणुरिति व्यवसायस्तत्त्वज्ञानं तत्त्वज्ञानेन च मिथ्योपलब्धिर्निवर्त्यते नार्थः स्थाणुपुरुषसामान्यलक्षणः यथा प्रतिबोधे या ज्ञानवृत्तिस्तया स्वप्नविषयाभिमानो†) निवर्त्यते नार्थो विषयसामान्यलक्षणः तथा मायागन्धर्वनगरमृगतृष्णिकाणामपि या बुद्धयो ऽतस्मिंस्तदिति व्यवसायास्तत्राप्यनेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानान्नार्थप्रतिषेध इति । उपादानवच्च मायादिषु मिथ्याज्ञानं प्रज्ञापनीयसरूपं च द्रव्यमुपादाय साधनवान्परस्य मिथ्याऽध्यवसायं करोति सा माया नीहारप्रभृतीनां नगररूपसन्निवेशे‡ दूरान्नगरबुद्धिरुत्पद्यते विपर्यये तदभावात् । सूर्यमरीचिषु भौमेनोष्मणा संसृष्टेषु स्पन्दमानेषूदकबुद्धिर्भवति सामान्यग्रहणात् अन्तिकस्थस्य विपर्यये तदभावात् । क्व चित् कदा चित् कस्य चिच्च भावान्नानिमित्तं मिथ्याज्ञानं दृष्टं च बुद्धिद्वैतं मायाप्रयोक्तुः परस्य च दूरान्तिकस्थयोर्गन्धर्वनगरमृगतृष्णिकासु सुप्तप्रतिबुद्धयोश्च स्वप्नविषये तदेतत्सर्वस्याभावे निरुपाख्यतायां निरात्मकत्वे नोपपद्यत इति ।

---

* एवं सति मिथ्याज्ञानस्य प्रधानाश्रयत्वे सति मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानाद् बाधकात् स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे न त्वर्थस्य सामान्यस्यापीति शेषः । ता० टी० ।

† ब ( ) नास्ति ।

‡ सरूपेति ब ।

## बुद्धेश्चैवं निमित्तसद्भावोपलम्भात्* ॥ ३६ ॥

मिथ्याबुद्धेरप्यर्थवदप्रतिषेधः । कस्मात् निमित्तोपलम्भात् सद्भावोपलम्भाच्च । उपलभ्यते मिथ्याबुद्धिनिमित्तं मिथ्याबुद्धिश्च प्रत्यात्ममुत्पन्ना गृह्यते संवेद्यत्वात् तस्मान्मिथ्याबुद्धिरप्यस्तीति ।

## †तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेः‡द्वैविध्योपपत्तिः ॥ ३७ ॥

तत्त्वं स्थाणुरिति प्रधानं पुरुष इति तत्त्वप्रधानयोरलोपाद्भेदात् स्थाणौ पुरुष इति मिथ्याबुद्धिरुत्पद्यते सामान्यग्रहणात् । एवं पताकायां बलाकेति लोष्टे§ कपोत इति न तु||समाने विषये मिथ्याबुद्धीनां समावेशः सामान्यग्रहणाव्यवस्थानात् । यस्य तु निरात्मकं निरुपाख्यं सर्वं तस्य समावेशः प्रसज्यते । गन्धादौ च प्रमेये गन्धादिबुद्धयो मिथ्याभिमतास्तत्त्वप्रधानयोः सामान्यग्रहणस्य चाभावात्तत्त्वबुद्धय एव भवन्ति तस्मादयुक्तमेतत् प्रमाणप्रमेयबुद्धयो मिथ्येति । दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम् ।

अथ कथं तत्त्वज्ञानमुत्पद्यत इति ।

## ¶समाधिविशेषाभ्यासात् ॥ ३८ ॥

स तु प्रत्याहृतस्येन्द्रियेभ्यो** मनसो††धारकेण प्रयत्नेन धार्यमाणस्यात्मना संयोग‡‡स्तत्त्वबुभुत्साविशिष्टः सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते तदभ्यासवशात्तत्त्वबुद्धिरुत्पद्यते । यदुक्तं सति हि तस्मिन् इन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते इत्येतत् ।

## §§नार्थविशेषप्राबल्यात् ॥ ३९ ॥

---

* अर्थे हि निषिद्धे तद्बुद्धेरप्येतत् तद्भावस्यापत्ते तद्बुद्धेश्चाप्यत्र बुद्धिसद्भावो ऽपि सिध्यति । ता॰ टी॰ ।

† मिथ्याबुद्ध्या तन्निमित्तं लक्ष्यते तेन मिथ्याबुद्धिनिमित्तस्य द्वैविध्यमित्यर्थः । ता॰ टी॰ ।  ‡ मिथ्याबुद्धिद्वैविध्योपपत्तिरिति २ ।  § लोष्ठेति १ । ४ ।

|| असमाने इति २ पा॰ ।  ¶ समाधितत्त्वाभ्यासादिति तात्पर्यटीकाधृतः पाठः ।

** इन्द्रियार्थेभ्य इति २ । ५ ।

†† अनेन विक्षेपं निवर्तयति । ता॰ टी॰ ।

‡‡ अयं खलु सुषुप्तावस्थायामस्तीत्यत उक्तम् । ता॰ टी॰ ।

§§ इन्द्रियविषयैरपहृतमनसो न धारणा तथा च तदभ्यासाभावान्न तत्त्वसाक्षात्कार इति सूत्रार्थः ता॰ टी॰ ।

अनिच्छतो ऽपि बुद्ध्युत्पत्तेर्नैतद्युक्तम् । कस्माद् अर्थविशेषप्राबल्याद् अबुभुत्समानस्यापि बुद्ध्युत्पत्तिर्दृष्टा यथा स्तनयित्नुशब्दप्रभृतिषु तत्र समाधिविशेषो नोपपद्यते ।

*क्षुदादिभिः प्रवर्त्तनाच्च ॥ ४० ॥

क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतो ऽपि बुद्धयः प्रवर्त्तन्ते तस्मादैकाग्र्यानुपपत्तिरिति । अस्त्वेतत्समाधिं विहाय व्युत्थानं व्युत्थाननिमित्तं समाधिप्रत्यनीकं च सति त्वेतस्मिन् ।

†पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ४१ ॥

पूर्वकृतो जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्मप्रविवेकः‡ फलानुबन्धो योगाभ्याससामर्थ्ये निष्फले ह्यभ्यासे नाभ्यासमाद्रियेरन् । दृष्टं हि लौकिकेषु कर्मस्वभ्याससामर्थ्यम् । प्रत्यनीकपरिहारार्थं च ।

अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः§ ॥ ४२ ॥

योगाभ्यासजनितो धर्मो जन्मान्तरे ऽप्यनुवर्त्तते प्रचयकाष्ठागतो‖ तत्त्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्त्वज्ञानमुत्पद्यत इति । दृष्टश्च समाधिना ऽर्थविशेषप्राबल्याभिभवः नाहमेतदश्रौषं नाहमेतदज्ञासिषमन्यत्र मे मनो ऽभूदित्याह लौकिक इति ।

यद्यर्थविशेषप्राबल्यादनिच्छतो ऽपि बुद्ध्युत्पत्तिरनुज्ञायते ।

अपवर्गेऽप्येवं प्रसङ्गः ॥ ४३ ॥

मुक्तस्यापि बाह्यार्थसामर्थ्याद् बुद्धय उत्पद्येरन्निति ।

न निष्पन्नावश्यम्भावित्वात्¶ ॥ ४४ ॥

कर्मवशान्निष्पन्ने शरीरे चेष्टेन्द्रियार्थाश्रये निमित्तभावादवश्यंभावी बुद्धीनामुत्पादः न च प्रबलो ऽपि सन् बाह्यो**ऽर्थ आत्मनो बुद्ध्युत्पादे समर्थो भवति तस्येन्द्रियेण संयोगाद्बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति ।

---

* क्षुधादिभिरिति क्वचित् ।

† पूर्वकृत समाधिः । तस्य फलं संस्कारः तस्यानुबन्धः स्थेमा तस्मादिति सूत्रार्थः । ता टी० ।

‡ प्रविविच्यते विशिष्यतइति प्रविवेकः धर्मश्चासौ प्रविवेकश्चेति धर्मप्रविवेकः । ता टी । § योगाभ्यासोपदेशादिति ४ । ‖ काष्ठां गते इति २ ।

¶ पूर्वपक्षिणः सिद्धान्तसूत्रम् । ता टी० । सति शरीरे बाह्यविशेषयोर्ज्ञानोत्पत्तिकारणत्वं नान्यथेति सूत्रार्थः । न्या वा । ** बाह्यार्थं इति २ । ५ ।

*तदभावश्चापवर्गः ॥ ४५ ॥

तस्य बुद्धिनिमित्ताश्रयस्य शरीरेन्द्रियस्य धर्माधर्माभावादभावो ऽपवर्गः। तत्र यदुक्तमपवर्गो ऽप्येवं प्रसक्त इति तदयुक्तम् । तस्मात्सर्वदुःखविमोक्षो ऽपवर्गः । यस्मात्सर्वदुःखबीजं सर्वदुःखायतनं चापवर्गे विच्छिद्यते तस्मात्सर्वेण दुःखेन विमुक्तिरपवर्गो न निर्बीजं निरायतनं च दुःखमुत्पद्यतइति ।

तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४६ ॥

तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः । यमः समानमाश्रमिणां धर्मसाधनं नियमस्तु विशिष्टम्† । आत्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः । स पुनस्तपः प्राणायामः प्रत्याहारो ध्यानं धारणेति । इन्द्रियविषयेषु प्रसंख्यानाभ्यासो रागद्वेषप्रहाणार्थः उपायस्तु योगाचार‡ विधानमिति ।

§ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः|| ॥ ४७ ॥

तदर्थमिति प्रकृतम् । ज्ञायते ऽनेनेति ज्ञानमात्मविद्याशास्त्रं¶ तस्य ग्रहणमध्ययनधारणे अभ्यासः सततक्रियाऽध्ययनश्रवणचिन्तनानि तद्विद्यैश्च** सह संवाद इति प्रज्ञापरिपाकार्थं परिपाकस्तु संशयच्छेदनमविज्ञातार्थबोधो†† ऽध्यवसिताभ्यनुज्ञानमिति समायवादः संवादः ।

तद्विद्यैश्च सह संवाद इत्यविभक्तार्थं वचनं विभज्यते ।

तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात्‡‡ ॥ ४८ ॥

---

* तदभावश्चापवर्ग इति २ ।    † विशिष्ट इति ३ ।

‡ योगाचार एकान्तकारिता आहारविशेष एकत्रानवस्थानादि इत्यादि यतिधर्मोक्तम् । ता॰ टी॰ ।

§ ननु यद्येतत्तत्त्वज्ञानोत्पादक्रमेणापवर्गोपायः कृतं तर्ह्यान्वीक्षिक्येत्यत आह । ता॰ टी॰ ।    || सहेति नास्ति १ । ४ । ५ ।

¶ आत्मविद्या आन्वीक्षिकी । ता॰ टी॰ ।

** सहेति नास्ति ३ ।    †† अर्थावबोधोऽध्यवसितेति १ । ४ ।

‡‡ अभिमुखमुपेत्य जानीयात् । ता॰ टी॰ ।

एतन्निगदेनैव नीतार्थमिति ।

यदिदं मन्येत पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति* ।

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥**

तमभ्युपेयादिति वर्त्तते । परतः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेदिति ।

अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि† ।

स्वपक्षरागेण चैके न्यायमतिवर्त्तन्ते तत्र ।

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥**

अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति । विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य‡ ।

**ताभ्यां विगृह्य कथनम्§ ॥ ५१ ॥**

विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति । तदेतद्विद्यापालनार्थं न लाभपूजाख्यात्यर्थमिति|| ।

इति श्रीवात्स्यायनीये न्यायभाष्ये चतुर्थो ऽध्यायः समाप्तः ॥ ४ ॥



---

* परस्य गुर्वादेः । तस्माच्च वादो ऽप्युचित इति । तत्रेदं सूत्रमुपतिष्ठते । ता॰ टी॰ ।

† अयुक्तपरित्यागेन युक्तपरिग्रहेण च परिशोधयेदिति सम्बध्यते । ता॰ टी॰ ।

‡ ताभ्यां विगृह्य कथनमिति सूत्रम् । ता॰ टी॰ । परेणाविज्ञायमानस्येति २ ।

|| न हि परहितप्रवृत्तः परमकारुणिको मुनिर्दृष्टार्थं परपांसनोपायमुपदिशतीति । ता॰ टी॰ ।

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति संक्षेपेणोक्तं तद्विस्तरेण विभज्यते । ताः खल्विमा जातयः* स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः ।

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्य-
प्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशय-
प्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्य-
नुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥**

साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः† । अविशेषं तत्र तत्रोदाहरिष्यामः । एवं वैधर्म्यसमप्रभृतयोऽपि निर्वक्तव्याः लक्षणं तु ।

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः
साधर्म्यवैधर्म्यसमौ ॥ २ ॥**

साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येणैव प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः । निदर्शनं क्रियावानात्मा द्रव्यस्य क्रियाहेतुगुणयोगात् । द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान् तथा चात्मा तस्मात्क्रियावानिति । एवमुपसंहृते‡ परः साधर्म्येणैव प्रत्यवतिष्ठते निष्क्रिय आत्मा विभुनो द्रव्यस्य निष्क्रियत्वाद् विभु चाकाशं निष्क्रियं च तथा चात्मा तस्मान्निष्क्रिय इति । न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनरक्रियसाधर्म्याद्§ निष्क्रियेणेति ।

---

* तत्र जातिर्नाम स्थापनाहेतौ प्रयुक्ते यः प्रतिषेधासमर्थो हेतुः । न्या॰ वा॰ । अत्र प्रतिषेधबुद्ध्या प्रयुक्त इति शेष इति । ता॰ टी॰ । यदा वादी परस्य साधनं साध्विति मन्यते लाभपूजाख्यातिकामश्च भवति तदा जातिं प्रयुङ्क्ते कदा चिदयं जात्युत्तरेणाकुलीकृतो नोत्तरं प्रतिपद्यते उत्तराप्रतिपत्त्या वा निगृह्यते । अनभिधाने च जातेरेकान्तजयः परस्येत्यैकान्तिकात्पराजयाद्वरमस्तु संदेह इति युक्तो जातेः प्रयोगः । न्या॰ वा॰ ।

† समीकरणार्थं प्रयोगः समः । साधर्म्यमेव समं वैधर्म्यमेव सममिति । समार्थः समीकरणार्थः प्रयोगो द्रष्टव्यः । समीक्रियतां परपक्षो मा वा कारि अयं तु समीकरणार्थं प्रवर्तते यथा लोके कुटुम्बार्थे घटत इति । न्या॰ वा॰ । साधर्म्यमेव समं यस्मिन् प्रयोग इति शेषः । ता॰ टी॰ ।

‡ एवमुपसंहृते इति २ । § साधर्म्यान्निष्क्रियेणेति ४ ।

विशेषहेत्वभावात्साधर्म्यसमः प्रतिषेधो भवति । अथ वैधर्म्यसमः क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो दृष्टो न च तथात्मा तस्मान्न लोष्टवत् क्रियावानिति । न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनः क्रियावद्वैधर्म्यादक्रियेणेति विशेषहेत्वभावाद्वैधर्म्यसमः । वैधर्म्येण चोपसंहारे* निष्क्रिय आत्मा विभुत्वात् क्रियावद् द्रव्यमविभु दृष्टं यथा लोष्टो न च तथात्मा तस्मान्निष्क्रिय† इति । वैधर्म्येण प्रत्यवस्थानं निष्क्रियं द्रव्यमाकाशं क्रियाहेतुगुणरहितं दृष्टं न तथात्मा तस्मान्न निष्क्रिय इति । न चास्ति विशेषहेतुः क्रियावद्वैधर्म्यान्निष्क्रियेण भवितव्यं न पुनरक्रियवैधर्म्यात् क्रियावतेति विशेषहेत्वभावाद्वैधर्म्यसमः । क्रियावान् लोष्टः क्रियाहेतुगुणयुक्तो दृष्टः तथा चात्मा तस्मात् क्रियावानिति । न चास्ति विशेषहेतुः क्रियावद्वैधर्म्यान्निष्क्रियो न पुनः क्रियावत्साधर्म्यात् क्रियावानिति विशेषहेत्वभावात्साधर्म्यसमः । अनयोरुत्तरम् ।

## गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥

* वैधर्म्येण चोपसंहारः २ ।

† अस्ति यस्यात्मनः क्रियाहेतुर्गुणः प्रयत्नो ऽदृष्टं वा । लोष्टस्यापि क्रियाहेतुर्गुणः स्पर्शवद्वेगवद्द्रव्यसंयोग इति एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते । निष्क्रिय आत्मा विभुत्वादाकाशवदिति । अत्र च साधनमाभासमुत्तरं च न जातिः । विभुत्वस्याक्रियत्वेन स्वभावतः प्रतिबन्धात् । तेनैतदुपेक्ष्य वार्त्तिककार उदाहरणान्तरमाह । यथा ऽनित्यः शब्द उत्पत्तिधर्मकत्वात् । इदं तु सम्यक् साधनमुत्तरं त्वाभासमिति । ता. टी. । यद्यनित्यघटसाधर्म्याद्रनित्यः नित्येनाप्याकाशेन साधर्म्यममूर्तत्वमस्तीति नित्यः प्राप्त इति । एतस्मिन्नेव हेतावाकाशवैधर्म्यादित्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः नित्यसाधर्म्यमप्याकाशेनामूर्तत्वमतो नित्यः प्राप्तः । अथ मन्यसे सत्यस्मिन् साधर्म्ये न नित्यः न तर्हि वक्तव्यमनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चानित्य इति । सेयं जातिर्विशेषहेत्वभावं दर्शयति विशेषहेत्वभावाच्चानैकान्तिकदेशनाभास इति । एवं वैधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं साधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः । यथा तस्मिन्नेव हेतावाकाशवैधर्म्यादनित्य इत्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः अनित्येन घटेनास्य वैधर्म्यममूर्तत्वमतो नित्यः प्राप्तः तस्मिन्नेव हेतौ घटसाधर्म्यादित्युक्ते यद्यनित्यघटसाधर्म्यादनित्यः वैधर्म्यमप्यस्यास्त्यमूर्तत्वमतो नित्यः प्राप्तः । अथ मन्यसे सत्येतस्मिन् वैधर्म्ये न नित्य. न तर्ह्ययमेकान्तो ऽनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चानित्य इति । सोऽयं विशेषहेत्वभावः । न्या. वा. ।

साधर्म्यमात्रेण वैधर्म्यमात्रेण च साध्यसाधने प्रतिज्ञायमाने स्याद्व्यवस्था सा तु धर्मविशेषे नोपपद्यते* गोसाधर्म्याद्गोत्वाज्जातिविशेषाद्गौः सिध्यति न तु सास्नादिसम्बन्धात् । अश्वादिवैधर्म्याद्गोत्वादेव न गौः सिध्यति न गुणादिभेदात् । तच्चैतत् कृतव्याख्यान†मवयवप्रकरणे प्रमाणानामभिसम्बन्धाच्चैकार्थकारित्वं समानं वाक्यइति । हेत्वाभासाश्रया खल्वियमव्यवस्थेति ।

## साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः‡ ॥ ४ ॥

दृष्टान्तधर्मं साध्ये§ समासञ्जन्‖ उत्कर्षसमः । यदि क्रियाहेतुगुणयोगाल्लोष्टवत् क्रियावानात्मा लोष्टवदेव स्पर्शवानपि प्राप्नोति । अथ न स्पर्शवान् लोष्टवत् क्रियावानपि न प्राप्नोति विपर्यये वा विशेषो वक्तव्य इति । साध्ये धर्माभाव दृष्टान्तात् ¶प्रसञ्जतो ऽपकर्षसमः । लोष्टः** खलु क्रियावानविभुर्दृष्टः काममात्मा ऽपि क्रियावानविभुरस्तु विपर्यये वा विशेषो वक्तव्य इति । ख्यापनीयो वर्ण्यो विपर्ययादवर्ण्यः । तावेतौ साध्यदृष्टान्तधर्मौ ††विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः । साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात्साध्यधर्मविकल्पं ‡‡प्रसञ्जतो विकल्पसमः । क्रियाहेतुगुणयुक्तं किं चिद् गुरु यथा लोष्टः किं चिल्लघु यथा वायुरेवं क्रियाहेतुगुणयुक्तं किं चित्क्रियावत्स्याद् यथा लोष्टः किं चिदक्रियं यथा ऽऽत्मा विशेषो वा वाच्य इति । हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः तं दृष्टान्ते प्रसञ्जतः§§ साध्यसमः । यदि यथा लोष्टस्तथा

---

* भवेदेव यदान्वयव्यतिरेकमात्राद्धेतोर्गमकत्वं स्यात । ततो विशेषपदद्वयाभावात्प्रकरणसमत्वं स्यात् । न त्वेवं भवति स्वाभाविकसम्बन्धभाजो गमकत्वात् । स्वभावसम्बद्धं च कृतकत्वमनित्यत्वे न त्वमूर्तत्वे तस्य स्वाभाविकसम्बन्धो बुद्धिकर्मादौ व्यभिचारात । तस्माद् वक्ष्यमाणविशेषत्वान्न प्रकरणसम. । ता टी ।

† कृतव्यवस्थानमिति १ । २ । ४ । ५ ।

‡ दृष्टान्ते दृष्टस्य पक्षे ऽनिष्टस्य धर्मस्य साध्येन सहापादनमुत्कर्षसम । दृष्टान्ते विद्यमानधर्माभावापादनमपकर्षसम । दृष्टान्तसादृश्यमात्रेण साध्यापादनं वर्ण्यसम । पक्षसादृश्यमात्रेण दृष्टान्ते साध्याभावापादनमवर्ण्यसम । पक्षदृष्टान्तयोर्धर्मान्तरेण वैसादृश्यात्साध्यसाधनमसाध्यसाधनं वा विकल्पसम । दृष्टान्ते दृष्टस्यापि साध्यत्वापादनं साध्यसम इति षड् जातय ।

§ साध्येनेति १ । ४ ।    ‖ समासज्जन इति २ समासञ्जत इति ५ ।

¶ प्रसञ्जतापकर्षसम इति १ । २ । ५ ।    ** लोष्ठमिति २ ।

†† विपर्यस्य साविति ४ ।    ‡‡ प्रसञ्जत इति १ । ४ ।    §§ प्रसञ्जत इति १ । २ । ४ ।

ऽऽत्मा प्राप्तस्तर्हि यथात्मा तथा लोष्टु इति । साध्यस्त्वात्मात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः । अथ नैवं तर्हि यथा लोष्टः तथात्मा । एतेषामुत्तरम् ।

## किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥

अलभ्यः सिद्धस्य निन्हवः सिद्धं च किंचित्साधर्म्यादुपमानं यथा गौस्तथा गवय इति तत्र न लभ्यो गोगवययोर्द्धर्मविकल्पश्चोदयितुम् । एवं साधके धर्मे दृष्टान्तादिसामर्थ्ययुक्ते न लभ्यः साध्यदृष्टान्तयोर्धर्मविकल्पाद्वैधर्म्यात्प्रतिषेधो वक्तुमिति ।

## *साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

यत्र लौकिकपरीक्षकाणां† बुद्धिसाम्यं तेनाविपरीतो ऽर्थो ऽतिदिश्यते प्रज्ञापनार्थमेवं साध्यातिदेशाद् दृष्टान्तउपपद्यमाने साध्यत्वमनुपपन्नमिति‡ ।

## प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या ऽविशिष्टत्वाद-प्राप्त्या ऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥

हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा । न तावत्प्राप्य प्राप्त्यामविशिष्टत्वादसाधकः । द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा अप्राप्य साधकं न भवति नाप्राप्तः प्रदीपः प्रकाशयतीति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः§ । अनयोरुत्तरम् ।

## घटादिनिष्पत्तिदर्शनात् पीडने चाभि-चारादप्रतिषेधः ॥ ८ ॥

---

* न हि दृष्टान्तदृष्टसकलधर्मयोगित्वं पक्षस्य भुवने तथा सति दृष्टान्तदार्ष्टान्तिकभावस्यैवानुपपत्तेः किं तु दृष्टान्तदृष्टसाध्यव्याप्यहेतुमत्तानिश्चयेन साध्यमात्रं पक्षे सिध्यति न तस्य भानाधिकरणे धर्मान्तरं नापि पक्षधर्मिरूपधर्मवत्ता दृष्टान्ते साधकाभावादिति भावः ।

† लौकिके परीक्षकाणामिति १ । १ । २५ ।

‡ षण्णां जातीनां प्रत्याख्यानमुक्त्वा वर्ण्यावर्ण्यसाध्यसमानामपरं प्रत्याख्यानमाहेति । ता· टी· ।

§ पक्षे हेतुसाध्ययोर्वर्तमानतायां साध्यत्वानुपपत्तिरवर्तमानतायां हेतोः साधकत्वानुपपत्तिरिति द्वे जाती । असत्साध्यते न तु सत् । प्राप्तं तु सदसतः प्राप्त्यसंभवात् । तस्माच्च साध्यम् । अपि च येन यस्य प्राप्तिस्तेन तस्यैक्यमेव । यथा गङ्गा सागरे संगता सागरेणाभिन्ना । तद्वदेवाभिन्ने चेत्साध्यसाधने नास्ति साध्यसाधनभावः तस्य भेदाधिष्ठानत्वादिति द्रष्टव्यम् । अप्राप्तिसमः स्फुट एवेति । ता· टी· ।

उभयथा खल्वयुक्तः प्रतिषेधः कर्तृकरणाधिकरणानि प्राप्य मृदं घटादिकार्यं निष्पादयन्ति अभिचाराच्च पीडने सति दृष्टमप्राप्य साधकत्वमिति* ।

**दृष्टान्तस्य कारणानपदेशात्† प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥**

साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गेन प्रत्यवस्थानं प्रसङ्गसमः‡ प्रतिषेधः । क्रियाहेतुगुणयोगी क्रियावान् लोष्ट इति हेतुर्नापदिश्यते न च हेतुमन्तरेण सिद्धिरस्तीति । प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः । क्रियावानात्मा क्रियाहेतुगुणयोगाद् लोष्टवदित्युक्ते प्रतिदृष्टान्त उपादीयते क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियं दृष्टमिति । कः पुनराकाशस्य क्रियाहेतुर्गुणो वायुना संयोगः संस्कारापेक्षः वायुवनस्पतिसंयोगवदिति । अनयोरुत्तरम् ।

**प्रदीपोपा§दानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥**

इदं तावदयं पृष्टो वक्तुमर्हति अथ के प्रदीपमुपाददते किमर्थं चेति|| दिदृक्षमाणा दृश्यदर्शनार्थमिति । अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपः तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम् । अथ दृष्टान्तः किमर्थमुच्यत इति अप्रज्ञातस्य ज्ञापनार्थमिति । अथ दृष्टान्ते कारणापदेशः किमर्थं दृश्यते¶ यदि प्रज्ञापनार्थं प्रज्ञातो दृष्टान्तः । स खलु लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति । तत्प्रज्ञापनार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम् । अथ प्रतिदृष्टान्तसमस्योत्तरम् ।

**प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥**

प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरपदिश्यते अनेन प्रकारेण प्रतिदृ-

---

* घटादेर्मृत्पिण्डे प्राप्तस्य समवेतस्य मृत्पिण्डसंयुक्तैरेव दण्डादिभिरुत्पादनादभिचारेण च श्येनादिनोद्देश्यासंयुक्तेनैवोद्देश्यपीडाया जननादुभयथापि प्रत्यवस्थानं युक्तमिति भावः ।

† कारणानपदेशादिति १ । ४ ।

‡ साध्यसमो हि दृष्टान्ते साध्यवद् हेत्वाद्यवयवं प्रसञ्जयति पञ्चावयवप्रयोगसाध्यतां दृष्टान्तगतस्यानित्यत्वस्य प्रसञ्जयतीति यावत् । प्रसङ्गसमस्तु दृष्टान्तगतस्यानित्यत्वस्य प्रमाणमात्रसाध्यतामित्यपौनरुक्त्यम् । ता॰ टी॰ ।

§ प्रदीपादानेति १ । ४ ।  || चेति ५ ।  ¶ दृश्यते २ ।

ष्टान्तः साधकः न दृष्टान्त इति । एवं प्रतिदृष्टान्तहेतुत्वेनाहेतुर्दृष्टान्त इत्युपपद्यते स च कथमहेतुर्न स्याद्* यद्यप्रतिषिद्धः साधकः स्यादिति ।

## प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते अपर आह । प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वम(नित्यत्व)कारणं नास्ति तदभावाद् नित्यत्वं प्राप्तं नित्यस्य चोत्पत्तिर्नास्ति अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः । अस्य उत्तरम् ।

## तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥

तथाभावादुत्पन्नस्येति उत्पन्नः खल्वयं शब्द इति भवति । प्रागुत्पत्तेः शब्द एव नास्ति उत्पन्नस्य शब्दभावात् शब्दस्य सतः प्रयत्नानन्तरीयकत्वमनित्यत्वकारणं‡मुपपद्यते कारणोपपत्तेरयुक्तोऽयं दोषः प्रागुत्पत्तेः कारणाभावादिति§ ।

## सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः‖ ॥ १४ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते । सति प्रयत्नानन्तरीयकत्वे अस्त्येवास्य नित्येन सामान्येन

---

* मदीयस्य दृष्टान्तस्याभ्युपगमाच्च त्वदीयो दृष्टान्त इत्यर्थः । यद्येवं मयुक्तं यथा मदीयो न दृष्टान्तस्तथा त्वदीय इति तथापि व्याघातात्‌ दृष्टान्तः मदीयस्यादृष्टान्तत्वे साध्ये प्रतिदृष्टान्तेन हि तेन मदीयस्यादृष्टान्तता साध्या स चेत्‌ दृष्टान्तस्तेन मदीयस्यादृष्टान्तता साध्येति व्याहतमित्यर्थः । ता टी० ।

( ) नास्ति ३ । ‡ अनित्यकारणमिति १ । २ । ४ ।

§ ज्ञापकश्चायं हेतुर्न कारकः । ज्ञापके च कारकवत् प्रत्यवस्थानमसम्बद्धम् । न्या वा ।

कारको हेतुर्निवर्तमानः स्वकार्यं निवर्तयति न तु ज्ञापकः । तद्भावेऽपि भूमौ चिरनिखाताया निध्यादीनामनिवृत्तेरिति । ततश्च विशेषणमनर्थकं प्रागुत्पत्तेरिति । प्रागुत्पत्तेर् हि सत्ताऽसम्बन्ध उत्पत्तिः । प्रागपि चेद्सत्त्वाभ्युपगतः प्रागिति विशेषणमनर्थकमुत्पत्तेरभावे सदैवानुत्पत्तिधर्मकत्वादित्यर्थः । ता टी० ।

‖ संशयसमा साधर्म्यसमातो न भिद्यत इति चेत्‌ । उभयैकसाधर्म्यभेदाद् उभयसाधर्म्यात् संशयसमः एकसाधर्म्यात् साधर्म्यसम इति । न्या० वा ।

साधर्म्यमैन्द्रियकत्वमस्ति च घटेनानित्येनातो नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति । अस्योत्तरम् ।

**साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशये ऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः* ॥ १५ ॥**

विशेषाद्वैधर्म्यादवधार्यमाणे ऽर्थे पुरुष इति न स्थाणुपुरुषसाधर्म्यात्संशयो ऽवकाशं लभते । एवं वैधर्म्याद्विशेषात् प्रयत्नानन्तरीयकत्वादवधार्यमाणे शब्दस्यानित्यत्वे नित्यानित्यसाधर्म्यात्संशयो ऽवकाशं न लभते । यदि वै लभेत ततः स्थाणुपुरुषसाधर्म्यानुच्छेदादत्यन्तं संशयः स्यात् । गृह्यमाणे च विशेषे नित्यं साधर्म्यं संशयहेतुरिति नाभ्युपगम्यते न हि †गृह्यमाणे पुरुषस्य विशेषे स्थाणुपुरुषसाधर्म्यं संशयहेतुर्भवति ।

**उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥**

उभयेन नित्येन चानित्येन च साधर्म्यात्पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्येकः पक्षं प्रवर्तयति द्वितीयश्च नित्यसाधर्म्यात् । एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानेन हेतो तदिदं प्रकरणानतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः । समानं चैतद्वैधर्म्ये ऽपि उभयवैधर्म्यात् प्रक्रियासिद्धेः प्रकरणसम‡ इति । अस्योत्तरम् ।

**प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥**

उभयसाधर्म्यात् प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात्प्रक्रियासिद्धिरुक्ता भवति यद्युभयसाधर्म्यं तत्र एकतरः§प्रतिपक्षः इत्येवं सत्युपपन्नः प्रतिपक्षो भवति ।

---

* न सामान्यदर्शनमात्रं संशयस्य कारणमपि तु विशेषादर्शनसहितं विशेषदर्शने तु तद्रहितं न कारणमिति सूत्रार्थः । ता० टी० ।  † न हिर्नास्ति ।

‡ उभयेन नित्येनानित्येन च साधर्म्येणोद्भाव्यमानेन प्रक्रियायाः प्रकरणस्यानुमितिप्रयोजकस्य संशयस्येति यावत् । सिद्धेः प्रकरणसमो नाम जातिरित्यर्थः । एवं च नित्यसाधर्म्येणानित्यसाधर्म्येण च प्रत्यवस्थानं प्रकरणसमद्वयम् । एवमेव वैधर्म्येणापि प्रकरणसमद्वयमिति प्रकरणसमचतुष्टयम् ।  § यद्युभयसाधर्म्यात्स एकतर इति च ।

प्रतिपक्षोपपत्तेरनुपपन्नः प्रतिषेधो यतः* प्रतिपक्षोपपत्तिः† प्रतिषेधोपपत्तिश्चेति विप्रतिषिद्धमिति । तत्त्वानवधारणाच्च प्रक्रियासिद्धिर्विपर्यये प्रकरणावसानात् तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति‡ ।

**त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥**

§(अहेतुसमः हेतुः) हेतुः साधनं तत्साध्यात् पूर्वं पश्चात्सह वा भवेत् । यदि पूर्वं साधनमसति साध्ये कस्य साधनम् । अथ पश्चात् असति साधने कस्येदं साध्यम् । अथ युगपत्साध्यसाधने द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यमिति ‖(हेतु)रहेतुना न विशिष्यते । अहेतुना साधर्म्यात् प्रत्यवस्थानमहेतुसमः । अस्योत्तरम् ।

**न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥**

न त्रैकाल्यासिद्धिः । कस्मात् हेतुतः साध्यसिद्धेः । निर्वर्तनीयस्य निर्वृत्तिर्विज्ञेयस्य विज्ञानमुभयं कारणतो दृश्यते सो ऽयं महान्प्रत्यक्षविषय उदाहरणमिति । यत्तु खल्वुक्तमसति साध्ये कस्य साधनमिति यत्तु निर्वर्त्यते यच्च विज्ञाप्यते¶ तस्येति ।

**प्रतिषेधानुपपत्तेः** प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥**

पूर्वं पश्चाद्युगपद्वा प्रतिषेध इति नोपपद्यते प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति ।

**अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति स्थापिते पक्षे अर्थापत्त्या प्रतिपक्षं साधयतो ऽर्थापत्तिसमः††। यदि प्रयत्नानन्तरीयकत्वा-

---

* यदि २ । ५ ।

† प्रतिषेधो नोपपद्यते अथ प्रतिषेधोपपत्तिः प्रतिपक्षो नोपपद्यते प्रतिपक्षोपपत्तिश्चेत्यधिकम् २ । ५ ।

‡ प्रकरणसमस्य सत्प्रतिपक्षरूपहेत्वाभासत्वेनोक्तत्वादत्र जातित्वेनोक्तिः कथमिति चेत् । स्वसाधननिर्णयेन परसाधनविघटनबुद्ध्या प्रतिपक्षसाधनं प्रकरणसमजात्युत्तरं भवति सत्प्रतिपक्षतया वादिनः साधनमनिश्चायकं करोमीति बुद्ध्या प्रतिपक्षसाधनं प्रयुञ्जानो न जातिवादी सदुत्तरवादित्वात् इति । ता॰ टी॰ । § ( ) २ नास्ति ।

‖ ( ) ४ नास्ति । ¶ विज्ञायते इति २ । ५ । ** चेोधिकः ४ ।

†† वादिना प्रयुक्ते हेतौ तद्विपरीतहेतोः साध्याभावसाधकत्वमनुक्तमप्यर्थादापद्यतइति संभाव्य वादितात्पर्यविषयताऽऽपादनेन यत्र प्रतिहेतुः साध्याभावसाधक इत्यापाद्यते सो ऽर्थापत्तिसमः ।

दनित्यसाधर्म्यादनित्यः शब्द इत्यर्थादापद्यते नित्यसाधर्म्यान्नित्य इति अस्ति चा*स्य नित्येन साधर्म्यमस्पर्शत्वमिति । अस्योत्तरम् ।

**अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥**

अनुपपाद्य† सामर्थ्यमनुक्तमर्थादापद्यतइति ब्रुवतः पक्षहानेरुपपत्तिरनुक्तत्वात् अनित्यपक्षसिद्धावर्थादापन्नं नित्यपक्षस्य हानिरिति‡ । अनैकान्तिकत्वाच्चार्थापत्तेः उभयपक्षसमा चेयमर्थापत्तिर्यदि नित्यसाधर्म्यादस्पर्शत्वादाकाशवच्च नित्यः शब्दोऽर्थादापन्नमनित्यसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्य इति । न चेयं विपर्ययमात्रादेकान्तेनार्थापत्तिः न खलु वै घनस्य§ ग्राव्णः पतनमिति अर्थादापद्यते द्रवाणामपां पतनाभाव इति ।

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः|| ॥ २३ ॥**

एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे उभयोरनित्यत्वे सर्वस्याविशेषः प्रसज्यते । कथं सद्भावोपपत्तेरेको धर्मः सद्भावः सर्वस्योपपद्यते सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात् प्रत्यवस्थानमविशेषसमः । अस्योत्तरम् ।

**¶क्वचिद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः** ॥ २४ ॥**

---

* अस्ति चास्येति २ । † अनुपपाद्येति २ ।

‡ तदेव खल्वनुक्तं वचनाल्लभ्यते यत्कथनमन्तरेण वचनार्थो न घटते यथा पीनो देवदत्तो दिवा न भुङ्क्ते इति । यथा वा यागेन स्वर्गं भावयेदित्युक्तेऽन्तराऽपूर्वं कल्पयेति वाक्यार्थोपपादने तस्य सामर्थ्यात् । न त्वव्यभिचारिणः साधर्म्यात् साध्ये साध्यमानेऽर्थादुक्तं भवति व्यभिचारिणाऽपि साधर्म्येण साधयितव्यमिति तस्य वाक्यार्थोपपादनेऽसामर्थ्यात् । तदन्तरेण वाक्यार्थोपपत्तेः । यदि पुनरनुपलब्धसामर्थ्यमनुक्तमात्रं गम्यते ततस्त्वया नित्यत्वापादने शब्दस्योच्यमानेऽनुच्यमानमनित्यत्वं प्रत्येतव्यं तथा च भवदभिमतस्य नित्यत्वस्य व्याहतिः । ता० टी० ।

§ घनोपलानामिति २ । ५ । घनस्य ग्राव्णः पतनमिति १ । ४ ।

|| एकसाधर्म्यात्प्रत्यवस्थानं साधर्म्यसमः समस्तसाधर्म्यात्तु अविशेषसम इति भेदः ।

¶ क्व चिद्धर्मोपपत्तेः क्व चिच्चानुपपत्तेः प्रतिषेधाभाव इति २ ।

** एतदुक्तं भवति । अविनाभावसम्पन्नं साधर्म्यं गमकं न तु साधर्म्यमात्रमिति । ता० टी० ।

यथा साध्यदृष्टान्तयोरेकधर्मस्य प्रयत्नानन्तरीयकत्वस्योपपत्तेरनित्यत्वं धर्मान्तरमविशेषो नैवं सर्वभावानां सद्भावोपपत्तिनिमित्तं धर्मान्तरमस्ति येनाविशेषः स्यात् । अथ मतमनित्यत्वमेव धर्मान्तरं सद्भावोपपत्तिनिमित्तं भावानां सर्वत्र स्यादित्येवं खलु वै कल्प्यमाने अनित्याः सर्वे भावाः सद्भावोपपत्तेरिति पक्षः प्राप्नोति तत्र प्रतिज्ञार्थव्यतिरिक्तमन्यदुदाहरणं नास्ति । अनुदाहरणश्च हेतुर्नास्तीति । प्रतिज्ञैकदेशस्य चोदाहरणत्वमनुपपन्नं न हि साध्यमुदाहरणं भवति ततश्च नित्यानित्यभावादनित्यत्वानुपपत्तिः । तस्मात्सद्भावोपपत्तेः सर्वाविशेषप्रसङ्ग इति निरभिधेयमेतद्वाक्यमिति । सर्वभावानां सद्भावोपपत्तेरनित्यत्वमिति ब्रुवता ऽनुज्ञातं शब्दस्यानित्यत्वं तत्रानुपपन्नः प्रतिषेध इति ।

## उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

यद्यनित्यत्वकारणमुपपद्यते शब्दस्येत्यनित्यः शब्दो नित्यत्वकारणमप्युपपद्यते ऽस्यास्पर्शत्वमिति नित्यत्वमप्युपपद्यते ( उभयस्यानित्यत्वस्य नित्यत्वस्य च* ) कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः† । अस्योत्तरम् ।

## उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥

उभयकारणोपपत्तेरिति ब्रुवता नानित्यत्वकारणोपपत्तेरनित्यत्वं प्रतिषिध्यते यदि प्रतिषिध्यते नोभयकारणोपपत्तिः स्यात् । उभयकारणोपपत्तिवचनादनित्यत्वकारणोपपत्तिरभ्यनुज्ञायते अभ्यनुज्ञानादनुपपन्नः प्रतिषेधः । व्याघातात्प्रतिषेध इति चेत्समानो व्याघातः । एकस्य नित्यत्वानित्यत्वप्रसङ्गं व्याहतं ब्रुवतोक्तः प्रतिषेध इति चेत् स्वपक्षपरपक्षयोः समानो व्याघातः स च नैकतरस्य साधक इति ।

## निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥ २७ ॥

निर्दिष्टस्य‡ प्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावे ऽपि वा-

---

* ( ) च नास्ति ।

† प्रकरणसमायां जातौ पक्षप्रतिपक्षसाधनयोः समानबलत्वे ऽपि प्रतिवादी साधनात् स्वपक्षसिद्ध्या वादिसाधनदूषके प्रवर्तते उपपत्तिसमायां तु स्वसाधनेनेति विशेषः । ता टी ।

‡ निर्दिष्टप्रयत्नेति १ । ४ ।

प्रणोदनाद्वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते निर्दिष्टस्य साधनस्याभावे ऽपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः* । अस्योत्तरम् ।

## कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः† ॥ २८ ॥

प्रयत्नानन्तरीयकत्वादिति ब्रुवता कारणत उत्पत्तिरभिधीयते न कार्यस्य कारणनियमः । यदि च कारणान्तरादप्युपपद्यमानस्य शब्दस्य तदनित्यत्वमुपपद्यते किमत्र प्रतिषिध्यतइति । न प्रागुच्चारणाद्विद्यमानस्य‡ शब्दस्यानुपलब्धिः कस्मादावरणाद्यनुपलब्धेः यथा विद्यमानस्योदकादेरर्थस्यावरणादेरनुपलब्धिः नैवं शब्दस्याग्रहणकारणेनावरणादिनानुपलब्धिः गृह्येत चैतदस्याग्रहणकारणमुदकादिवन्न गृह्यते तस्मादुदकादिविपरीतः शब्दो ऽनुपलभ्यमान इति ।

## तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः§ ॥ २९ ॥

तेषामावरणादीनामनुपलब्धिर्नोपलभ्यते अनुपलम्भान्नास्तीत्यभावो ऽस्याः सिध्यति अभावसिद्धौ हेत्वभावात्तद्विपरीतमस्तित्वमावरणादीनामवधार्यते तद्विपरीतोपपत्तेर्यत्प्रतिज्ञातं न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिरित्येतन्न सिध्यति सो ऽयं हेतुरावरणाद्यनुपलब्धेरित्यावरणादिषु चावरणाद्यनुपलब्धौ च ‖समयानुपलब्ध्या प्रत्यवस्थितो ऽनुपलब्धिसमो भवति । अस्योत्तरम् ।

---

* यद्यपि वर्णात्मकः शब्दो ऽनित्यत्वेन साध्यतया विवक्षितः प्रकरणादनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति तथा ऽपि शब्दमात्रमनेन पक्षीकृतमित्यारोप्य साधनस्योपलब्धिसमार्थः । ता॰ टी॰ ।

† कारणतः प्रयत्नात् शब्दस्योत्पत्तिनियमो ऽभिधीयते वर्णानामनित्यत्वं साधयितुं न तु कार्यस्य कारणनियमः प्रयत्नादेव सर्वः शब्दो जायते न तु वायुसंयोगजाद् वृक्षभङ्गादिति नियम उच्यते येनाव्यापकत्वं हेतोः स्यादिति सूत्रार्थः । ता॰ टी॰ । ‡ अविद्यमानस्येति ४ ।

§ उपलभ्यमानत्वे उपलब्धिरूपतया ऽनुपलब्धित्वानुपपत्तेः । तथा चानुपलब्धेरनुपलम्भादनुपलब्धिर्नास्तीति आवरणाद्यावरणानुपलब्ध्योरप्युपलब्धिसमे त्यर्थः । ता॰ टी॰ । ‖ समतयेति ३ । ४ ।

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः* ॥ ३० ॥**

आवरणाद्युपलब्धिर्नास्ति अनुपलम्भादित्यहेतुः । कस्मादनुपलम्भात्मकत्वादनुपलब्धेः उपलम्भाभावमात्रत्वादनुपलब्धेः । यदस्ति तदुपलब्धेर्विषयः उपलब्ध्या तदस्तीति प्रतिज्ञायते । यन्नास्ति तदनुपलब्धेर्विषयः अनुपलभ्यमानं नास्तीति प्रतिज्ञायते । सोऽयमावरणाद्यनुपलब्धेरनुपलम्भाभावो ऽनुपलब्धौ स्वविषये प्रवर्तमानो न स्वं †विषयं प्रतिषेधति । अप्रतिषिद्धा ‡चावरणाद्यनुपलब्धिर्हेतुत्वाय कल्पते । आवरणादीनि तु विद्यमानत्वादुपलब्धेर्विषयाः तेषामुपलब्ध्या भवितव्यम् । यत्तानि नोपलभ्यन्ते तदुपलब्धेः स्वविषयप्रतिपादिकाया अभावात् अनुपलम्भादनुपलब्धेः§ विषयो गम्यते न सन्त्यावरणादीनि शब्दस्याग्रहणकारणानीति । अनुपलम्भादनुपलब्धिः सिध्यति विषयः स तस्येति ॥

**ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥**

अहेतुरिति वर्तते । शरीरे शरीरिणां ज्ञानविकल्पानां भावाभावौ संवेदनीयौ । अस्ति मे संशयज्ञानं नास्ति मे संशयज्ञानमिति एवं प्रत्यक्षानुमानागमस्मृतिज्ञानेषु । सेयमावरणाद्यनुपलब्धिरुपलब्ध्यभावः स्वसंवेद्यः|| नास्ति मे शब्दस्यावरणाद्युपलब्धिरिति नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणादीनीति । तत्र यदुक्तं तदनुपलब्धेरनुपलम्भादभावसिद्धिरिति एतन्नोपपद्यते ॥

**साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥**

अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतोऽस्ति घटेनानित्येन सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं सम्पद्यते सोऽयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति । अस्योत्तरम् ॥

---

* आवरणाद्यनुपलब्धिरावरणादीनामभावं गमयति न स्वात्मनोऽभावमावरणाद्युपलब्धिरूपं न ह्यसावनुपलब्धिरात्मनो येनात्मनोऽभावं गमयेत् । उपलब्धिरप्युपलभ्यविषया नात्मविषया किं पुनरनुपलब्धिः । तस्मादनुपलब्धिरुपलब्ध्याभावहेतुर्न हेतुरात्माभावस्य तथा सति सैव न स्यादुपलब्ध्याभावोऽपीति आवरणाद्युपलब्धिश्च स्यादिति । ता॰ टी॰ ।

† स्वविषयमिति १।२।३।५। ‡ वारणादीति ७। § अनुपलब्धिरिति ७
|| स्वसंवेद्येति ७

साधर्म्यादसिद्धेः प्रतिषेध्यसिद्धिः प्रतिषेध्यसाधर्म्याच्च* ॥३३॥

प्रतिज्ञाद्यवयवयुक्तं वाक्यं पक्षनिवर्त्तकं †प्रतिपक्षलक्षणं प्रतिषेधस्तस्य पक्षेण प्रतिषेध्येन साधर्म्यं प्रतिज्ञादियोगः तद्यद्यनित्यसाधर्म्यादनित्यत्वसिद्धिः‡ साधर्म्यादसिद्धेः प्रतिषेधस्याप्यसिद्धिः प्रतिषेध्येन साधर्म्यादिति ।

दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा भावान्नाविशेषः ॥ ३४ ॥

दृष्टान्ते यः खलु धर्मः साध्यसाधनभावेन प्रज्ञायते स हेतुत्वेनाभिधीयते । स चोभयथा भवति§ केन चित्समानः कुतश्चिद्विशिष्टः । सामान्यात्साधर्म्यं विशेषाच्च वैधर्म्यम् । एवं साधर्म्यविशेषो हेतुर्नाविशेषेण साधर्म्यमात्रं वैधर्म्यमात्रं वा साधर्म्यमात्रं वैधर्म्यमात्रं चाश्रित्य भवानाह साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसम इति एतदयुक्तमिति । अविशेषसमप्रतिषेधे च यदुक्तं तदपि वेदितव्यम् ।

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥

अनित्यः शब्द इति प्रतिज्ञायते तदनित्यत्वं किं शब्दे नित्यमथानित्यं यदि तावत्सर्वदा भवति धर्मस्य सदा भावाद्धर्मिणो ऽपि सदा भाव इति‖ नित्यः शब्द इति । अथ न सर्वदा भवति अनित्यत्वस्याभावान्नित्यः शब्दः । एवं नित्यत्वेन प्रत्यवस्थानान्¶नित्यसमः । अस्योत्तरम् ॥

प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः** ॥ ३६ ॥

---

* चो नास्ति २ । ५ । † निवर्त्तकमिति २ । ‡ अनित्यत्वस्यासिद्धिरिति २ ।

§ स हेतु तस्य चोभयथा भावना ऽभिधीयते इति २ स हेतुः स चोभयथा भवतीति ५ ।

‖ धर्मस्य सर्वदा भावाद्धर्मिणो ऽपि सर्वदा भावः । न ह्यस्ति संभवः सामान्यसमवायातिरिक्ता धर्मा नित्या धर्मी चानित्य इति । ता० टी० ।

¶ प्रत्यवस्थानादनित्यसम इति १ ।

** उत्पन्नस्य निरोधादभावः शब्दस्यानित्यत्वं तत्र परिप्रश्नानुपपत्तिः । यदि हि निरोधकादभावो ऽनित्यत्वं तथापि प्रश्नानुपपत्तिरथाप्यसम्मते समवायस्तथा ऽपि तदनुपपत्तिः । अनित्यत्वं हि शब्दस्यापरान्तावच्छिन्नसत्तासमवायः न चासौ शब्दाधेयः तस्य स्वतन्त्रत्वादित्यर्थः । ता० टी० ।

प्रतिषेध्ये शब्दे नित्यमनित्यत्वस्य भावादित्युच्यमाने ऽनुज्ञातं शब्दस्यानित्यत्वम् । अनित्यत्वोपपत्तेश्च नानित्यः शब्द इति प्रतिषेधो नोपपद्यते । अथ नाभ्युपगम्यते नित्यमनित्यत्वस्य भावादिति हेतुर्न भवतीति हेत्वभावात्प्रतिषेधानुपपत्तिरिति* उत्पन्नस्य †निरोधादभावः शब्दस्यानित्यत्वं तत्र परिप्रश्नानुपपत्तिः । सो ऽयं प्रश्नः ‡तदनित्यत्वं किं शब्दे सर्वदा भवति अथ नेत्यनुपपन्नः । कस्मात् उत्पन्नस्य यो निरोधादभावः शब्दस्य तदनित्यत्वमेवं च सत्यधिकरणाधेयविभागो व्याघातान्नास्तीति । नित्यानित्यत्वविरोधाच्च नित्यत्वमनित्यत्वं चैकस्य धर्मिणो धर्माविति विरुध्येते न सम्भवतः । तत्र यदुक्तं नित्यमनित्यत्वस्य भावाद् नित्य एव तदवर्तमानार्थमुक्तमिति ॥

प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥

प्रयत्नानन्तरीयकत्वा§दनित्यः शब्द इति यस्य प्रयत्नानन्तरमात्मलाभस्तत्खल्वभूत्वा भवति यथा घटादिकार्यमनित्यमिति च भूत्वा न भवतीत्येतद्विज्ञायते । एवमवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यते । प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटादीनां व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानां तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्याहो ऽभिव्यक्तिरिति विशेषो नास्ति कार्याविशेषेण प्रत्यवस्थानं कार्यसमः । अस्योत्तरम् ॥

का ऽन्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः || ॥ ३८ ॥

---

* प्रतिषेधानुपपत्तिरिति २ । † निरोधादिति विनाशादिति २ । ‡ तदिति ४ ।

§ प्रयत्नानन्तरीयकत्वं प्रयत्नान्तरोत्पादो वा स्यात्प्रयत्नानन्तरोपलम्भो वा स्यात् । तावत्पूर्वः कल्पः असिद्धत्वात् । तस्मात्प्रयत्नानन्तरोपलम्भ आस्थेयः । तत्र कार्यसमप्रतिषेधमाह । प्रयत्नानन्तरमुपलभ्यमानानां प्रयत्नानन्तरमात्मलाभश्च दृष्टो यथा घटादीनां व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानां मूलकीलकादीनां तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्याहोस्विदभिव्यक्तिरिति विशेषो नास्ति तदेव कार्याविशेषेण प्रत्यवस्थानं कार्यसमः । ता॰ टी॰ ।

|| कार्यस्योत्पत्तिलक्षणस्यान्यत्वे ऽभिव्यक्तिलक्षणात् कार्यात् प्रयत्नस्याभिव्यक्तिं प्रत्यहेतुत्वं कस्मादभिव्यक्तिं प्रति हेतुत्वं न भवतीत्यत आह । अनुपलब्धिकारणस्यावरणादेरुपपत्ते । अभिव्यक्तिहेतुत्वं स्यात् । एवं तु नास्तीति व्यतिरेकपरं द्रष्टव्यम् । यत्र प्रयत्नानन्तरमित्यत्र यत्तदोरध्यासः । तत्र प्रयत्नानन्तरमभिव्यक्तिर्यत्रानुपलब्धिकारणं व्यवधानमुपपद्यते ता॰ टी॰ । संशयसमातो न भिद्यत इति चेदुभयसाधर्म्यात्संशयसमः अयं तु न तथा तस्माद् भिद्यते । साधर्म्यसमातो न

सति कार्यान्यत्वे अनुपलब्धिकारणोपपत्तेः* प्रयत्नस्याहेतुत्वं शब्दस्याभिव्यक्तौ† यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानुपलब्धिकारणं व्यवधानमुपपद्यते व्यवधानापोहाच्च प्रयत्नानन्तरभाविनो ऽर्थस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति । न तु ‡शब्दस्यानुपलब्धिकारणं किं चिदुपपद्यते यस्य प्रयत्नानन्तरमपोहाच्छब्दस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति तस्मादुत्पद्यते शब्दो नाभिव्यज्यतइति । हेतोश्चेदनैकान्तिकत्वमुपपाद्यते अनैकान्तिकत्वादसाधकः स्यात् इति । यदि चानैकान्तिकत्वादसाधकम् ॥

## §प्रतिषेधे ऽपि समानो दोषः ॥ ३९ ॥

प्रतिषेधो ऽप्यनैकान्तिकः किं चित्प्रतिषेधति किं चिन्नेति अनैकान्तिकत्वादसाधक इति । अथ वा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादो नाभिव्यक्तिरिति विशेषहेत्वभावः । नित्यत्वपक्षे ऽपि प्रयत्नानन्तरमभिव्यक्तिर्नोत्पाद इति विशेषहेत्वभावः । सो ऽयमुभयपक्षसमो विशेषहेत्वभाव इत्युभयमप्यनैकान्तिकमिति ॥

## सर्वत्रैवम् ॥ ४० ॥

सर्वेषु साधर्म्यप्रभृतिषु प्रतिषेधहेतुषु यत्र|| यत्राविशेषो दृश्यते तत्रोभयोः पक्षयोः समः प्रसज्यतइति ।

## प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

यो ऽयं प्रतिषेधे ऽपि समानो दोषो ऽनैकान्तिकत्वमापद्यते सो ऽयं प्रतिषेधस्य प्रतिषेधे ऽपि समानः । तत्रानित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति साधनवादिनः स्थापना प्रथमः पक्षः । प्रयत्नकार्यानेकत्वात् कार्यसम इति दूष-

---

भिधतइति चेन्न हेत्वध्यारोपणात् । साधर्म्यसमा हेत्वध्यारोपेण प्रवर्तते इयं त्वन्यथा ऽभिहिते हेतावन्यथाकारं प्रवर्तते न्या० वा० ।

* कारणानुपपत्तेरिति २। पाठान्तरम् । † अभिव्यक्ताविति २। ५। ‡ तुर्नास्ति २।

§ तदेवं जात्युत्तरवादिनं प्रति साधनवादिना सर्वत्रैव सम्यक् समाधानं स्वसाधनस्य वक्तव्यमेवं सति तत्त्वनिर्णये कथापर्यवसानं भवति यदि पुनर्वादीपि जातिवादिनं प्रति साधनाभासेन प्रत्यवतिष्ठते ततः षट्पक्ष्यां सत्यां न तत्त्वनिर्णायवमाना कथा भवेदिति शिष्यहितः सूत्रकारः समाधानाभासवादिनं प्रति षट्पक्षीमवतारयति । ता० टी० ।

|| यत्र विशेष इति ४ । यत्र यत्र विशेष इति २ । यत्राविशेष इति ५

पक्षवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः स च प्रतिषेध इत्युच्यते तस्याप्य प्रतिषेधे ऽपि समानो दोष इति तृतीयः* पक्षो विप्रतिषेध उच्यते । तस्मिन् प्रतिषेधविप्रतिषेधे ऽपि समानो दोषो ऽनैकान्तिकत्वं चतुर्थः पक्षः ।

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥**

प्रतिषेधं द्वितीय पक्षं सदोषमभ्युपेत्य तदुद्धारमनुक्त्वा अनुज्ञाय प्रतिषेधविप्रतिषेधे तृतीयपक्षे समानमनैकान्तिकत्वमिति समानं दूषणं प्रसज्जतो† दूषणवादिनो मतानुज्ञा प्रसज्यत इति पञ्चमः पक्षः ।

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः‡ इति ॥ ४३ ॥**

स्थापनापक्षे प्रयत्नकार्यत्वानेकत्वा§दिति दोषः स्थापनाहेतुवादिनः स्वपक्षलक्षणो भवति । कस्मात् स्वपक्षसमुत्थत्वात्सो ऽयं स्वपक्षलक्षणं दोषमपेक्षमाणो ऽनुद्धृत्यानुज्ञाय प्रतिषेधे ऽपि समानो दोष इत्युपपद्यमानं दोषं परपक्ष उपसंहरति इत्थं||चानैकान्तिकः प्रतिषेध इति हेतुं निर्दिशति । तत्र स्वपक्षलक्षणापेक्षयोपपद्यमानदोषोपसंहारे हेतुनिर्देशे च सत्यनेन परपक्षोऽभ्युपगतो भवति । कथं कृत्वा यः परेण प्रयत्नकार्यत्वा¶नेकत्वादित्यादिनानैकान्तिकदोष उक्तः तमनुद्धृत्य प्रतिषेधे ऽपि समानो दोष इत्याह । यथ स्थापना सदोषामभ्युपेत्य प्रतिषेधे ऽपि समानं दोषं प्रसज्जतः** परपक्षाभ्युपगमात् समानो दोषो भवति, यथा परस्य प्रतिषेधं सदोषमभ्युपेत्य ††प्रतिषेधविप्रतिषेधे ऽपि समानो‡‡ दोषप्रसङ्गो मताऽनुज्ञा प्रसज्यत इति तथास्यापि) स्थापनां सदोषामभ्युपेत्य प्रतिषेधे ऽपि समानं दोषं प्रसज्जतो§§ मतानुज्ञा प्रसज्यत इति । स खल्वयं षष्ठः पक्षः तत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमपक्षाः प्रतिषेधहेतुवादिनः द्वितीयचतुर्थषष्ठपक्षाः । तेषां साध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरविशेषात् पुनरुक्तदोषप्रसङ्गः चतुर्थपक्षे समानदो-

---

* नास्ति १ । ४ ।
† प्रसजत इति १ । ३ । ४ ।
‡ समानदोषप्रसङ्ग इति ४ ।
§ कार्यानैकत्वादिति १ । ३ । ४ । ५ ।
|| च ३ । ५ । नास्ति
¶ कार्यानैकत्वादिति ३ । ४ । ५ ।
** प्रसजत इति १ । ३ । ४ ।
†† नास्ति १ । ४ ।
‡‡ नास्ति १ ।
§§ प्रसजत इति १ ।

यत्वं परस्योच्यते प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोष इति । षष्ठे ऽपि परपक्षाभ्युपगमात् समानो दोष इति समानदोषत्वमेवोच्यते नार्थविशेषः कश्चिदस्ति । समानस्तृतीयपञ्चमयोः पुनरुक्तदोषप्रसङ्गः । तृतीयपक्षे ऽपि प्रतिषेधे ऽपि समानो दोष इति समानत्वमभ्युपगम्यते पञ्चमपक्षे ऽपि प्रतिषेधप्रतिषेधे समानो दोषप्रसङ्गो ऽभ्युपगम्यते नार्थविशेषः कश्चिदुच्यतइति । तत्र पञ्चमषष्ठपक्षयोः अर्थाविशेषात् पुनरुक्तदोषः । तृतीयचतुर्थयोर्मतानुज्ञा । प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोरसिद्धिः । कदा षट्पक्षी यदा प्रतिषेधे ऽपि समानो दोष इत्येवं प्रवर्त्तते तदोभयोः पक्षयोरसिद्धिः । यदा तु कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेरित्यनेन तृतीयपक्षो युज्यते तदा विशेषहेतुवचनात् प्रयत्नानन्तरमात्मलाभः शब्दस्य नाभिव्यक्तिरिति सिद्धः* प्रथमपक्षो न षट्पक्षी प्रवर्त्ततइति ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये पञ्चमाध्यायस्याद्यमाह्निकम् ॥

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तं तदिदानीं विभजनीयम् । निग्रहस्थानानि खलु पराजयवस्तून्यपराधाधिकरणानि प्रायेण प्रतिज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्ते † । तेषां विभागः ।

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगो ऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥**

तानीमानि द्वाविंशतिधा विभज्य लक्ष्यन्ते ।

---

* सिद्धिः प्रथमपक्षे इति च ।

† साध्यस्य साधनस्य वा विषयान्तरे ऽबाधितत्वात्कृते तेन हेतुना साधयितुमशक्यं तत्साध्यत्वेन तदसाधकं वा तत्साधनत्वेनोपाददानस्य वादिनः कर्तुरेव निग्रहः । तदुपादानं चाज्ञानेन विपरीतज्ञानेन वेति सामान्यतो द्वे एव निग्रहस्थाने अवान्तरभेदात् पुनर्द्वाविंशतिः । साधयितुमशक्यस्य साध्यत्वेनोपादानादसाधकस्य च हेतोर्हेतुवाक्ये साधनत्वेनोपादानात्प्रतिज्ञादिविषयकाज्ञानविपरीतज्ञानवतः कर्तुर्निग्रहाधिकरणस्य समवायेन कर्ता ऽधिकरणं विषयतया प्रतिज्ञादय इति

## प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥

साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः। निदर्शनम् ऐन्द्रियकत्वादनित्यः शब्दो घटवदिति कृते अपर आह। दृष्टमैन्द्रियकत्वं सामान्ये नित्ये कस्मान्न तथा शब्द इति प्रत्यवस्थिते इदमाह यद्यैन्द्रियकं सामान्यं नित्यं कामं घटो*नित्योऽस्त्विति। स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति पक्षं जहत्प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्येति† ।

## प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तद-र्थनिर्देशः प्रतिज्ञान्तरम्‡ ॥ ३ ॥

प्रतिज्ञातार्थोऽनित्यः शब्दः ऐन्द्रियकत्वाद् घटवदित्युक्ते योऽस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः सामान्यमैन्द्रियकं नित्यमिति तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पादिति दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात्सामान्यमैन्द्रियकं सर्वगतमैन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात्तदर्थनिर्देश इति साध्यसिद्ध्यर्थं कथं यथा घटोऽसर्वगत एवं शब्दोऽप्यसर्वगतो घटवदेवानित्य इति तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा असर्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरं तत्कथं निग्रहस्थानमिति। न

---

सर्वांशपक्षस्यापि प्रतिज्ञाश्रयत्वाविशेषे न विरोधः। तत्त्वशादिनो ऽपि परोक्तदूषणे आभासत्वात् प्रदेश सम्यग्दूषणत्वपक्षेण वा तदाभासत्वावधारणे निग्रहातत्त्वशादिनो ऽपि निग्रहस्थानापत्त्व मानुपपन्नम्। * घटस्तर्थेव नित्यो ऽस्त्विति २। ५।

† ऐन्द्रियकत्वस्य सामान्ये नित्ये ऽपि प्रदर्शनेन तस्य नित्यत्वव्याप्यता न संभवतीति चोदिते दृष्टान्ते घटे ऽपि नित्यत्वमभ्युपगच्छतो वादिन ऐन्द्रियकत्वस्य नित्यत्वव्याप्यत्वेनावधारणात्तेन हेतुना शब्दे ऽपि नित्यतापत्ते [illegible]
[illegible] पगममात्रेण शब्द ऽपि नित्यत्व [illegible]
[illegible] ष्टान्तेन साम्येऽपि शब्दे ऽनित्यत्व [illegible]
चोदिते अस्तु शब्दो नित्य इति कथनमेव प्रतिज्ञाहानिः। सूत्रे तु दृष्टान्तवादस्वपक्षे व्यवस्थित इति दृष्टान्तः स्वपक्षो दृष्टान्तवर्तीति व्युत्पत्त्या दृष्टान्तवर्तिदृष्टान्तशब्दाभ्यां पक्षप्रतिपक्षयोर्विवक्षितत्वात्पक्षपरित्यागे प्रतिज्ञाहानिरिति बोध्यमित्याह।

‡ धर्मविकल्पेन तदर्थनिर्देशः प्रतिज्ञान्तरम् २। तदर्थमिति ५।

§ सर्वदा सर्वमिति २।

प्रतिज्ञायाः साधनं प्रतिज्ञान्तरं किं तु हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः तदे-तदसाधनोपादानमनर्थकमिति । आनर्थक्यान्निग्रहस्थानमिति* ।

## प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः† ॥ ४ ॥

गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा । रूपादितोऽर्थान्तरस्यानुपलब्धेरि-ति हेतुः सोऽयं प्रतिज्ञाहेत्वोर्विरोधः । कथं यदि गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते । अथ रूपादिभ्योऽर्थान्तरस्या-नुपलब्धिः गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते व्याहन्यते न संभवतीति ।

## पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥

अनित्यः शब्दः ऐन्द्रियकत्वादित्युक्ते परो ब्रूयात्सामान्यमैन्द्रियकं न चानित्यमेवं शब्दोऽप्यैन्द्रियको न चानित्य इति । एवं प्रतिषिद्धे पक्षे यदि ब्रूयात् कः पुनराह अनित्यः शब्द इति । सोऽयं प्रतिज्ञातार्थनिह्नवः प्रति-ज्ञासंन्यास इति‡ ।

## अविशेषोक्ते हेतौ प्रतिषिद्धे विशेष-मिच्छतो हेत्वन्तरम् ॥ ६ ॥

निदर्शनम् एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा कस्माद्धेतोरेकप्रकृतीनां विकाराणां परिमाणात् मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणं यावान्प्रकृते-र्व्यूहो भवति तावान्विकार इति दृष्टं च प्रतिविकारं परिमाणम् । अस्ति चेदं

---

* अनर्थकत्वे सत्यैन्द्रियकत्वस्य सामान्यव्यावृत्तस्यानित्यत्वव्याप्यतायां वादिना विव-क्षितत्वे ऽपि तथा ऽनिर्देशात्तदर्थकत्वस्य साध्यत्वेन निर्दिष्टत्वात्तिन्नाशकत्वापि तास्मि तथापि च प्रतिज्ञान्तरासाधकत्वादिदं निग्रहस्थानम् ।

† अत्र प्रतिज्ञाहेत्वोरिति प्रतियोगिद्वयमात्रोपलक्षणपरं तेन दृष्टान्ताद्-योर ऽपि प्रतियोगिन उन्नेयाः । एतदुक्तं भवति येषां वाक्यगतानां पदार्थानां मिथो व्याघातः प्रतीयते प्रमाणान्तरं च विरोधकं स विरोधो नाम निग्रहस्थानं लक्षयित-तस्य प्रतिज्ञाग्रहणस्य व्युपलक्षणार्थत्वात् । ता० टी० । अत एव यत्र प्रतिज्ञा हेतुना विरु-ध्यते प्रतिज्ञा स्ववचनेनैव वा हेतुर्वा दृष्टान्तेन प्रमाणान्तरेण वा प्रतिज्ञाहेतू वा प्रमाणान्तरेण तस्य सर्वस्याप्यनेनैव संग्रह इति वार्तिकम् ।

‡ हेतोः साध्याव्याप्यत्वे प्रतिवादिना प्रदर्शिते तदनैकान्तिकत्वमुद्धिधीर्षुणा साध्याप-लापे कृते साध्यस्यैवानिर्देशे तद्व्यभिचारस्यान्यत्र प्रदर्शयितुमशक्यतया तदभ्युपगम्य पश्चात्तद्-व्यभिचारप्रदर्शनापेक्षया ऽभ्युपगतसाध्यत्यागस्यैव निग्रहस्थानत्वोद्भावने प्रथममुपतिष्ठत इति तेनैव प्रत्ययस्योपक्रमिति भावः ।

परिमाणं प्रतिव्यक्तं सदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामो व्यक्तमिदमेकप्रकृतीति । अस्य व्यभिचारेण प्रत्यवस्थानं नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति । एवं प्रत्यवस्थिते* आह एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात् । सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते तत्र प्रकृत्यन्तररूपसमन्वयाभावे† सत्येकप्रकृतित्वमिति । तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति । सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानं हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते नेदं व्यक्तमेकप्रकृति भवति प्रकृत्यन्तरोपादानात् अथ नोपादीयते दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधकभावानुपपत्ते रानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थानमिति‡ ।

## प्रकृतादर्थादप्रतिसंबन्धार्थमर्थान्तरम् ॥ ७ ॥

यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात् नित्यः शब्दो ऽस्पर्शत्वादिति हेतुः । हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तं पदं पदं च नामाख्यातोपसर्गनिपाताः अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम क्रियाकारकसमुदायः कारकसङ्ख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातं धात्वर्थमात्रं च कालाभिधानविशिष्टं प्रयोगेष्वर्थादभिद्यमानरूपा निपाताः उपसृज्यमानाः क्रियाद्योतकाः§ उपसर्गाः इत्येवमादि तदर्थान्तरं वेदितव्यमिति‖ ।

---

* उक्तवते । इति २ । † समन्वयाभाव इति २ ।

‡ साधनान्तरोपादाने पूर्वस्यासामर्थ्यख्यापनान्निग्रहस्थानत्वं सामर्थ्ये वा हेत्वन्तरं व्यर्थमिति । न्या वा । दत्तोत्तरोऽसत्येव वादिनि यदि प्रतिवादी हेतुं व्यभिचारयति वादी तृतीयपक्षे स्थितो हेतुं विशेषयति तदा साधनान्तरोपादानाद्विगृह्यतामुतानैकान्तिकसाधनोपादानाच्च तावदनैकान्तिकसाधनोपादानादस्य निग्रहो हेतुर्विशेषणेन समाहितत्वात्तस्माद्धेत्वन्तरवचनादेव निगृह्यते पूर्वस्य वस्तुतो ऽसमर्थस्यासामर्थ्यख्यापनार्थत्वात्सामर्थ्ये वा हेत्वन्तरानर्थक्यमिति । ता टी ।

§ क्रियापदं द्योतका इति २ ।

‖ अभ्युपगतार्थासंगतत्वान्निग्रहस्थानम् । न्या वा । यथा च साधनवादिनो ऽर्थान्तरं निग्रहस्थानमेवमुत्तरवादिना ऽपि द्रष्टव्यम् । ता टी ।

## वर्णक्रमनिर्देशवन्निरर्थकम्* ॥ ८ ॥

यथा नित्यः शब्दः कचटतपाः† जबगडदशत्वात् झभञ्घढधषवदिति एवंप्रकारं निरर्थकम् । अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावाद् वर्णाः क्रमेण निर्दिश्यन्त इति ।

## परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥

यद्वाक्यं परिषदा प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते‡ श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातमविज्ञातार्थमसामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति ।

## पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम्§ ॥ १० ॥

यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्ति इत्यसंबद्धार्थत्वं गृह्यते तत्समुदायार्थस्यापायादपार्थकम् । यथा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्|| कुमार्य्याः पाय्यं तस्याः पिता अप्रतिशीन¶ इति ।

## अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥

प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः तत्रावयवविपर्यासेन वचनमप्राप्तकालमसंबद्धार्थं निग्रहस्थानमिति** ।

## हीनमन्यतमेनाप्यवयवेन न्यूनम्†† ॥ १२ ॥

---

* वर्णक्रमनिर्देशवदिति वृत्तिः । वर्णक्रमनिर्देशमात्रस्य विवक्षितार्थाबोधकत्वमत्रस्थाप्यस्ति तथा यथा साध्यनिर्देशे प्रतिवादिनो बोधानुत्पत्तेस्तुल्यत्वात् । अर्थं च बोधोद्देश्ये बोधाजनकत्वे बोधजनकपदस्यानुपादाने सर्वत्र निग्रहस्थानं तेन कपोलवादिवादौ नातिप्रसङ्गः ।

† कचटतपानामिति च ।

‡ वादिना त्रिरभिहितमपि परिषदा प्रतिवादिना च न विज्ञायत इत्यन्वयः । अविज्ञाने हेतुः श्लिष्टशब्दत्वादिः । प्रायेण त्रिरभिधाने बोधानुत्पत्तिर्नोपपद्यत इति त्रिरित्युक्तम् ।

§ वाक्यार्थशून्यत्वं निरर्थकत्वम् । समुदायार्थशून्यत्वमपार्थकत्वम् । इति भेदः ।

|| अधरोरुकमेतदिति च । ¶ अप्रतिशीत इति च ।

** प्रतिज्ञादिप्रयोगस्य क्रमिकतायाः प्रथमाध्याये व्यवस्थापितत्वाद् व्युत्क्रमेण प्रयोगे झटिति विवक्षितार्थाबोधात् अर्थक्रमेण शब्दप्रयोगस्य कर्तुमुचितत्वेन तदुल्लङ्घने वादिनो ऽसामर्थ्यसूचनादिति भावः ।

†† अवयवपञ्चकमध्ये एकतमस्याप्यनुपादाने विवक्षितार्थासिद्धेः प्रथमाध्याये निर्णीतत्वादिति भावः ।

प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्रहस्थानं साधनाभावे साध्यासिद्धिरिति ।

**हेतूदाहरणाधिकमधिकम्* ॥ १३ ॥**

एकेन कृतत्वाद् अन्यतरस्यानर्थक्यमिति तदेतन्नियमाभ्युपगमे वेदितव्यमिति ।

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥**

अन्यत्रानुवादात् शब्दपुनरुक्तमर्थपुनरुक्तं वा नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तमर्थपुनरुक्तमनित्यः शब्दो निरोधधर्मको ध्वान इति । अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः ।

यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति† ।

**‡अर्थादापन्नस्य स्वशब्देन पुनर्वचनम्§ ॥ १५ ॥**

पुनरुक्तमिति प्रकृतम् । निदर्शनम् उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वा अर्थादापन्नस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयादनुत्पत्तिधर्मकं नित्यमिति तच्च पुनरुक्तं वेदितव्यम् । अर्थसम्प्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति ।

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्य‖प्रत्युच्चारणमननुभाषणम्¶ ॥ १६ ॥**

विज्ञातस्य वाक्यार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमिति । अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयात् ।

**अविज्ञातं चाज्ञानम् ॥ १७ ॥**

विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदविज्ञातं तदज्ञानं निग्रहस्थानमिति । अयं खल्वविज्ञाय कस्य** प्रतिषेधं ब्रूयादिति ।

---

* एकेन हेतुना दृष्टान्तेन वा साध्यसिद्धौ निष्पन्नायां हेत्वन्तरस्य दृष्टान्तान्तरस्य वा प्रतिपक्षस्येवासाधनस्य साधनबुद्ध्या प्रयोगे विप्रतिपत्तेः सत्त्वात् । नियमानभ्युपगमे तु सम्भवतामनेकेषामपि प्रयोगः ।   † नास्ति २ ।   ‡ अत्रापि पूर्ववद्वैयर्थ्येन निग्रहस्थानत्वम् ।

§ पुनरभिधानमिति ५ ।   ‖ अनुच्चारणमिति ४ ।

¶ दूषयितुमिष्टस्य हेतोर्दृष्टान्तस्य वा अप्रत्युच्चारणे कटित्युत्तरमात्राभिधाने दूषणाधिकरणस्याप्रतिपत्तेः यावानंशो दूषयितव्यस्तावतः प्रत्युच्चारणमवश्यं कार्यमिति भावः ।

** अविज्ञापकस्येति ।

**उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥**

परपक्षप्रतिषेधे* उत्तरं यदा न प्रतिपद्यते तदा निगृहीतो भवति ।

**कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥ १९ ॥**

यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति इदं मे करणीयं विद्यते तस्मिन्नवसिते पश्चात्कथयामीति† विक्षेपो नाम निग्रहस्थानम् । एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति ।

**‡स्वपक्षदोषाभ्युपगमात् परपक्षे§ दोषप्रसङ्गो मतानुज्ञा‖ ॥ २० ॥**

यः परेण चोदितं दोषं स्वपक्षे ऽभ्युपगम्यानुद्धृत्य वदति भवत्पक्षे ऽपि समानो दोष इति स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यत इति ।

**निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्¶ ॥ २१ ॥**

पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः तस्योपेक्षणं निग्रहस्थानं प्राप्तो ऽसीत्यननुयोगः । एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वचनीयं न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति ।

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २२ ॥**

निग्रहस्थानलक्षणस्य मिथ्याऽध्यवसायादनिग्रहस्थाने निगृहीतो ऽसीति परं ब्रुवन् निरनुयोज्यानुयोगाद् निगृहीतो वेदितव्य इति ।

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गो ऽपसिद्धान्तः** ॥ २३ ॥**

---

* प्रतिरोध इति ४ । † पश्चात्कथयिष्यामीति २ कथयिष्यामीति ४ ।

‡ स्वपक्ष दोषादिति २ । ४ । § परपक्षेदोष इति ४ ।

‖ दूषणोद्धाराभावे तदङ्गीकारेण तदप्रतिपत्तेर्वचनात् ।

¶ वादिना स्वसाधनगतदूषणस्योद्भावनाऽनुपपत्ते प्रतिवादिनः स्वेनैव स्वनिग्रहायोगात्परिषदा तदुद्भावनीयम् । सम्यक्साधनोपन्यासे वादिना कृते प्रतिवादिन उत्तराप्रतिपत्तिरप्रतिभा साधनाभासोपन्यासे उत्तराप्रतिपत्तिः पर्यनुयोज्योपेक्षणमिति विशेषः । ता॰ टी॰ ।

** प्रतिज्ञातार्थव्यतिरेकेणाभ्युपगतार्थपरित्यागादपसिद्धान्ते । न्या॰ वा॰ । तेन प्रतिज्ञाहानेर्भेदः ।

कस्य चिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययाद् असंयमात् कथां प्रसञ्जयतो ऽपसिद्धान्तो वेदितव्यः । यथा न सदात्मानं जहाति न सतो विनाशो नासदात्मानं लभते नासदुत्पद्यतइति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति । एकप्रकृतीदं व्यक्तं विकाराणामन्वयदर्शनात् । मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वं तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते तस्मात्समन्वयदर्शनात्सुखादिभि*रेकप्रकृतीदं शरीरमिति† । एवमुक्तवाननुयुज्यते अथ प्रकृतिर्विकारः‡ इति कथं लक्षितव्यमिति । यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः यत्तु धर्मान्तरं प्रवर्तते स विकार इति सो ऽयं प्रतिज्ञातार्थविपर्ययाद्§ अनियमात् कथां प्रसञ्जयति प्रतिज्ञातं खल्वनेन नासदाविर्भवति न सत्तिरोभवतीति सदसतोश्च तिरोभावाविर्भावमन्तरेण न कस्य चित्प्रवृत्तिः प्रवृत्त्युपरमश्च भवति । मृदि खल्ववस्थितायां भविष्यति शरावादिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति अभूदिति च प्रवृत्त्युपरमः तदेतन्मृद्धर्माणामपि न स्यात् । एवं प्रत्यवस्थितो यदि सत‖श्चात्महानमसतश्चात्मलाभमभ्युपैति तदस्यापसिद्धान्तो निग्रहस्थानं भवति अथ नाभ्युपैति पक्षो ऽस्य न सिध्यति ।

## हेत्वाभासाश्च यथोक्ताः ॥ २४ ॥

हेत्वाभासाश्च निग्रहस्थानानि । किं पुनर्लक्षणान्तरयोगाद् हेत्वाभासाश्च¶ निग्रहस्थानत्वमापन्नाः यथा प्रमाणानि प्रमेयत्वमित्यत आह । यथोक्ता इति । हेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति । तइमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्चेति ।

योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम्** ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये पञ्चमो ऽध्यायः ॥ ५ ॥

शुभम् ॥

---

* सुखदुःखादिभिरिति २ । ५ । † विश्वमिति २ । ५ ।
‡ प्रकृतिविकार इति ४ । § प्रतिज्ञातार्थेति ४ । ‖ सतत इति २ । ५ ।
¶ हेत्वाभासा निग्रहस्थानत्वमापन्ना इति ३ । ४ । ५ ।
** अयं श्लोको लिखितपुस्तकेषु २ । ३ । ४ । दृश्यते ।